# शेठ देवचंद लालभाई जैन पुस्तकोद्धार फण्ड.




जव्हेरी बजार-मुंबई. संवत् १९८४ गोपीपुरा-सुरत.

६०००-४-२८.

श्रीकृष्ण रुलींग प्रेस.
मुस्तफा मारकेट, धनजी स्ट्रीट, मुंबई.

श्रेष्ठि-देवचन्द-लालभाई-जैनपुस्तकोद्धारे ग्रन्थाङ्कः ७८.

श्रीमहोपाध्यायकीर्तिविजयशिष्य-महोपाध्याय-श्रीविनयविजयगणयुपज्ञः

# श्रीलोकप्रकाशः।

## ( तृतीयविभागे-काललोकप्रकाशे त्रयस्त्रिंशत्तमः सर्गः )

मुद्रणकारिका-श्रेष्ठि-देवचन्द-लालभाई-जैनपुस्तकोद्धारसंस्था।
प्रसिद्धिकारकः-जीवनचन्द-साकरचन्दः जव्हेरी, अस्याः कार्यवाहकः।
इदं पुस्तकं मोहमय्यां जीवनचन्द-साकरचन्द जव्हेरी इत्यनेन
निर्णयसागरमुद्रणालये कोलभाटवीथ्यां २६-२८ तमे रामचंद्र येसू शेडगेद्वारा मुद्रापितम्।
वीरसम्वत् २४५८. विक्रमसंवत् १९८८. खिस्ताब्दः १९३२.
प्रति १००० ] पण्यम् रूप्यकद्वयम्. [ Rs. 2-0-0

Printed by-Ramchandra Yesu Shedge, at the "Nirnaya-Sagar" Press, No 26-28, Kolbhat Lane, Bombay.
Published-by Jivanchand Sakerchand Javeri, for Sheth Devchand Lalbhai Jain Pustakoddhar Fund, at the Sheth Devchand Lalbhai Dharmashâlâ, Badekhan Chakla, Surat.



श्रेष्ठी देवचन्द लालभाई जव्हेरी.

| | |
|---|---|
| जन्म १९०९ वैक्रमाब्दे<br>कार्तिकशुक्लैकादश्यां (देवदीपावली सोमवासरे)<br>सूर्यपूरे. | निर्याणम् १९६२ वैक्रमाब्दे<br>पौषकृष्णतृतीयायाम्(मकरसंक्रान्तमंदवासरे)<br>मुम्बय्याम्. |

**The Late Sheth Devchand Lalbhai Javeri.**

**Born 22nd Nov. 1852 A. D. Surat, Died 13th January 1906 A. D Bombay.**

7-27 :-Copies 5000.

N. S. P.

॥ श्रीजिनाय नमः ॥

## ॥ अथ श्रीकाललोकप्रकाशे अष्टाविंशतितमः सर्गः प्रारभ्यते ॥

केवलालोकवत्रैकालिकीमुल्लासयन् धियम् । श्रीमान् शङ्खेश्वरः पार्श्वो, वितनोतु सतां श्रियम् ॥ १ ॥ स्वरूपं दिष्टलोकस्य, जिनोद्दिष्टमथ ब्रुवे । गुरुश्रीकीर्त्तिविजयक्रमसेवाऽऽप्तधीधनः ॥२॥ लोकानुभावतो ज्योतिश्चक्रं भ्रमति सर्वदा । नृक्षेत्रे तद्गतिभवः, कालो नानाविधः स्मृतः ॥ ३ ॥ तथोक्तं ज्योतिष्करण्डे—"लोगाणुभागजणिअं, जोइसचक्कं भणंति अरिहंता । सव्वे कालविसेसा जस्स गइविसेसनिप्फन्ना ॥ ४ ॥" अत्राहुः केऽपि जीवादिपर्यायां वर्त्तनादयः । काल इत्युच्यते तज्ज्ञैः, पृथग् द्रव्यं तु नास्त्यसौ ॥ ५ ॥ तथाहि—जीवादीनां वर्त्तना च, परिणामोऽप्यनेकधा । क्रिया परापरत्वं च, स्यात्कालव्यपदेशभाक् ॥ ६ ॥ तत्र च–द्रव्याणां सादिसान्तादिभेदैः स्थित्यां चतुर्भिदि । यत्केनचित्प्रकारेण, वर्त्तनं वर्त्तना हि सा ॥ ७ ॥ द्रव्याणां या परिणतिः, प्रयोगविस्रसादिजा । नवत्वजीर्णताद्या च, परिणामः स कीर्त्तितः ॥८॥ भूतत्ववर्त्तमानत्वभविष्यत्त्वविशेषणा । यानस्थानादिकाऽर्थानां, या चेष्टा सा क्रियोदिता ॥९॥ पूर्वभावि परं पश्चाद्भावि चापरमिष्यते । द्रव्यं यदाश्रयादुक्ते, ते परत्वापरत्वके ॥ १० ॥ एवं च द्रव्यपर्याया, एवामी वर्त्तनादयः । संपन्नाः कालशब्देन, व्यपदेश्या भवन्ति ये ॥११॥ पर्यायाश्च कथंचित्स्युर्द्रव्याभिन्नास्ततश्च ते । द्रव्यनाम्नाऽपि कथ्यन्ते, जातु

प्रोक्तं यदागमे ॥ १२ ॥ तद्यथा—"किमिदं भंते ! कालेत्ति पवुच्चति ?, गो० ! जीवा चेव अजीवा चेव"त्ति,
अत्र द्रव्याभेदवर्त्तिवर्त्तनादिविवक्षया । कालोऽपि वर्त्तनाद्यात्मा, जीवाजीवतयोदितः ॥ १३ ॥ वर्त्तना-
द्याश्च पर्याया, एवेति प्राग् विनिश्चितम् । तद्वर्त्तनादिसंपन्नः, कालो द्रव्यं भवेत्कथम् ? ॥ १४ ॥ पर्यायाणां
हि द्रव्यत्वेऽनवस्थाऽपि प्रसज्यते । पर्यायरूपस्तत्कालः, पृथग् द्रव्यं न संभवेत् ॥ १५ ॥ इत्थं चैतदुरीकार्य,
वर्त्तनाद्यात्मकोऽन्यथा । कालास्तिकायः स्वीकार्यो, भवेद्व्योमेव सर्वगः ॥ १६ ॥ न चार्हदिष्टादिष्टं तत्,
सिद्धान्ते यत्पुनः पुनः । पञ्चास्तिकाया एवोक्ताः, कालो द्रव्यं पृथक् न तत् ॥ १७ ॥ परे त्वाहुः समद्रव्य-
प्रवर्त्ती वर्त्तनादिकः । पर्यायः कालनामा मा, पृथग् द्रव्यं भवत्वहो ॥ १८ ॥ किंतु योऽर्कादिचाराभिव्यङ्ग्यो
नृक्षेत्रमध्यगः । कालो न स्यात्कथं कार्यानुमेयः परमाणुवत् ? ॥१९॥ यच्छुद्धपदवाच्यं तत्, सदित्यनुमितेरपि । २०
षष्ठं द्रव्यं दधत् सिद्धिं । कालाख्यं को निवारयेत् ? ॥ २० ॥ कालद्रव्ये चासति तद्विशेषाः समयादयः । कथं
नु स्युर्विशेषा हि, सामान्यानुचराः खलु ॥ २१ ॥ समयाद्याश्च कालस्य, विशेषाः सर्वसंमताः । जगत्प्र-
सिद्धाः संसिद्धाः, सिद्धान्तादिप्रमाणतः ॥ २२ ॥ किंच—सहैव स्यात्किसलयकलिकाफलसंभवः । एषां
नियामके कालरूपे द्रव्येऽसति क्षितौ ॥ २३ ॥ बालो मृदुतनुर्दीप्रदेहश्च तरुणः पुमान् । जीर्णाङ्गः स्थविरश्चेति,
विना कालं दशाः कथम् ? ॥ २४ ॥ ऋतूनामपि षण्णां यः, परिणामोऽस्त्यनेकधा । न संभवेत्सोऽपि कालं, २५
विनाऽतिविदितः क्षितौ ॥ २५ ॥ तथाहि—हिमातिपाताद्धेमन्ते, प्रत्यग्नि शलभा इव । कम्प्रकाया रणद्दन्ताः, ॥३६९॥ २७

पतन्ति मुदिता जनाः ॥ २६ ॥ जनयन्ति जने जाड्यं, तुषाराश्लेषिणोऽनिलाः । परिष्वजन्ति नीरन्ध्रं, युवानः
कामिनीर्निशि ॥ २७ ॥ महासरांसि स्त्यायन्ति, दह्यतेऽम्भोजिनीवनम् । उज्जृम्भते नवोद्भिन्नयवादिषु च
यौवनम् ॥ २८ ॥ अबहिश्चारिणां रात्रौ, शिशिरेऽसंवृतात्मनाम् । असंयम इवर्षीणां, विशां स्यादप्रियः शशी
॥ २९ ॥ पूर्णोत्सङ्गाः फलैः पक्वैर्वृत्ताः शिशुकदम्बकैः । बदर्यो मातर इव, दधति द्युतिमद्भुताम् ॥ ३० ॥ कुन्द-
वल्लयः शुभ्रदीप्रप्रसूनदशनश्रियः । हसन्तीव हिमम्लानाननं कमलकाननम् ॥ ३१ ॥ उत्फुल्लनानाकुसुमासव-
पानमदोद्धुराः । भ्राम्यन्ति भ्रमरा भूरिरजोधूसरभूघनाः ॥ ३२ ॥ दत्ताश्रया दत्तभोज्या, माकन्दैरुपकारिभिः । ५
अभ्यस्यन्तीव कामोपनिषदं कोकिलद्विजाः ॥ ३३ ॥ ग्रीष्मे दिनकरः क्रूरैः, करैः शोषयति क्षितिम् । कलौ
नृप इवोदेति, तृष्णा लोकेऽधिकाधिका ॥ ३४ ॥ आग्याढ्यानां धनमिव, वर्द्धतेऽनुदिनं दिनम् । निरुद्य-
मानां विद्येव, क्षीयते चानिशं निशा ॥ ३५ ॥ चन्द्रचन्दननिर्यासवासिताङ्गा विलासिनः । नयन्त्यहा-
न्युपवनेष्वम्बुक्रीडापरायणाः ॥ ३६ ॥ वर्षासु जलमुग्धाराधोरणीधौतधूलयः । कृतस्नाना धराधीशा, इवा-
भान्ति धराधराः ॥ ३७ ॥ मही भाति महीयोभिः, सर्वतो हरिताङ्कुरैः । रोमाञ्चितेवाम्बुवाहप्राणप्रियसमाग- १०
मात् ॥३८॥ रुन्धन्ति सरितो लोकं, मार्गगं कुलटा इव । प्रिया इव प्रियान् गाढमालिङ्गन्ति लतास्तरून् ॥३९॥
द्योतन्ते विद्युतो मेघा, वर्षन्त्यूर्जितगर्जिताः । उच्चैर्नदन्तो माद्यन्ति, शिखिचातकदर्दुराः ॥ ४० ॥ उपैति वृद्धिं
शरदि, प्रतापः पुष्पदन्तयोः । नृपान्तिकेऽन्यायिवक्त्रमिव शुष्यति कर्दमः ॥ ४१ ॥ शालिप्रभृतयो धान्य- १४

श्रेणयो नम्रमौलयः। फलोद्रेकेऽपि विनयाद्धयन्ति सतां स्थितिम् ॥ ४२ ॥ क्रीडन्ति फुल्लाम्भोजेषु, सरस्सु स्वच्छवारिषु । राजहंसा राजहंसा, इव दर्पणवेश्मसु ॥ ४३ ॥ शनैः शनैः संचरन्ति, शालिक्षेत्रान्तभूमिषु । प्रसरद्गोपिकागीतदत्तकर्णाः प्रवासिनः ॥ ४४ ॥ उच्चैरुपदिशन्तीव, मञ्चस्थाः क्षेत्ररक्षकाः । परोपकारं धान्येषु, धुतमौलिषु विस्मयात् ॥ ४५ ॥ रक्षितेष्वपि जाग्रद्भिर्दृषद्व्यग्रकरैर्नरैः । परक्षेत्रेष्वापतन्ति, पक्षिणः कामुका इव ॥ ४६ ॥ एवं नानाविधो लोके, ऋतुभेदोऽपि विश्रुतः । निर्हेतुको भवन् कालं, स्वमाक्षिपति कारणम् ॥ ४७ ॥ तथाहि—चूताद्याः शेषहेतूनां, सत्त्वेऽपि फलवञ्चिताः । कालद्रव्यमपेक्षन्ते, नानाशक्तिसमन्वितम् ॥ ४८ ॥ किंच–वर्तमानातीतभाविव्यपदेशोऽपि दुर्घटः । विना कालं मिथोऽर्थानां, सांकीर्ण्यं चापि संभवेत् ॥ ४९ ॥ तथाहि—वर्त्तमानव्यपदेशमतीतोऽनागतोऽपि वा । भजेन्नियामकाभावे, तत्कालोऽस्ति नियामकः ॥ ५० ॥ तत्रातीतो द्विधा भावविषयप्रतिभेदतः । विनष्टो घट इत्याद्योऽद्राक्षं तमिति चापरः ॥ ५१ ॥ भाव्यप्येवं द्विधा तत्रादिम उत्पत्स्यमानकः । घटाद्यर्थो द्वितीयस्तु, गमिष्यन्नक्षगोचरम् ॥ ५२ ॥ किंच–क्षिप्रं चिरं च युगपन्मासवर्षयुगादयः । परुत्परार्यैषमोऽद्यह्यःश्वःकदाचिदादयः ॥ ५३ ॥ लोके ख्याताः सन्ति शब्दाः, कालद्रव्याभिधायिनः । तेऽपि शुद्धपदत्वात्स्वाभिधेयमनुमान्ति वै ॥ ५४ ॥ कालः षष्ठं पृथग् द्रव्यमागमेऽपि निरूपितम् । कालाभावे च तानि स्युः, सिद्धान्तोक्तानि षट् कथम् ? ॥ ५५ ॥ तथा चागमः—'कइ णं भंते ! दव्वा पं० ?, गो० ! छ दव्वा पं०, तं०–धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए



पुग्गलत्थिकाए जीवत्थिकाए अद्धासमए य' एवं कालः पृथग्द्रव्यं, सिद्धो युक्त्याऽऽगमेन च । उपकाराश्च तस्य स्युः, पूर्वोक्ता वर्त्तनादयः ॥ ५६ ॥ वर्त्तनादिस्वरूपं च, सामान्येनोदितं पुरा । अथ किंचिद्विशेषेणोच्यते शास्त्रानुसारतः ॥ ५७ ॥ तत्र च–द्रव्यस्य परमाण्वादेर्या तद्रूपतया स्थितिः । नवजीर्णतया वा सा, वर्त्तना परिकीर्त्तिता ॥५८॥ इति महाभाष्यवृत्त्यभिप्रायः, तथा च तत्पाठः—"अत्रैव तत्तत्परमाण्वादिरूपेण परमाण्वादिद्रव्याणां वर्त्तनं वर्त्तना" इति १४९ तमपत्रे, तथा "तत्र विवक्षितेन नवपुराणादिना तेन तेन रूपेण यत्पदार्थानां वर्त्तनं–शश्वद्भवनं सा वर्त्तना" इत्याद्यपि तत्रैव २७८ पत्रे । तथा तैस्तैर्भावैः स्वतो ह्यर्था वर्त्तन्ते, तत्प्रयोजिका वृत्तिः कालाश्रया या सा वर्त्तनेत्यभिधीयते इति तत्त्वार्थवृत्त्याशयः, तथा च तद्वचः–"वर्त्तना कालाश्रया वृत्तिरिति, वर्त्तन्तेऽर्थाः स्वयमेव, तेषां वर्त्तमानानां कालाश्रया वृत्तिः वर्त्यते यया सा वर्त्तना" इति १६८ तमपत्रे । धर्मसंग्रहणीवृत्तेरप्ययमेवाशयः । इति वर्त्तना ॥ नानाविधा परिणतिर्द्रव्यस्य सत एव या । परिणामः स कुम्भादिर्मृद्द्रव्यादेरिवोदितः ॥ ५९ ॥ यथाऽङ्कुराद्यवस्थस्य, परिणामो वनस्पतेः । मूलकाण्डादिभावेन, स्वजात्यपरिहारतः ॥ ६० ॥ यथा वयःपरीणामो, देहद्रव्यस्य चाङ्गिनाम् । दध्यादिपरिणामो वा, द्रव्यस्य पयसो यथा ॥ ६१ ॥ हेम्नो वा मौलिमुद्रादिभावैः परिणतिर्यथा । परिणामो विफणत्वोत्फणत्वादिरहेर्यथा ॥ ६२ ॥ द्विधा सादिरनादिश्च, स चाद्योऽभ्रादिगोचरः । धर्माधर्मास्तिकायादिगोचरः स्यात्ततोऽपरः ॥ ६३ ॥ त्रिधा यद्वा परीणामस्तत्राद्यः स्यात्प्रयोगजः । द्वितीयस्तु वैस्रसिकस्तृतीयो मिश्रकः

॥३७१॥

स्मृतः ॥ ६४ ॥ तत्र जीवप्रयत्नोत्थः, परिणामः प्रयोगजः । शरीराहारसंस्थानवर्णगन्धरसादिकः ॥ ६५ ॥ केवलोऽजीवद्रव्यस्य, यः स वैस्रसिको भवेत् । परमाण्वभ्रेन्द्रधनुःपरिवेषादिरूपकः ॥ ६६ ॥ प्रयोगसहचरिताचेतनद्रव्यगोचरः । परिणामः स्तम्भकुम्भादिकः स मिश्रको भवेत् ॥ ६७ ॥ अशक्ताः स्वयमुत्पत्तुं, परिणामेन तादृशा । कुम्भादयः कुलालादिसाचिव्येन भवन्ति हि ॥ ६८ ॥ इति परिणामः । क्रिया देशान्तरप्राप्तिरूपाऽतीतादिका तथा । प्रोक्ता भाष्यस्य टीकायां, तत्त्वार्थविवृतौ पुनः ॥ ६९ ॥ करणं स्यात्क्रिया द्रव्यपरिणामात्मिका च सा । कालोऽनुग्राहकस्तस्याः, प्रयोगादेस्त्रिधा च सा ॥ ७० ॥ तत्र च—प्रयोगजाऽऽत्मयोगोत्था, विस्रसाजा त्वजीवजा । मिश्रा पुनस्तदुभयसंयोगजनिता मता ॥ ७१ ॥ इति क्रिया । प्रशंसाक्षेत्रकालाख्यभेदतस्त्रिविधं मतम् । परत्वमपरत्वं च, तत्राद्यं गुणसंभवम् ॥ ७२ ॥ परः सर्वोत्तमत्वेन, जैनो धर्मः परोऽपरः । क्षेत्रजं तत्तु दूरस्थः, परोऽभ्यर्णगतोऽपरः ॥ ७३ ॥ तथा—अभ्यर्णदेशसंस्थोऽपि, पर एव वयोऽधिकः । वयोलघुर्विप्रकृष्टदेशस्थोऽप्युच्यतेऽपरः ॥ ७४ ॥ दिशः परापरत्वाभ्यां, वैपरीत्यात् स्फुटे तु ये । इमे परापरत्वे स्तः, कालोऽनुग्राहकस्तयोः ॥ ७५ ॥ वर्त्तनाद्यास्त्रयः पूर्वोदितास्त्रिषु तथाऽन्तिमम् । परापरत्वं कालस्य, चत्वारोऽनुग्रहा अमी ॥ ७६ ॥ तथोक्तं तत्त्वार्थभाष्ये—"अथ कालस्योपकारः क इति, अत्रोच्यते—वर्त्तना परिणामः क्रिया परापरत्वे च कालस्य"ति । सार्द्धं द्वीपद्वयं वार्द्धियुगं च व्याप्य स स्थितः । त्रिःपञ्चदशभिर्लक्षैर्योजनानां मतस्ततः ॥ ७७ ॥ नन्वेवं वर्त्तनादीनां, लिङ्गानां भावतो यथा ।

नृक्षेत्रमध्ये कालोऽङ्गीक्रियते श्रुतकोविदैः ॥ ७८ ॥ नृक्षेत्रात्परतोऽप्येष, ऊर्ध्वाधोलोकयोरपि । वर्त्तनादिलिङ्गसत्त्वात्कुतो नाभ्युपगम्यते ? ॥ ७९ ॥ वर्त्तना किल भावानां, वृत्तिः सा तत्र वर्त्तते । आयुःप्राणापानमानं, परापरस्थिती अपि ॥ ८० ॥ अत्रोच्यते—वर्त्तते तत्र भावानां, वृत्तिः सा किं तु नेष्यते । काललिङ्गं तदीयाया, अपेक्षाया अभावतः ॥ ८१ ॥ उत्पद्यन्ते विलीयन्ते, तिष्ठन्ति स्वयमेव हि । सन्तः पदार्थास्तेषां चास्तित्वं नान्यव्यपेक्षया ॥ ८२ ॥ प्राणाद्योऽपि जायन्ते, तत्र नाद्धाव्यपेक्षया । सजातीयेषु सर्वेषु, युगपत्तदनुद्भवात् ॥ ८३ ॥ कालापेक्षाः पदार्था हि, युगपत्तुल्यजातिषु । संभवन्तीह माकन्दादिषु मञ्जरिकादिवत् ॥ ८४ ॥ भवन्ति युगपन्नैव, ताः प्राणादिप्रवृत्तयः । तत्रत्यानां तदेताः स्युः, कालापेक्षा न कर्हिचित् ॥ ८५ ॥ परापरत्वे ये तत्र, कालापेक्षे न ते अपि । स्थित्यपेक्षे किंतु षष्टिवर्षोद्वर्षशतः परः ॥ ८६ ॥ जातवर्षशताचापि, षष्टिवर्षसुरोऽपरः । वत्सराणां शतं षष्टिरित्येषा च स्थितिः खलु ॥ ८७ ॥ स्थितिश्च सर्वभावानां, भवेत्सत्त्वव्यपेक्षया । सत्त्वं चास्तित्वमेव स्यात्तच्च नान्यमपेक्षते ॥ ८८ ॥ एवं च कालापेक्षाया, अभावादेव नोच्यते । तत्रत्यवर्त्तनादीनां, काललिङ्गत्वमुत्तमैः ॥ ८९ ॥ अत्रेदं तत्त्वं प्रतिभासते—भूपसत्त्वाद्यथेह स्यात्सौस्थ्यादि तदपेक्षितम् । भूपाभावात्सदपि तत्तदपेक्षं न युग्मिषु ॥ ९० ॥ तथेह कालसत्त्वात्तत्सापेक्षं वर्त्तनादिकम् । कालाभावात्तदपेक्षं, नरक्षेत्राद्बहिर्न तत् ॥ ९१ ॥ तद्वर्षादिकृतुद्रुमकुसुमादिनैयत्यकारणं कालः । तपनादिगतिव्यङ्ग्यः, समयादिर्ननु नृलोक एव स्यात् ॥ ९२ ॥ ( आर्यागतिः ) कालशब्दस्य निक्षेपाश्चै-

कादश निरूपिताः। तन्नाम १ स्थापना २ कालौ, द्रव्या ३ द्धा ४ संज्ञकौ च तौ ॥ ९३ ॥ यथाऽऽयुष्को-५ पक्रमाख्यौ ६, देश ७ काला ८ भिधौ च तौ। प्रमाण ९ वर्ण १० नामानौ, भाव ११ कालश्च ते स्मृताः ॥ ९४ ॥ सचेतनाचेतनयोर्द्रव्ययोर्यद्विधीयते । कालेत्याख्या स्थापना वा, तौ नामस्थापनाभिधौ ॥ ९५ ॥ द्रव्यमेव द्रव्यकालः, सचेतनमचेतनम् । कालोत्थानां वर्त्तनादिपर्यायाणामभेदतः ॥ ९६ ॥ सचित्ताचित्तद्रव्याणां, सादिसान्तादिभेदजा। स्थितिश्चतुर्विधा यद्वा, द्रव्यकालः प्रकीर्त्यते ॥ ९७ ॥ सचेतनस्य द्रव्यस्य, सादिः सान्ता स्थितिर्भवेत् । सुरनारकमर्त्यादिपर्यायाणामपेक्षया ॥ ९८ ॥ सिद्धाः सिद्धत्वमाश्रित्य, साद्यनन्तां स्थितिं श्रिताः । भव्या भव्यत्वमाश्रित्यानादिसान्तां गताः स्थितिम् ॥ ९९ ॥ जीवो मोक्षस्य योग्यो हि, भव्य इत्युच्यते श्रुते । मोक्षं प्राप्तस्तु नो भव्यो, नाप्यभव्य इतीर्यते ॥ १०० ॥ यदुक्तं—'सिद्धे नो भवे नो अभवे' इति । अभव्याश्चाभव्यतयाऽनाद्यनन्तस्थितौ स्थिताः । द्रव्यस्येति सचित्तस्य, स्थितिरुक्ता चतुर्विधा ॥ १ ॥ द्विप्रदेशादयः स्कन्धाः, स्युः सान्ताः सादयोऽपि च । उत्कर्षतोऽप्यसंख्येयकालस्थितिजुषो हि ते ॥ २ ॥ साद्यनन्ताऽनागताद्धाऽतीता सान्ता निरादिका । अनाद्यनन्ताश्चाकाशधर्माधर्मादयो मताः ॥ ३ ॥ अचेतनस्य द्रव्यस्य, चतुर्द्धेति स्मृता स्थितिः । एवमुक्त्वा द्रव्यकालमद्धाकालमथ ब्रुवे ॥ ४ ॥ सूर्यादिक्रियया व्यक्तीकृतो नृक्षेत्रगोचरः । गोदोहादिक्रियानिर्व्यपेक्षोऽद्धाकाल उच्यते ॥ ५ ॥ तथाहि—यावत्क्षेत्रं स्वकिरणैश्चरन्नुद्द्योतयेद्रविः । दिवसस्तावति क्षेत्रे, परतो रजनी भवेत् ॥ ६ ॥ एवं

सदा प्रवृत्तोऽद्धाकालोऽर्कादिगतिस्फुटः । गोदोहान्नपाचनाद्यामन्यां नापेक्षते क्रियाम् ॥ ७ ॥ अद्धाकालस्यैव भेदाः, समयावलिकादयः । अथो यथायुष्ककालस्वरूपं किञ्चिदुच्यते ॥ ८ ॥ यश्चाद्धाकाल एवासुमतामायुर्विशेषितः । वर्त्तनादिमयः ख्यातः, स यथाऽऽयुष्कसंज्ञया ॥ ९ ॥ अयं भावः—यद्येन तिर्यग्मनुजादिकजीवितमर्जितम् । तस्यानुभवकालो यः, स यथायुष्क उच्यते ॥ १० ॥ येनोपक्रम्यते दूरस्थं वस्त्वानीयतेऽन्तिकम् । तैस्तैः क्रियाविशेषैः स, उपक्रम इति स्मृतः ॥ ११ ॥ उपक्रमणमभ्यर्णानयनं वा दवीयसः । उपक्रमस्तत्कालोऽपि, ह्युपचारादुपक्रमः ॥ १२ ॥ सामाचारी यथायुष्कभेदाच्चोपक्रमो द्विधा । सामाचारी तत्र साधुजनाचीर्णा शुभक्रिया ॥ १३ ॥ तस्या आनयनं प्रौढशास्त्रादुद्धृत्य यत्कचित् । आसन्नतायै लघुनि, शास्त्रे स स्यादुपक्रमः ॥ १४ ॥ अयं भावः—ज्ञानस्यास्याः प्रौढशास्त्राध्ययनाचिरभाविनः । अल्पग्रन्थादाशुकारी, स्यात्सामाचार्युपक्रमः ॥ १५ ॥ ओघः पदविभागश्च, दशधा चेति स त्रिधा । सामाचारीत्रिधात्वेनोपक्रमोऽप्युदितो बुधैः ॥ १६ ॥ तत्र च—ओघात् सामान्यतः साधुसामाचार्या यदीरणम् । ओघसामाचार्यसौ स्यादोघनिर्युक्तिरूपिका ॥ १७ ॥ भवेत्पदविभागाख्या, सामाचारी महात्मनाम् । छेदग्रन्थसूत्ररूपा, दशधेच्छादिका त्वियम् ॥ १८ ॥ इच्छा मिच्छा तहक्कारो आवस्सिया य निसीहिया । आपुच्छणा य पडिपुच्छा छंदणा य निमंतणा ॥ १९ ॥ उवसंपया य काले सामायारी भवे दसहा । इच्छया कुर्विदमिति, रात्निकाद्या दिशन्ति यत् । इच्छाकारेण तत्कुर्यादितीच्छाकार उच्यते ॥ २० ॥ अनाभोगाज्जिनाद्याज्ञाविरुद्धे कथिते कृते । मिथ्याकारं यदाहुर्ज्ञाः, स

मिथ्याकार उच्यते ॥ २१ ॥ गुर्वाद्युक्तेषु सूत्रार्थादिषु कार्येषु वा बुधाः । तथैवमिति यद् ब्रूयुस्तथाकारः स उच्यते ॥ २२ ॥ योगैरवश्यकर्त्तव्यैर्निष्पन्नाऽऽवश्यकी भवेत् । वसत्यादेर्निर्गमे सा, मुनिधुर्यैः प्रयुज्यते ॥२३॥ अप्रस्तुतनिषेधेन, वृत्ता नैषेधिकीति ताम् । कृतकार्या वसत्यादौ, प्रविशन्तः प्रयुञ्जते ॥ २४ ॥ आपृच्छनं स्यादापृच्छा, गुरोः कार्ये चिकीर्षिते । प्रतिपृच्छा कार्यकाले, भूयो यत्पृच्छनं गुरोः ॥ २५ ॥ स्वयं पूर्वं गृहीतेन, गुर्वादेरशनादिना । याऽभ्यर्थना छन्दनाख्या, सामाचारी स्मृताऽऽगमे ॥ २६ ॥ आनयामि युष्मदर्थमशनाद्यादिशन्तु माम् । गुर्वादीनां तदादानात्प्राग् विज्ञप्तिर्निमन्त्रणा ॥ २७ ॥ उपसंपत् पुनर्गच्छान्तराचार्याद्युपासनम् । ज्ञानाद्यर्थं कियत्कालं, सामाचार्यो दशेत्यमूः ॥ २८ ॥ तृतीयं नवमे पूर्वे, यद्वस्त्वाचारनामकम् । तस्य यद्विंशतितममोघाख्यं प्राभृतं महत् ॥ २९ ॥ तत उद्धृत्य कारुण्यधनैः स्थविरधीधनैः । ओघनिर्युक्तिरूपाऽल्पग्रन्थे न्यस्ता महार्थभृत् ॥ ३० ॥ पूर्वादिपाठानर्हाणां, हीनबुद्धिबलायुषाम् । ऐदंयुगीनजीवानामुपकाराय सत्वरम् ॥ ३१ ॥ तदर्थज्ञानतत्सम्यगनुष्ठानार्थमुत्तमैः । आसन्नीकृत्य दत्तौघसामाचारी भवत्यसौ ॥ ३२ ॥ त्रिभिर्विशेषकम् ॥ एवं पदविभागाख्याप्यात्ता नवमपूर्वतः । उत्तराध्ययनादन्त्या, षट्विंशाच्च समुद्धृता ॥ ३३ ॥ ज्ञानमासां हि पूर्वादिपाठसाध्यं चिराद्भवेत् । तदुद्धारात्तु तूर्णं स्यादित्यसौ तदुपक्रमः ॥ ३४ ॥ अनल्पकालवेद्यस्यायुषः संवर्त्तनेन यत् । अल्पकालोपभोग्यत्वं, भवेत्सोपक्रमायुषाम् ॥ ३५ ॥ यथायुष्कोपक्रमाख्यः, स कालः परिकीर्त्तितः । दूरस्थस्यायुरन्तस्य, समीपानयनात्मकः ॥ ३६ ॥ उपक्रमो भवत्येवं,

सर्वेषामपि कर्मणाम् । स्थित्यादिखण्डनद्वारा, प्राप्तानामनिकाचताम् ॥ ३७ ॥ प्रायोऽनिकाचितानां यत्, किल्बिषेतरकर्मणाम् । शुभाशुभपरीणामवशात्स्यादपवर्त्तना ॥ ३८ ॥ निकाचितानामप्येवं, तीव्रेण तपसा भवेत् । स्फूर्जत्शुभपरीणामात्कर्मणामपवर्त्तना ॥ ३९ ॥ तथाहुर्महाभाष्ये—“सव्वपगईणमेवं परिणामवसा उवक्कमो होज्जा । पायमनिकाइयाणं तवसा उ निकाइयाणंपि ॥ ४० ॥” नन्वप्राप्तकालमपि, यद्येवं कर्म भुज्यते । प्रसज्यते तदा नूनं, कृतनाशाकृतागमौ ॥ ४१ ॥ यत्प्रागनल्पस्थितिकं, बद्धं भुक्तं न कर्म तत् । यच्चाल्पस्थितिकं भुक्तं, तद्बद्धं तेन नात्मना ॥ ४२ ॥ अत्रोच्यते–नोपक्रमेण क्रियते, दीर्घस्थितिककर्मणः । नाशः किंत्वध्यवसायविशेषाद्भुज्यते द्रुतम् ॥ ४३ ॥ यथा भूयःकालभोग्यान्, प्रभूतान् धान्यमूढकान् । रुग्णा भस्मकवातेन, नचिरादेव भुञ्जते ॥ ४४ ॥ न चात्र वर्त्तमानानां, धान्यानां विगमो भवेत् । तद्भोगः स्यात्किंतु तूर्णं, न्यायोऽयं कर्मणामपि ॥ ४५ ॥ चिरेण दह्यते रज्जुर्वह्निना वितता यथा । सैव संक्षिप्य निक्षिप्ता, क्षिप्रं भवति भस्मसात् ॥ ४६ ॥ चिरेण पच्यते वृक्षस्थितमाम्रादिकं फलम् । गर्त्ताक्षेपपलालादियुक्त्या तु क्षिप्रमप्यहो ॥ ४७ ॥ विपाकः कर्मणोऽप्येवं, द्विधा प्रोक्तो जिनागमे । यथास्थित्योपक्रमाद्वा, बद्धं कर्म हि भुज्यते ॥ ४८ ॥ नन्वेवं कर्म यद्बद्धं, तत्सर्वं वेद्यमेव चेत् । उपक्रमेणाल्पकालाद्यथास्थित्यथवा चिरात् ॥ ४९ ॥ तदा प्रसन्नचन्द्रादेर्भोगो बद्धस्य कर्मणः । सप्तमावनियोग्यस्य, प्राप्तो दुःखविपाकिनः ॥ ५० ॥ न चास्य श्रूयते दुःखविपाकः सप्तमक्षितेः । अचिरादेव कैवल्यं, प्राप्तस्य शुभभावतः

उपक्रमेऽकृतागमकृतनाशवारणं

॥ ५१ ॥ अत्रोच्यते—यद्बद्धं कर्म तत्सर्वं, प्रदेशपरिभोगतः । अवश्यं भुज्यते जीवै, रसानुभवतः पुनः ॥ ५२ ॥ कर्मानुभूयते किंचित्, किंचित्तु नानुभूयते । तथाविधपरीणामात्तद्रसस्यापवर्तनात् ॥ ५३ ॥ ततः प्रसन्नचन्द्राद्यैः, सप्तमावनिकर्मणाम् । प्रदेशा नीरसा भुक्ता, नानुभागस्तदुद्भवः ॥ ५४ ॥ ननु प्रसन्नचन्द्राद्यैर्बद्धं कर्म रसाश्रितम् । यद्भुक्तं तन्नीरसं तत्कृतनाशाकृतागमौ ॥ ५५ ॥ अत्रोच्यते-परिणामविशेषेण, यद्येषां क्षीयते रसः । किमनिष्टं ? तदा कौ वा, कृतनाशाकृतागमौ ? ॥ ५६ ॥ तीव्रातपोपतप्तस्य, यदीक्षोः क्षीयते रसः । अपूर्वस्यागमः कोऽत्र, जायते वद ? सन्मते ! ॥ ५७ ॥ रसनाशात्कृतनाशो, यः स्यात्स त्विष्ट एव च । तदर्थमेव यतयो, यतन्ते यत्तपोविधौ ॥ ५८ ॥ अवश्यं भुज्यते कर्म, यथाबद्धं तथैव चेत् । तदा तपोविधिः सर्वो, व्यर्थः स्याद्दुरिताक्षयात् ॥ ५९ ॥ मोक्षप्राप्तिश्च कस्यापि, न स्यादेव यतोऽङ्गिनाम् । ध्रुवं तद्भवसिद्धीनामपि कर्मावशिष्यते ॥ ६० ॥ सत्तायामन्तरम्भोधिकोटाकोटिस्थिति स्फुटम् । प्रदेशैर्वेद्यते तच्च, ततस्तन्नीरसं मतम् ॥ ६१ ॥ किंचासंख्यभवोपात्तं, नानागतिनिबन्धनम् । स्यादेव कर्म सत्तायां, तद्भवेऽप्यङ्ग सिद्ध्यतः ॥ ६२ ॥ विपाकरूपेणैवास्य, भवत्यनुभवो यदि । तदा तत्र भवे नानाभवानुभवसंभवः ॥ ६३ ॥ भवांस्तांस्तान् विपाकेनानुभवेद्यद्यनुक्रमात् । तदा पुनः पुनः कर्म, तत्र तत्रार्जयत्यसौ ॥ ६४ ॥ एवं च कर्मसंतानाविच्छेदान्न भवेच्छिवम् । ततः प्रदेशानुभवः, कर्मणोऽस्तीति युक्तिमत् ॥६५॥ आह—चेत्कृत्वोपक्रमैरल्पस्थितिकं कर्म वेद्यते । भवान्तरकृतस्यासौ, न भोगस्तर्हि कर्मणः ॥ ६६ ॥ यद्बद्धं बन्धसमये, भोग्यं



वर्षशतादिभिः । भुक्तं त्वन्तर्मुहूर्त्तेन, तदेवैतत्कथं नु तत् ? ॥ ६७ ॥ किंच—अस्तु सोपक्रमं सर्वं, सर्वं वा निरुपक्रमम् । भेदः कुतः ? कथं नो वा, परावर्त्तोऽनयोर्मिथः ? ॥ ६८ ॥ अत्रोच्यते-बद्धं यद्बन्धसमये, परिणामेन तादृशा । तत्स्यादुपक्रमैः साध्यं, साध्यो रोग इवौषधैः ॥ ६९ ॥ असाध्यरोगवद्यत्तु, परिणामेन तादृशा । बद्धं तदुचितात्कालविपाकादेव नश्यति ॥ ७० ॥ रोगे ह्यसाध्ये शक्तिर्नौषधादेर्विद्यते यथा । कर्मण्युपक्रमाभावस्तथा स्यान्निरुपक्रमे ॥ ७१ ॥ विचित्राणि कर्मबन्धाध्यवसायास्पदानि यत् । वर्त्तन्तेऽसंख्यलोकाभ्रप्रदेशप्रमितानि वै ॥ ७२ ॥ तेषु सोपक्रमकर्मजनकान्येव कानिचित् । कानिचिद्बन्धजनकान्यनुपक्रमकर्मणाम् ॥ ७३ ॥ यादृशाध्यवसायेन, बद्धं यत्कर्म यादृशम् । तद्भोक्तव्यं तथा नैवं, कृतनाशाकृतागमौ ॥ ७४ ॥ क्षेत्रे तुल्येऽपि गन्तव्ये, बहूनां योजनादिके । गतिपाटवभेदेन, कालभेदो यथेक्ष्यते ॥ ७५ ॥ तुल्येऽपि शास्त्रेऽध्येतव्ये, बहूनां ग्रन्थमानतः । बुद्धिपाटवभेदेन, कालभेदो यथेक्ष्यते ॥ ७६ ॥ तुल्येऽपि रोगे भैषज्यपथ्यादितारतम्यतः । निवृत्तिकालो रोगस्य, बहूनां बहुधा यथा ॥ ७७ ॥ समानस्थितिकेऽनेकैर्बद्धे कर्मणि देहिभिः । परिणामविशेषेण, भोगकालस्तथा पृथक् ॥ ७८ ॥ पिण्डीभूतः पटः क्लिन्नश्चिरकालेन शुष्यति । प्रसारितः स एवाशु, तथा कर्माऽऽशूपक्रमैः ॥ ७९ ॥ विनाऽपवर्त्तनां लक्षादिको राशिर्विभज्यते । चिरेणापवर्त्तितस्तु, क्षिप्रं कर्मापि तत्तथा ॥ ८० ॥ द्वेधोपक्रमकालोऽयं, सप्रसङ्गः प्ररूपितः । देशकालाभिधं कालमथ ब्रूमो यथागमम् ॥ ८१ ॥ कार्यस्यार्यस्य वाऽन्यस्य, यो यस्यावसरः स्फुटः । स तस्य देशकालः

स्याद्, द्विधाऽप्येष निरूप्यते ॥८२॥ अन्नपाकक्रियोद्भूतधूमानां प्रशमं पुरे। पानीयहारिणीशून्यं, दृष्ट्वा वाऽप्यवटादिकम् ॥ ८३ ॥ काकांश्चापततो दृष्ट्वा, गृहेषु गृहमेधिनाम् । साधुना लक्ष्यते भिक्षावसरोऽतिसमीपगः ॥८४॥ तथाहुर्भाष्यकाराः–"निद्धूमगं च गामं महिलाथूभं च सुण्णयं दट्ठुं । नीयं च काया ओलेंति जाया भिक्खस्स हरहरा ॥ ८५ ॥" आमोदिमोदकाकीर्णं, शून्यं कान्दविकापणम् । मत्तां गृहाङ्गणे सुप्तां, तथा प्रोषितभर्तृकाम् ॥८६॥ निर्मक्षिकं मधु स्वच्छं, पश्यतां प्रकटं निधिम् । तत्तत्पदार्थग्रहणदेशकालस्तदर्थिनाम् ॥ ८७ ॥ एवं शुभाशुभे कार्ये, यः प्रस्तावस्तदर्थिनाम् । स सर्वो देशकालः स्याद्वक्तुं शक्यः स्फुटं कियान्? ॥ ८८ ॥ यो यस्य मृत्युकालः स्यात्, कालकालः स तस्य यत् । कालं गतो मृत इति, गम्यते लोकरूढितः ॥ ८९ ॥ कृष्णवर्णे च मरणे, स्यात्कालग्रहणेऽपि च । कालशब्दो देशकालप्रस्तावे परिभाषितः ॥ ९० ॥ तथोक्तं—"कालेण कओ कालो अम्हं सज्झायदेसकालंमि । तो तेण हओ कालो अकालि कालं करंतेणं ॥ ९१ ॥" अद्धाकालस्यैव भेदः, प्रमाणकाल उच्यते । अहोरात्रादिको वक्ष्यमाणविस्तारवैभवः ॥ ९२ ॥ पञ्चानामथ वर्णानां, मध्ये यः श्यामलद्युतिः । स वर्णकालो विज्ञेयः, सचित्ताचित्तरूपकः ॥ ९३ ॥ भवत्यौदयिकादीनां, या भावानामवस्थितिः । सादिसान्तादिभिर्भङ्गैर्भावकालः स उच्यते ॥ ९४ ॥ अत्र प्रमाणकालोऽस्ति, प्रकृतः स प्रतन्यते । अतीतोऽनागतो वर्त्तमानश्चेति त्रिधा स च ॥ ९५ ॥ अवधीकृत्य समयं, वर्त्तमानं विवक्षितम् । भूतः समयराशिर्यः, कालोऽतीतः स उच्यते ॥ ९६ ॥ अवधीकृत्य समयं, वर्त्तमानं विवक्षितम् । भावी समयराशिर्यः, कालः स स्यादनागतः ॥ ९७ ॥ वर्त्तमानः पुनर्वर्त्तमानैकसमयात्मकः । असौ नैश्चयिकः सर्वोऽप्यन्यस्तु व्यावहारिकः ॥ ९८ ॥ इति जम्बूद्वीपप्रज्ञप्तिवृत्त्याद्यभिप्रायः, योगशास्त्राद्यप्रकाशवृत्तौ तु—लोकाकाशप्रदेशस्था, भिन्नाः कालाणवस्तु ये[1] । भावानां परिवर्त्ताय, मुख्यः कालः स उच्यते ॥९९॥ ज्योतिःशास्त्रे यस्य मानमुच्यते समयादिकम् । स व्यावहारिकः कालः, कालवेदिभिरामतः ॥१००॥" इत्युक्तमिति ज्ञेयम्, एतदनुसारेण च समयक्षेत्राद्बहिरपि कालस्वीकारो मुख्यतया संपन्नः, तत्त्वं पुनः सर्वज्ञवेद्यमिति । संख्येयश्चाप्यसंख्येयोऽनन्तश्चेत्यथवा त्रिधा । शीर्षप्रहेलिकान्तः स्यात्तत्राद्यः समयादिकः ॥ १ ॥ असंख्येयः पुनः कालः, ख्यातः पल्योपमादिकः । अनन्तः पुद्गलपरावर्त्तादिः परिकीर्त्तितः ॥ २ ॥ तत्र कालविशेषो यः, सूक्ष्मत्वाद्योगिनाऽपि नो । विभक्तुं शक्यते सैष, समयः समये श्रुतः ॥ ३ ॥ जीर्णे पटे भिद्यमाने, तरुणेन बलीयसा । कालेन यावता तन्तुस्त्रुट्यत्येको जरातुरः ॥ ४ ॥ असंख्येयतमो भागो, यः स्यात्कालस्य तावतः । समये समयः सैष, कथितस्तत्त्ववेदिभिः ॥ ५ ॥ तस्मिंस्तन्तौ यदेकस्मिन्, पक्ष्माणि स्युरनेकशः । प्रतिपक्ष्म च संघाताः, क्षणच्छेद्या असंख्यशः ॥ ६ ॥ तेषां क्रमात् छेदनेषु, भवन्ति समयाः पृथक् । असंख्यैः समयैस्तत् स्यात्तन्तोरेकस्य भेदनम् ॥ ७ ॥ एवं पत्रशतोद्वेधं, चक्षुरुन्मेष एव च । भाव्या-

१ दिगम्बरानुवादोऽयं, यद्वा अणवः अंशाः, समयश्चांशरूप एव, तेन च प्रतिपर्यायं वर्त्तनभेदेन समयभेदः, लोकशब्देन वा नृलोकोऽत्र ग्राह्यः, तेन समग्रनृलोकव्यापिता तस्योक्ता स्यात् ।

नैश्चयिक व्यावहारिकौ समय आवली च

श्चप्पुट्टिकायां चासंख्येयाः समया बुधैः ॥ ८ ॥ तं स्वरूपेण जानन्तोऽप्यर्हन्तोऽत्यन्तसौक्ष्म्यतः । शृङ्गग्राहिकयाऽन्येभ्यो, निर्देष्टुं शक्नुवन्ति न ॥९॥ निर्देशो हि भवेत्तत्तद्वचोव्यापारपूर्वकः । व्यापारो वचसां चैषोऽसंख्येयैः समयैर्भवेत् ॥ १० ॥ यावत्समय इत्येषोचार्यतेऽक्षरसंततिः । असंख्याः समयास्तावदतिक्रामन्त्यनेकशः ॥ ११ ॥ जघन्ययुक्तासंख्यातमितैः स्यादावली क्षणैः । संख्येयाभिश्चावलीभिः, प्राणो भवति निश्चितम् ॥ १२ ॥ नीरोगस्यानुपहतकरणस्य बलीयसः । प्रशस्ते यौवने वर्त्तमानस्याव्याकुलस्य च ॥ १३ ॥ अप्राप्तस्याध्वनः खेदमाश्रितस्य सुखासनम् । स्यायदुच्छ्वासनिःश्वासमानं प्राणः स कीर्त्तितः ॥ १४ ॥ तत्र च— उच्छ्वास ऊर्द्धगमनस्वभावः परिकीर्त्तितः । अधोगमनशीलश्च, निःश्वास इति कीर्त्तितः ॥ १५ ॥ संख्येयावलिकामानौ, प्रत्येकं तावुभावपि । द्वाभ्यां समुदिताभ्यां स्यात्कालः प्राण इति श्रुतः ॥ १६ ॥ रोगार्त्तादेश्च निःश्वासोच्छ्वासावनियतावितिति । उक्तं पुंसोऽरोगतादिविशेषणकदम्बकम् ॥ १७ ॥ भवन्ति क्षुल्लकभवा, एकप्राणे यथोदिते । सातिरेकाः सप्तदश, श्रूयतां तत्र भावना ॥ १८ ॥ मुहूर्त्ते क्षुल्लकभवा, एकस्मिन् परिकीर्त्तिताः । पञ्चषष्टिः सहस्राणि, षट्त्रिंशा पञ्चशत्यपि ॥ १९ ॥ अत्र कः प्रत्यय इति, यदि शुश्रूषति भवान् । तदा तदपि निश्चित्य, श्रूयतां प्रतिपाद्यते ॥ २० ॥ एका कोटी सप्तषष्टिर्लक्षाण्यथ सहस्रकाः । स्युः सप्तसप्ततिर्युक्ता, द्विशत्या षोडशाढ्यया ॥ २१ ॥ [१६७७७२१६] एता मुहूर्त्ते एकस्मिन्नुक्ता आवलिका जिनैः । एकक्षुल्लभवे चैताः, षट्पञ्चाशा शतद्वयी ॥ २२ ॥ क्षुल्लभवावलिकाभिर्मुहूर्त्तावलिका यदि । विभज्यन्ते तदा लभ्या, मौहूर्त्ताः क्षुल्लका भवा ॥ २३ ॥ अथ प्रकृतं— प्राणाश्चैकमुहूर्त्ते स्युः, सप्तत्रिंशच्छतानि वै । त्रिसप्तत्या संयुतानि [ ३७७३ ], राशिरेष विभाजकः ॥ २४ ॥ मौहूर्त्तक्षुल्लकभव [ ६५५३६ ] राशिरेतेन भज्यते । तदाऽऽप्यन्ते सप्तदश, प्राणस्य क्षुल्लका भवाः ॥ २५ ॥ त्रयोदश शताः पञ्चनवत्या च समन्विताः । अंशा उपरि शिष्यन्ते, भवस्याष्टादशस्य वै ॥ २६ ॥ अष्टसप्ततिसंयुक्ताश्चेत्रयोविंशतिः शताः । क्षिप्यन्तेऽंशा एषु पूर्णः, स्यात्तदाऽष्टादशो भवः ॥ २७ ॥ अथो कियत्य आवल्यः, स्युस्त्रयोदशभिः शतैः । भागैः पञ्चनवत्याढ्यैः, शेषैस्तदपि कथ्यते ॥ २८ ॥ शतास्त्रयोदशांशानां, ये पञ्चनवतिस्पृशः । षट्पञ्चाशद् द्विशत्या ते, हन्तव्या कर्त्तुमावलीः ॥ २९ ॥ शेषाङ्काः क्षुल्लकभवसत्का एते हि सन्त्यतः । क्षुल्लभवावलिकाभिर्भवन्त्यावलयो हताः ॥ ३० ॥ जाताश्चावलिकास्तेषां, घाते लक्षत्रयं तथा । सप्तपञ्चाशत्सहस्राः, शतं विंशतिसंयुतम् [ ३५७१२० ] ॥ ३१ ॥ त्रिसप्ततिसमायुक्तसप्तत्रिंशच्छतात्मना [ ३७७३ ] । प्रागुक्तभाजकेनास्य, राशेर्विभजने सति ॥ ३२ ॥ चतुर्नवतिरावल्यो, लभ्यतेऽंशाः पुनः स्थिताः । चतुर्विंशतिरेवाष्टपञ्चाशदधिकाः शताः ॥ ३३ ॥ एवं च क्षुल्लकभवाः, प्राणे सप्तदशैकके । चतुर्नवतिरावल्य, आवल्या अंशकाः पुनः ॥ ३४ ॥ त्रिसप्तत्या युतैः सप्तत्रिंशता विकलैः शतैः । छिन्नाया अष्टपञ्चाशाः, स्युश्चतुर्विंशतिः शताः ॥ ३५ ॥ इति क्षुल्लकभवप्रकरणं । क्षुल्लकभवप्रयोजनं चैवं–आयुः क्षुल्लभवमितमौदारिकवपुर्भृताम् । जघन्यतो विनिर्दिष्टं, पञ्चमाङ्गे जिनेश्वरैः ॥ ३६ ॥ कर्मप्रकृत्यादिष्वपि औदारिकशरीराणां तिर्य-

ग्मनुष्याणामायुषो जघन्यस्थितिः क्षुल्लकभवग्रहणरूपा प्रतिपादिता, यत्पुनरावश्यकटीकायां क्षुल्लकभवग्रहणं वनस्पतिष्वेव प्राप्यते इत्युक्तं तन्मतान्तरमित्यवसीयते इति कर्मग्रन्थवृत्तौ। एकप्राणे चावलीनां, षट्चत्वारिंशदन्विताः। शताः प्रोक्ताश्चतुश्चत्वारिंशदंशाश्च पूर्ववत् ॥ ३७ ॥ तच्चैवं–एकक्षुल्लभवसत्कावलीभिः परिताडयेत्। प्राणक्षुल्लभवांस्तेषु, शेषा आवलिकाः क्षिपेत् ॥ ३८ ॥ एवं चासंख्यसमयैरावली ताभिरत्र यत्। संख्येयाभिः प्राण उक्तस्तत्सर्वं विशदीकृतम् ॥ ३९ ॥ नन्वावलिकादीनां यदसंख्यक्षणरूपता। प्रोक्ता तत्प्रोच्छलद्भेकैर्गोकलिङ्गस्य पूरणम् ॥४०॥ यतः पूर्वस्य सद्भावे, नोद्भवेदुत्तरः क्षणः। नश्यत्यवश्यमाद्यश्च, द्वितीये जनिमीयुषि ॥ ४१ ॥ समुच्चयादिको धर्मः, पुद्गलानां हि संभवेत्। विमात्रस्निग्धरूक्षाणां, कालस्य तु न जातुचित् ॥ ४२ ॥ अत्रोच्यते–प्ररूपयितुकामेन, कालमावलिकादिकम्। प्रज्ञापकेन यावन्तः, क्षणा धीगोचरीकृताः ॥ ४३ ॥ विनष्टा अपि तावन्तः, समुचिततयाऽखिलाः। उपचर्यन्त इत्येवमावल्यादिनिरूपणा ॥ ४४॥ अत एवोपचरितः, सर्वोऽप्यावलिकादिकः। कालो न वास्तवः किंतु, समयः खलु वास्तवः ॥ ४५ ॥ प्राणैः स्यात्सप्तभिः स्तोकः, स्तोकैश्च सप्तभिर्लवः। सार्द्धैरष्टात्रिंशता च, लवैर्भवति नालिका ॥ ४६ ॥ भङ्ग्यन्तरेणाथ मानं, नाडिकाया निरूप्यते। श्रूयतां तत्सावधानैरुक्तं ज्योतिष्करण्डके ॥ ४७ ॥

---

१ आवश्यके कर्मणामुत्कृष्टमध्यमजघन्यस्थितिषु संबन्धे विचार्यमाणे तत्रैतन्नियमादेतदुक्तं, यद्वा तस्यापि लघुतमो भेदस्तत्रैव स्यादिति। उपलक्षणं वा तत्। २ उपलक्षणं, तेन जीवप्रदेशादीनां समुच्चयेऽपि न क्षतिः। तत्त्वतस्तु एककालवर्त्तित्वे सति परस्परं संबंधभाक्त्वं, तच्च न काले।



नालिका नाम घटिका, कार्या लोहमयी च सा। दाडिमीकुसुमाकारा, सत्तला वर्त्तुलाकृतिः ॥ ४८ ॥ केशास्त्रिवर्षजातायाः, करिण्याः पुच्छमूलजाः। ऋजुकृताः षण्णवतिर्मीलिताश्च परस्परम् ॥ ४९ ॥ विशन्ति यादृशे छिद्रे, तिष्ठन्ति च निरन्तराः। छिद्रं कार्यं तादृगस्या, नालिकाया अधस्तले ॥ ५० ॥ यद्वा द्विवर्षजातायाः, करिण्याः पुच्छमूलजाः। वालाः षण्णवतिः प्राप्ता, द्वैगुण्यं मान्ति यादृशे ॥ ५१ ॥ यद्वा–चतुःस्वर्णमाषजाता, शिलाका चतुरङ्गुला। यादृशे विशति छिद्रे, कर्त्तव्यं तादृशं तकत् ॥ ५२ ॥ अथैतस्यां जलं धार्यं, तौल्यमेयप्रमाणतः। ततः प्रसङ्गतो ब्रूमः, स्वरूपं तौल्यमेययोः ॥ ५३ ॥ तृणस्य मधुराख्यस्य, चतुर्भिस्तण्डुलैर्भवेत्। तौल्यतः सर्षपः श्वेतस्तैश्च षोडशभिः समम् ॥ ५४ ॥ धान्यमाषफलं ताभ्यां, द्वाभ्यां गुञ्जाफलं भवेत्। द्वाभ्यां गुंजाभ्यां च कर्ममाषः षोडशभिश्च तैः ॥ ५५ ॥ धरणापरपर्यायं, मानं गद्याणकाभिधम्। गद्याणकाभ्यां सार्द्धाभ्यां, कर्षः सुवर्णसंज्ञकः ॥ ५६ ॥ चतुःकर्षं पलं सार्द्धैः, प्रस्थो द्वादशभिश्च तैः। तुला पलशतेनासां, विंशत्या भार ईरितः ॥ ५७ ॥ इति ज्योतिष्करण्डवृत्त्यभिप्रायः, लोके तु–तुल्या यवाभ्यां कथिताऽत्र गुञ्जा, वल्लस्त्रिगुञ्जो धरणं च तेऽष्टौ। गद्याणकस्तद्द्वयमिन्द्रतुल्यैर्वल्लैस्तथैको घटकः प्रदिष्टः ॥ १ ॥ दशार्द्धगुञ्जं प्रवदन्ति माषं, माषाह्वयैः षोडशभिश्च कर्षम्। कर्षैश्चतुर्भिश्च पलं तुला ज्ञाः, कर्षं सुवर्णस्य सुवर्णसंज्ञम् ॥ २ ॥ पादोनगद्याणकतुल्यटङ्कैर्द्विसप्तसंख्यैः कथितोऽत्र सेरः। मणाभिधानः खयुगैश्च सेरैर्धान्यादितौल्येषु तुरुष्कसंज्ञा ॥ ३ ॥ इति लीलावत्यां। तौल्य-

प्रमाणमित्युक्तं, पूर्वाचार्यप्रदर्शितम् । अथ स्वरूपं मानं च, तुलायाः किञ्चिदुच्यते ॥ ५८ ॥ पञ्चत्रिंशल्लोहपलमयी वृत्ता घना भृशम् । द्वासप्ततिं चाङ्गुलानि, दीर्घा लोहतुला भवेत् ॥ ५९ ॥ तस्याः पञ्चपलमितं, धरणं रचयेद्बुधः । येन धृत्वा तोल्यते तद्धरणं परिकीर्त्तितम् ॥ ६० ॥ तस्यां चाथ धरणके, योजिते सति सा तुला । ध्रियमाणा यत्र देशे, समा स्यात्पार्श्वयोर्द्वयोः ॥ ६१ ॥ तत्र प्रदेशे समताज्ञानाय परिकल्पयेत् । रेखामेकां ततश्चान्यां, रेखाणां पंचविंशतिम् ॥ ६२ ॥ तत्र स्यात्प्रथमा रेखा, कर्षार्द्धस्यैव सूचिका । द्वितीयैकस्य कर्षस्य, तृतीया कर्षयोर्द्वयोः ॥ ६३ ॥ त्रिकर्षसूचिका तुर्या, स्याच्चतुःकर्षसूचिका । पञ्चम्यथ नव रेखाः, स्युरेकैकपलाधिकाः ॥६४॥ यथा तत्र भवेद्रेखा, षष्ठी द्विपलसूचिका । एवं यावद्दशपलसूचिका स्याच्चतुर्दशी ॥ ६५ ॥ ततश्च द्वादशपलसूचिका पञ्चदश्यसौ । षोडशी च पञ्चदशपलाभिव्यञ्जिका स्मृता ॥ ६६ ॥ ततः सप्तदशी रेखा, पलविंशतिसूचिका । अत ऊर्द्ध्वं च दशकवृद्धा अष्टाप्यमूः स्मृताः ॥ ६७ ॥ अष्टादशी यथा रेखा, स्यात्रिंशत्पलसूचिका । क्रमादेवं शतपलसूचिका कीर्त्तिताऽन्तिमा ॥६८॥ पञ्चपञ्चदशत्रिंशत्पञ्चाशत्पलसूचिका । नवमी षोडशी चाष्टादशी च पञ्चविंशिका ॥ ६९ ॥ एताश्चतस्रो रेखाः स्युः, फुल्लफुल्लडिकायुताः । स्युः शेषा ऋजवः सर्वा, एकविंशतिसंमिताः ॥ ७० ॥ तुलास्वरूपमित्येवं, यथागममुदीरितम् । प्रमाणमथ मेयस्य, यथाऽऽगममुदीर्यते ॥ ७१ ॥ देशेषु मगधाख्येषु, प्रसिद्धं कुडवाभिधम् । मानं स्यात्तौल्यचिन्तायां, सकर्षार्द्ध पलत्रयम् ॥ ७२ ॥ चतुर्भिः कुडवैरेकः, प्रस्थो मागधिको भवेत् । सार्द्धानि द्वादश पलान्येष तौल्यप्रमाणतः

घटिकादिकाले तौल्यमेयमानं



॥ ७३ ॥ प्रस्थैश्चतुर्भिरेकः स्यादाढकः प्रथितो जने । पञ्चाशत्पलमानोऽयं, ज्ञेयस्तौल्यविवक्षया ॥ ७४ ॥ चतुर्भिराढकैर्द्रोणो, जने सोऽप्यतिविश्रुतः । पलानां द्वे शते ख्यातः, स च तौल्यप्रमाणतः ॥७५॥ खारी षोडशभिर्द्रोणैः, सा स्यात्तौल्यप्रमाणतः । द्वात्रिंशता पलशतैः, संमिता लोकसंमता ॥ ७६ ॥ वाहः स्याद्विंशतिः खार्यः, स भवेत्तौल्यमानतः । चतुःषष्टिः सहस्राणि, पलानां तुलया धृतः ॥ ७७ ॥ अथ प्रकृतं—

कालेन यावता तस्यां, नालिकायां विशेज्जलम् । आढकौ द्वौ सुरन्ध्रेण, तावान् कालो हि नालिका ॥ ७८ ॥ भवेत्पलशतं चैतत्तुलया तुलितं जलम् । तच्च स्वभावतः स्वच्छमेष्टव्यं शारदादिकम् ॥ ७९ ॥ देवः श्रीसर्वज्ञो विश्वश्रीशः सिद्धिस्त्रीकान्तः, कामद्रुद्रोहाग्निर्मायादोषाभास्वान्नीरागः । चन्द्रश्वेतश्लोकः स्याद्वादारामाब्दो लोकार्च्यो, वान्तापायः शान्तो लोकेभ्योऽसंख्यं सौख्यं देयात् ॥ ८० ॥ अद्रुतमन्थरमध्यमगत्या पठनेऽस्य भवति वृत्तस्य । कामक्रीडाच्छन्दसि षष्ट्या गुर्वक्षरैः पलं लोके ॥ ८१ ॥ (गीतिः) सूक्ष्मेक्षिकार्थिनां चैवं वाच्यं-संगीतशास्त्रप्रसिद्धस्य पञ्चमात्रिकतालस्याविच्छेदेन चतुर्विंशतिवारान् हस्तमुखाभ्यामुद्घट्टने सर्वथाप्यविसंवादि जलपलमेकं स्यादिति लौकिकज्योतिःशास्त्रानुसारेण पलमानं, एभिश्च षष्ट्या पलैर्घटिकापरपर्याया नाडिकेति ।

नाडिकाभ्यां भवेद् द्वाभ्यां, मुहूर्त्तस्तौल्यतः स च । पलानां द्वे शते मानाच्चत्वारो नूनमाढकाः ॥ ८२ ॥ अहोरात्रो मुहूर्त्तैः स्यात्रिंशता षष्टिनालिकः । स तौल्यतस्त्रयो भाराः, षट्सहस्राः पलानि वा ॥ ८३ ॥

संवत्सरमानं आयुरादिमानं च

मेयप्रमाणचिन्तायां, सविंशं शतमाढकाः । पक्षः पुनरहोरात्रैः, स्यात्पञ्चदशभिर्ध्रुवम् ॥ ८४ ॥ स तौल्यतः
पञ्चचत्वारिंशद्भारात्मको भवेत् । आढकानां शतान्यष्टादश मेयप्रमाणतः ॥ ८५ ॥ तौल्यतो नवतिर्भारा,
मासः पक्षद्वयात्मकः । षट्त्रिंशदाढकशतान्येष मेयप्रमाणतः ॥ ८६ ॥ मासैर्द्वादशभिश्चैकः, कर्मसंवत्सरो
भवेत् । शतानि त्रीणि षष्ट्याढ्यान्यत्र रात्रिन्दिवानि च ॥ ८७ ॥ तौल्ये सहस्रं साशीतिर्भाराणां स्यात्स
मानतः । त्रिचत्वारिंशत्सहस्राण्याढकानां द्विशत्यपि ॥ ८८ ॥ ऋतुसंवत्सरोऽप्येष, ऋतुषट्कात्मको भवेत् ।
ऋतवो हि वसन्ताद्याः, पृथग्मासद्वयात्मकाः ॥ ८९ ॥ किंच संवत्सराः पञ्चविधाः प्रोक्ता जिनेश्वरैः । सूर्य- २०
र्तुचन्द्रनक्षत्राह्वयास्तथाऽभिवर्द्धितः ॥ ९० ॥ तत्रच—द्विमण्डलालीचारेण, मार्त्तण्डेनायनद्वये । परिपूर्णे कृते
पूर्णः, सूर्यसंवत्सरो भवेत् ॥ ९१ ॥ सत्र्यशीतौ मण्डलानां, शते चारो भवेद्रवेः । एकस्मिन्नयने तस्मात्स-
त्र्यशीतिशतं दिनाः ॥ ९२ ॥ षट्षष्ट्याऽभ्यधिका चैवमहोरात्रशतत्रयी । सूर्यसंवत्सरे दृष्टा, विशिष्टज्ञान-
दर्शनैः ॥ ९३ ॥ सर्वे कालविशेषा ये, ख्याता वर्षशतादयः । पूर्वाङ्गपूर्वप्रमुखाः, पल्यवार्द्ध्यादयोऽपि च ॥९४॥
कर्मणां स्थितयः सर्वा, आयूंष्यखिलदेहिनाम् । सूर्यवर्षप्रमाणेन, ज्ञेयान्येतानि धीधनैः ॥ ९५ ॥ नन्वत्र वक्ष्यते २५
वर्षैर्युगं चन्द्राभिवर्द्धितैः । युगाधीनं चान्यकालमानं वर्षशतादिकम् ॥ ९६ ॥ कथं तदिह निर्दिष्टाः, सर्वे वर्ष- ॥ ३७९ ॥
शतादयः । कालाः सूर्याब्दमानेन, तत्राकर्णयतोत्तरम् ॥ ९७ ॥ युगं यदुच्यते तत्स्याचान्द्रैस्संवत्सरैस्त्रिभिः ।
द्वाभ्यां चाभिवर्द्धिताभ्यामिति तत्पञ्चवार्षिकम् ॥ ९८ ॥ सूर्यवर्षप्रमाणेन, तदेव यदि चिन्त्यते । तदापि तुल्य- २८

मेव स्यात्पञ्चवर्षात्मकं युगम् ॥ ९९ ॥ तथाहि—सूर्याब्दस्य सषट्षष्टिरहोरात्रशतत्रयी । पञ्चघ्नाऽष्टादशशता-
स्त्रिंशा सूर्यगवासराः ॥३००॥ इयन्त एव द्वाषष्टिचन्द्रमासात्मके युगे । वासराः स्युस्ततो नार्थभेदः कोऽप्यत्र
वास्तवः ॥ १ ॥ ततो युगैर्मीयते यत्संवत्सरशतादिकम् । तत्सूर्यवर्षमानेनेत्यादि युक्तं यथोदितम् ॥ २ ॥
स्यात्पूर्णिमापरावर्त्तैरब्दं द्वादशभिर्विधोः । चतुष्पञ्चाशदधिकमहोरात्रशतत्रयम् ॥ ३ ॥ अहोरात्रस्य चैकस्य,
द्वादशांशा द्विषष्टिजाः । चन्द्रसंवत्सरे मानमित्युक्तं सर्वदर्शिभिः ॥ ४ ॥ नक्षत्रैः सप्तविंशत्या, यः साक- ५
ल्येन शीतगोः । योगः स द्वादशगुण, ऋक्षाब्दं मानमस्य च ॥ ५ ॥ सप्तविंशतिसंयुक्तमहोरात्रशतत्रयम् ।
अहोरात्रस्यैकपञ्चाशच्चांशाः सप्तषष्टिजाः ॥ ६ ॥ अभिवर्द्धितमब्दं च, त्रयोदशभिरैन्दवैः । मासैर्भवेदस्य
मानमेवमुक्तं महर्षिभिः ॥ ७ ॥ युक्तं त्र्यशीत्याऽहोरात्रैरहोरात्रशतत्रयम् । चतुश्चत्वारिंशदहोरात्रांशाश्च
द्विषष्टिजाः ॥ ८ ॥

अथ क्रमेण पञ्चानां, मासानां मानमुच्यते । सूर्यर्त्तुचन्द्रनक्षत्राभिवर्द्धितकसंज्ञिनाम् ॥ ९ ॥ स्वस्वसंवत्सराणां १०
हि, भागे द्वादशभिर्हृते । स्वीयस्वीयमासमानं, जायते तदिदं यथा ॥ १० ॥ सार्द्धास्त्रिंशदहोरात्रा, मासमानं
भवेद्रवेः । ऋतुमासः पुनस्त्रिंशदहोरात्रात्मकः स्फुटः ॥ ११ ॥ एकोनत्रिंशता चाहोरात्रैर्मासोऽमृतद्युतेः । द्विष-
ष्टिजैरहोरात्रभागैर्द्वात्रिंशताऽधिकैः ॥ १२ ॥ नक्षत्रमासोऽहोरात्राः, सप्तविंशतिरन्विताः । अहोरात्रलवैरेक- १३

विंशत्या सप्तषष्टिजैः ॥ १३ ॥ एकत्रिंशदहोरात्राश्चैकविंशं शतं लवाः । चतुर्विंशतिविच्छिन्नाहोरात्रस्याभिवर्द्धिते ॥ १४ ॥ एषामुपपत्तिस्त्वेवं–

भरणीशततारार्द्राश्लेषास्वातिमहेन्द्रभम् । एतान्यपार्द्धक्षेत्राणि, नक्षत्राणि जगुर्जिनाः ॥ १५ ॥ पुनर्वसू विशाखा च, रोहिणी चोत्तरात्रयम् । सार्द्धक्षेत्राण्यमून्याहुर्नक्षत्राणि जिनेश्वराः ॥ १६ ॥ भानि पञ्चदशान्यानि, तुल्यक्षेत्राण्यथाभिजित् । एभ्यो विसदृशं भागास्त्रिंशदाढ्याऽस्य षट्शती ॥ १७ ॥ अर्द्धक्षेत्राणां च भानां, क्षेत्रविष्कम्भ ईरितः । अंशाः सहस्रं पञ्चाढ्यं, प्रत्येकं तत्त्ववेदिभिः ॥ १८ ॥ सार्द्धक्षेत्राणां सहस्रास्त्रयः पञ्चदशाधिकाः । तुल्यक्षेत्राणां च भागा, द्वे सहस्रे दशाधिके ॥ १९ ॥ क्षेत्रविष्कम्भ इत्येषां, भानां संकलितोऽखिलः । चतुष्पञ्चाशदंशानां, सहस्राश्च शता नव ॥ २० ॥ सप्तषष्टिं चैषु भागान्, मुहूर्त्तेन शशी व्रजेत् । अहोरात्रेण चैकेन, द्वे सहस्रे दशाधिके ॥२१॥ सप्तषष्ट्या ततः स्वस्वभागराशौ हृते भवेत् । मुहूर्त्तमानमृक्षाणां, तच्चैवं स्पष्टमुच्यते ॥ २२ ॥ चन्द्रस्याभिजिता योगे, मुहूर्त्ता नव कीर्त्तिताः । सप्तषष्टिभुवोऽंशाश्च, मौहूर्त्ताः सप्तविंशतिः ॥ २३ ॥ तुल्यक्षेत्रेषु च त्रिंशन्मुहूर्त्ता भेषु कीर्त्तिताः । पञ्चचत्वारिंशदेते, सार्धक्षेत्रेषु भेषु च ॥ २४ ॥ एकाहोरात्रभोक्तव्यऋक्षक्षेत्रांशराशिना । सर्वर्क्षांशराशिभागे, मासः पूर्येत शीतगोः ॥२५॥ तथाहि—चतुष्पञ्चाशत्सहस्राः, शतैर्नवभिरन्विताः । भागहारेण भक्तव्या, द्विसहस्र्या दशाढ्यया ॥ २६ ॥ सप्तविंशतिराप्यन्तेऽहोरात्रास्त्रिंशता पुनः । शेषभाज्यभाजकयो, राश्योः कार्याऽपवर्त्तना ॥ २७ ॥ सप्तषष्टिभवा भागास्ततोऽमी एकविंशतिः । अहोरात्रस्य संपन्नास्तेऽधिकाः सप्तविंशतौ ॥ २८ ॥ एवं नक्षत्रमासस्योपपत्तिरिह वर्णिता । चन्द्रमासस्योपपत्तिमथ वक्ष्ये यथागमम् ॥ २९ ॥ त्रिंशता तिथिभिः प्रोक्तश्चन्द्रमासो जिनेश्वरैः । भवन्ति तिथयश्चेन्दोः, कलावृद्धिक्षयोद्भवाः ॥ ३० ॥ कलाः कुर्यात् षोडशेन्दोस्तत्र चैका कला भवेत् । द्वाषष्टिभागीकृतेन्दुविभागद्वितयात्मिका ॥ ३१ ॥ अन्याः पुनस्ता द्वाषष्टिभागीकृतसितत्विषः । भागचतुष्टयरूपाः, स्युः पञ्चदशसंमिताः ॥ ३२ ॥ तत्राद्यांशद्वयरूपा, सदैव स्यादनावृता । आव्रियन्ते च मुच्यन्ते, राहुणाऽन्याः कला मुहुः ॥ ३३ ॥ कालश्चैककलायाः स्यातिपधाने वा प्रकाशने । एकषष्टिरहोरात्रस्यांशा द्वाषष्टिकल्पिताः ॥ ३४ ॥ पिधीयमानचन्द्रांशास्तिथयः कृष्णपक्षजाः । प्रकाशमानचन्द्रांशास्तिथयः शुक्लपक्षजाः ॥ ३५ ॥ यथोक्तस्तिथिकालोऽसौ, त्रिंशता गुणितो भवेत् । अष्टादश शतास्त्रिंशा, द्वाषष्टिप्रभवा लवाः ॥३६॥ द्वाषष्ट्यैषां हृते भागे, विधुमासो यथोदितः । एकन्यूनत्रिंशदहोरात्रा द्वात्रिंशदंशकाः ॥ ३७ ॥ कृष्णपक्षप्रतिपदः, प्रारभ्य पूर्णिमावधि । ऋतुमासो भवेत्त्रिंशदहोरात्रात्मकः स्फुटम् ॥ ३८ ॥ सूर्यमासस्योपपत्तिरथ किञ्चिन्निगद्यते । भान्यष्टाविंशतिर्मेषाद्यो द्वादश राशयः ॥ ३९ ॥ चतुष्पञ्चाशत्सहस्रान्, शतैर्नवभिरन्वितान् । प्राग्निरूपितनक्षत्रभागान् द्वादशभिर्भजेत् ॥ ४० ॥ सपञ्चसप्ततिः पञ्चचत्वारिंशच्छती ततः । प्राप्ता नक्षत्रभागानां, राशिमानं तदेव हि ॥ ४१ ॥ सार्द्धत्रिंशदहोरात्रभोग्योऽयं राशिरिष्यते । अयमेवार्कमासः स्याद्यः संक्रान्तिरितीर्यते ॥ ४२ ॥ पञ्च पञ्चैव ऋक्षांशान्, मुहूर्त्तेन पुरोदितान् । अहोरात्रेण वा द्व्यर्द्धं, शतं भुङ्क्ते दिने-

श्वरः ॥ ४३ ॥ एवं च त्रिंशता सार्द्धैरहोरात्रैर्भुनक्त्यसौ। पञ्चचत्वारिंशदंशशतान् सपञ्चसप्ततीन् ॥ ४४ ॥ प्रत्ययश्चात्र—एकाहोरात्रभोग्येन, सार्द्धेनांशशतेन चेत् । पञ्चसप्ततियुक्पञ्चचत्वारिंशच्छतात्मकः ॥ ४५ ॥ राशिर्विभज्यते त्रिंशदहोरात्रि तदाप्यते । पञ्चसप्तत्याऽथ भाज्यभाजकावपवर्त्तयेत् ॥ ४६ ॥ ततो लब्धमहोरात्रस्यार्द्धमेवं च दर्शिता । भावना सूर्यमासे सा, प्रोच्यतेऽथाधिमासके ॥ ४७ ॥ यस्मिन्नब्दे विधोर्मासास्त्रयोदश भवन्ति तत् । अभिवर्द्धितवर्षं स्यात्तस्मिन् द्वादशभिर्हृते ॥ ४८ ॥ एकत्रिंशदहोरात्रा, लभ्या मासेऽभिवर्द्धिते । चतुर्विंशशतं छिन्नाश्चैकविंशं शतं लवाः ॥ ४९ ॥ अ ३१ अं $\frac{१२१}{१२४}$ । तथाहि—त्रयोदशसु शीतांशुमासेष्वहां शतत्रयम् । त्र्यशीतियुक्चतुश्चत्वारिंशच्चांशा द्विषष्टिजाः $३८३\frac{४४}{६२}$ ॥ ५० ॥ वैसदृश्यादहोरात्राङ्केष्वंशाङ्को न संमिलेत् । अंशच्छेदेन तदहोरात्रान् हत्वा सवर्णयेत् ॥५१॥ ततश्च—द्वाषष्ट्यहोरात्रराशावंशच्छेदेन ताडिते । चतुश्चत्वारिंशदंशयुक्ते चांशा भवन्त्यमी ॥ ५२ ॥ त्रयोविंशतिरंशानां, सहस्राः सप्तशत्यपि । नवतिश्चाहोरात्रस्य, द्विषष्टिच्छेदशालिनः $\frac{२३७९०}{६२}$ ॥ ५३ ॥ एषां द्वादशभिर्भागे, मासः स्यादभिवर्द्धितः । विधिर्भिन्नभागहारे, लीलावत्यामिति श्रुतः ॥ ५४ ॥ छेदं लवं च परिवर्त्त्य हरस्य शेषः, कार्योऽथ भागहरणे गुणनाविधिश्च । भाज्यभाजकस्थापना $\frac{२३७९०}{६२} \div १२$ छेदं लवं च परिवर्त्त्य स्थापना $\frac{२३७९०}{६२} \frac{१}{१२}$ भिन्नगुणनविधिश्चायं—अंशाहतिश्छेदवधेन भक्ता, लब्धं विभिन्ने गुणने फलं स्यात् ॥ इत्यादि । द्वाषष्टिर्द्वादशघ्नाः स्युरेवं सप्त शतास्तथा । चतुश्चत्वारिंशदाढ्या, अथैतौ भाज्यभाजकौ २३७९० ÷ ७४४ ॥ ५५ ॥ षड्भिरेवापवर्त्यन्ते, पञ्चषष्टियुतास्ततः । शता एकोनचत्वारिंशदंशानां भवन्ति वै ॥५६॥ चतुश्चत्वारिंशदाढ्यसप्तशत्यात्मकस्तथा । छेदोऽपवर्त्तितः षड्भिश्चतुर्विंशं शतं भवेत् ॥५७॥ अपवर्त्तितभाज्यभाजकस्थापना ३९६५ ÷ १२४, राशौ विभक्तेऽस्मिन् छेदेनामुना स्याद्यथोदितः । मासोऽभिवर्द्धिताब्दस्य, द्वादशांशात्मकः खलु ॥ ५८ ॥ वर्षे द्वादश मासाः स्युरित्यस्येयं मितिर्मता । वर्द्धते तु विधोर्मास, एव वर्षेऽभिवर्द्धिते ॥ ५९ ॥ एतन्निष्पत्तिश्चैवं—परस्परं यो विश्लेषो, भवेत्सूर्येन्दुमासयोः । स त्रिंशद्गुणितः ख्यातोऽधिमासस्तत्त्ववेदिभिः ॥ ६० ॥ सार्द्धत्रिंशदहोरात्रो, भवेन्मासो विवस्वतः । एकोनत्रिंशदिन्दोस्ते, द्वाषष्ट्यंशा रदैर्मिताः ॥ ६१ ॥ विश्लेषश्चानयोरेकोऽहोरात्रः परिकीर्त्तितः । द्वाषष्टिभागेनैकेन, न्यूनस्तत्रेति भावना ॥ ६२ ॥ इह चन्द्रमासे दिने राशेरुपरि ये द्वात्रिंशद् द्वाषष्टिभागाः सन्ति तत्र एकत्रिंशता द्वाषष्टिभागैर्दिनार्धं जातं, तेन च सूर्यमासे यद्दिनराशेरुपरितनं दिनार्धं तत् शुद्धम्, अथैको द्वाषष्टिभाग एकोनत्रिंशच्च दिनानि सूर्यमाससंबन्धिभ्यस्त्रिंशतो दिनेभ्यः शोध्यन्ते, तदा एकद्वाषष्टिभागन्यून एकोऽहोरात्रः स्थित इत्येष विश्लेषो ज्ञेयः । त्रिंशद्भवन्त्यहोरात्रा, एकस्मिंस्त्रिंशता हते । द्वाषष्टिभागश्चैकोऽस्मात्त्रिंशद्गुणोऽपसार्यते ॥६३॥ एकोनत्रिंशदित्येवं, दिनान्यंशा रदैर्मिताः । मासोऽधिकोऽयं स्यात्त्रिंशत्सूर्यमासव्यतिक्रमे ॥ ६४ ॥ युगस्य मध्ये पौषोऽयमन्ते त्वाषाढ एव च । तृतीये पञ्चमे वर्षे, तत एवाभिवर्द्धते ॥ ६५ ॥ एते पञ्चापि मासानां, भेदा द्वादशभिर्हताः । भवन्ति स्वस्ववर्षाणि, तन्मानं प्राग्निरूपितम् ॥ ६६ ॥

एतेषां पञ्चानां मासानां प्रयोजनं त्वेवं—जीवे सिंहस्थे धन्वमीनस्थितेऽर्के, विष्णौ निद्राणे चाधिमासे न लग्नं । इत्यादि सूर्यमासाधिमासयोः प्रयोजनं, ऋतुमासश्च पूर्णत्रिंशदहोरात्रात्मक इति निरंशतया लोकव्यवहारकारक इति, शेषास्तु सूर्यादयो मासाः सांशतया प्रायो न व्यवहारपथमवतरन्तीति, अत एवायमृतुमासः कर्ममास इत्यपि शास्त्रान्तरेऽभिधीयत इति ऋतुमासप्रयोजनं । वैशाखे श्रावणे मार्गे, पौषे फाल्गुन एव च । कुर्वीत वास्तुप्रारम्भं, न तु शेषेषु सप्तसु ॥६७॥ इति चान्द्रमासप्रयोजनं । नक्षत्रमासप्रयोजनं तु संप्रदायगम्यं, इत्याद्यर्थतो जम्बूद्वीपप्रज्ञप्तिवृत्तौ ।

सषट्षष्टित्र्यहोरात्रशतात्मकमुदीरितम् । यदर्काब्दं तत्र काचिदुपपत्तिर्निरूप्यते ॥ ६८ ॥ नक्षत्रक्षेत्र- २०
भागा ये, प्रागत्र प्रतिपादिताः । तेषां सार्द्धं शतं भानुरहोरात्रेण गच्छति ॥ ६९ ॥ ततः शतेन सार्द्धेन, भागहारे कृते सति । नक्षत्रक्षेत्रभागानां, सूर्यभोगाहनिर्णयः ॥ ७० ॥ दिनपञ्चमभागाढ्यमहोरात्रचतुष्टयम् । मुहूर्त्तस्य च षष्ठोंऽशोऽभिजिद्भोगो विवस्वतः ॥ ७१ ॥ अपार्द्धक्षेत्रभानां च, भोगमानं पृथक् पृथक् । अहोरात्राः षड् दशांशा, अहोरात्रस्य सप्त च ॥ ७२ ॥ समक्षेत्राणां च भानामहोरात्रास्त्रयोदश । भक्तस्य पञ्चभिरहोरात्रस्यांशद्वयं तथा ॥ ७३ ॥ सार्द्धक्षेत्राणां च भानां, भोगः प्रत्येकमुष्णगोः । स्याद्विंशतिरहोरात्रास्तद्द- २५
शांशस्तथैककः ॥ ७४ ॥ अहोरात्रात्मको भागात्मकश्च निखिलोऽप्ययम् । कालः संकलितो भानोर्हायनं ॥ ३८२ ॥
स्याद्यथोदितम् ॥ ७५ ॥ २७

सहस्राणि दश नव, शताः साशीतयः किल १०९८० । एतन्मुहूर्त्तगणितं, सूर्यवर्षे जिनैः स्मृतम् ॥ ७६ ॥ शतैरष्टाभिराढ्यानि, सहस्राणि दश स्फुटम् १०८०० । एतन्मुहूर्त्तगणितं, कर्मसंवत्सरे भवेत् ॥ ७७ ॥ सहस्रा दश षट्शत्या, पञ्चविंशत्युपेतया । युक्ताः पञ्चाशदंशाश्च, मुहूर्त्तस्य द्विषष्टिजाः १०६२५$\frac{५०}{६२}$ ॥ ७८ ॥ एतन्मुहूर्त्तगणितं, चन्द्रसंवत्सरे मतम् । अथ नक्षत्रवर्षस्य, मुहूर्त्तमानमुच्यते ॥ ७९ ॥ सहस्रा नव संयुक्ता, द्वात्रिंशैरष्टभिः शतैः । षट्पञ्चाशन्मुहूर्त्तस्य, भागाश्च सप्तषष्टिजाः ९८३२$\frac{५६}{६७}$ ॥ ८० ॥ एकादश सहस्राणि,
पञ्च चैकादशाः शताः । अष्टादश मुहूर्त्तस्य, भागा द्वाषष्टिनिर्मिताः ११५११$\frac{१८}{६२}$ ॥ ८१ ॥ मुहूर्त्तसंख्येत्युद्दिष्टा, ५
बुधैर्वर्षेऽभिवर्द्धिते । त्रिंशद्गुणे स्वस्ववर्षे, त्वेषां स्यादुपपादनम् ॥ ८२॥ सूर्यसंवत्सरस्तौल्यरूपेण यदि चिन्त्यते । तदा सहस्रं भाराणामष्टानवतिसंयुतम्१०९८ ॥ ८३ ॥ आढकानां त्रिचत्वारिंशत्सहस्राः शता नव । विंशत्युपेताः ४३९२० सूर्याब्दं, मेयरूपतया मतम् ॥ ८४ ॥ द्वाषष्ट्याऽभ्यधिकं भारसहस्रं चन्द्रवत्सरे । द्वाषष्टिभागा भारस्य, षट्त्रिंशत्तौल्यमानतः १०६२$\frac{३६}{६२}$ ॥ ८५ ॥ द्विचत्वारिंशत्सहस्राः, पञ्च च त्र्युत्तराः शताः ।
आढकानामाढकस्य, द्विषष्ट्यंशाश्चतुर्दश ॥ ४२५०३$\frac{१४}{६२}$ ॥ ८६ ॥ एतन्मेयतया मानं, चन्द्रसंवत्सरे भवेत् । १०
ब्रूमो नक्षत्रवर्षस्य, तौल्यमाने यथाक्रमे ॥ ८७ ॥ शतानि नव भाराणां, त्र्यशीत्याऽभ्यधिकानि च । एकोनविंशतिर्भागा, भारस्य सप्तषष्टिजाः ९८३$\frac{१९}{६७}$ ॥ ८८ ॥ इति नक्षत्रवर्षे तौल्यमानं । त्रयोदश सहस्रास्त्रिरेकत्रिंशं
शतत्रयम् । त्रयोविंशतिरंशाश्चाढकानां सप्तषष्टिजाः ३९३३१$\frac{२३}{६७}$॥८९॥ इति नक्षत्रवर्षे मेयमानं । एकपञ्चाशानि १४

भारशतान्येकादशाष्ट च । द्वाषष्टिभागा भारस्य, तौल्यं वर्षेऽभिवर्द्धिते ११५१$\frac{८}{६२}$ ॥ ९० ॥ पञ्चचत्वारिंशदाढ्या, आढकानां सहस्रकाः । षट्चत्वारिंशदंशाश्च, मानं द्वाषष्टिजा दश ४६०४५$\frac{१०}{६२}$ ॥ ९१ ॥ अभिवर्धिते तौल्यमेये ॥

पञ्च लक्षणभेदेनाप्युक्ताः संवत्सरा युगे । नक्षत्रचन्द्रकर्मोष्णकराभिवर्द्धिताह्वयाः ॥ ९२ ॥ तथाहि—नक्षत्राणि यथायोगं, स्वस्वमासानुसारतः । भवन्ति यत्र राकायां, कार्त्तिके कृत्तिका यथा ॥ ९३ ॥ तथोक्तं— 'जेट्ठो वच्चइ मूलेण सावणो धणिट्ठाहिं । अद्दासु अ मग्गसिरो सेसा नक्खत्तनामिया मासा ॥ १ ॥' ऋतवोऽपि यथायोगं, प्रवर्त्तन्ते महीतले । स्थितिं बध्नाति हेमन्तः, कार्त्तिक्याः परतो यथा ॥ ९४ ॥

भवेत्संवत्सरो यश्च, नात्युष्णो नातिशीतलः । बहूदकश्च नक्षत्रसंवत्सरमुशंति तम् ॥ ९५ ॥ माससदृशनामानि, यत्र ऋक्षाणि पूर्णिमाः । समापयन्ति यः शीतातपरोगादिदारुणः ॥ ९६ ॥ बहूदकश्च तं प्राहुश्चन्द्रसंवत्सरं बुधाः । कर्मसंवत्सरस्येदं, विज्ञेयमथ लक्षणम् ॥ ९७ ॥ दधत्यकाले तरवस्तत्र पुष्पफलादिकम् । सम्यग् यच्छति नाम्भोदो, मितंपच इवोदकम् ॥ ९८ ॥ इति कर्मवर्षफलं ॥ यत्रातिसरसा पृथ्वी, पाथोऽतिसरसं हितम् । रसो महान्मधूकाम्रादीनां पुष्पफलादिषु ॥ ९९ ॥ यत्राल्पेनापि वर्षेण, धान्यं सम्यक् प्रजायते । सूर्यसंवत्सरं प्राहुस्तमतिप्रौढबुद्धयः ॥ ४०० ॥ यत्रार्कतेजःसंतप्ता, भवन्ति दिवसर्त्तवः । स्थलं निम्नाद्यम्बुपूर्णं, तमाहुरभिवर्द्धितम् ॥ १ ॥ इत्यर्थतो जम्बूद्वीपप्रज्ञप्तिवृत्त्यादिषु । 

पञ्चभिः खलु वर्षैश्च, युगं भवति तत्र च । आद्यं चन्द्राभिधं वर्षं, द्वितीयमपि तादृशम् ॥ २ ॥ अभिवर्द्धितसंज्ञं च, तृतीयं वर्षमीरितम् । चतुर्थं चन्द्रसंज्ञं च, पञ्चमं चाभिवर्द्धितम् ॥ ३ ॥ स्युर्मासाश्चन्द्रवर्षेषु, द्वादश द्वादश त्रिषु । अभिवर्द्धितवर्षे च, द्वे त्रयोदशमासके ॥ ४ ॥ द्वितीयस्येन्दुवर्षस्य, प्रथमः समयो हि यः । तदनन्तरपाश्चात्यः, स्यादाद्यस्य क्षणोऽन्तिमः ॥ ५ ॥ आषाढाभिरुत्तराभिस्तदा योगो हिमद्युतेः । तासां तदानीं स्युर्भोग्याः, षड्विंशतिर्मुहूर्त्तकाः ॥ ६ ॥ षड्विंशतिर्मुहूर्त्तस्य, भागा द्वाषष्टिजास्तथा । द्वाषष्ट्यंशस्य चैकस्य, सप्तषष्ट्यंशशालिनः ॥ ७ ॥ चतुष्पञ्चाशद्भिभागा, इह द्वाषष्टिजो लवः । सप्तषष्टिप्रविभक्तश्चूर्णिकाभाग उच्यते ॥ ८ ॥ पुनर्वसुभ्यां साकं च, तदा योगो रवेर्भवेत् । मुहूर्त्ताः षोडश तदा, तयोर्भोग्या भवन्ति हि ॥ ९ ॥ अष्टौ द्वाषष्टिजा भागा, मुहूर्त्तस्य तथोपरि । एकस्य द्वाषष्ट्यंशस्य, विंशतिश्चूर्णिका लवाः ॥ १० ॥ तथोक्तं सूर्यप्रज्ञप्तौ—जे णं दोच्चस्स संवच्छरस्स आई से णं पढमस्स चंदसंवच्छरस्स पज्जवसाणे अणंतरपच्छाकडे समए, तं समयं च णं चंदे केणं नक्खत्तेणं जोएइ?, ता उत्तराहिं आसाढाहिं, उत्तराणं आसाढाणं छवीसं मुहुत्ता छवीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता चउपण्णं चुण्णिया भागा सेसा । तं समयं च णं सूरे केणं णक्खत्तेणं जोएइ?, ता पुणव्वसुणा, पुणव्वसुस्स सोलस मुहुत्ता अट्ठ य बावट्ठिभागा मुहुत्तस्स, बावट्ठिभागं च सत्तट्ठिहा छेत्ता वीसं चुण्णिया भागा सेसा" इति, एवं शेषेष्वपि सूत्रेषु सूत्रालापकपद्धतिर्बोद्धव्या । योऽभिवर्द्धितवर्षस्य, तृतीयस्यादिमः क्षणः । तदनन्तरपाश्चात्यो, द्वितीयस्यान्तिमः क्षणः ॥ ११ ॥ तदा च पूर्वाषाढाभिस्सह योगो हिमद्युतेः । मुहूर्त्ताः सप्त भागाश्च, त्रिपञ्चाशद् द्विष-

ष्टिजाः ॥ १२ ॥ द्वाषष्ट्यंशस्य चैकस्य, विभागाः सप्तषष्टिजाः । एकोनचत्वारिंशत्स्युस्तासां भोग्याः सित-
त्विषः ॥ १३ ॥ पुनर्वसुभ्यां संयोगस्तदा स्यादुष्णरोचिषः । तन्मुहूर्त्तांशप्रत्यंशान्, भानुभोग्यानथ ब्रुवे ॥१४॥
द्विचत्वारिंशन्मुहूर्त्ताः, पुनर्वस्वोस्तदा रवेः । पञ्चत्रिंशद् द्विषष्ट्यंशा, भोग्याः सप्त च चूर्णिकाः ॥ १५ ॥ तुर्यस्य
चन्द्रवर्षस्य, य इह प्रथमः क्षणः । क्षणस्तृतीयस्यान्त्यः स्यात्तदनन्तरपश्चिमः ॥ १६ ॥ आषाढाभिश्चोत्तराभि-
स्तदा योगो हिमद्युतेः । भुक्तशेषास्तदानीं स्युस्तन्मुहूर्त्तास्त्रयोदश ॥ १७ ॥ एकस्य च मुहूर्त्तस्य, द्वाषष्ट्यंशास्त्रयो-
दश । अंशस्य तादृशः सप्तविंशतिश्चूर्णिका लवाः ॥ १८ ॥ पुनर्वसुभ्यां सूर्यस्य, तदा योगो निरूपितः । २०
मुहूर्त्तौ द्वौ च तद्भुक्तशेषौ भागास्तथोपरि ॥ १९ ॥ षट्पञ्चाशद् द्विषष्ट्युत्था, भागस्यैकस्य तस्य च । सप्तष-
ष्टिविभक्तस्य, षष्टिर्भागाः प्रकीर्त्तिताः ॥ २० ॥ अभिवर्द्धितवर्षस्य, पञ्चमस्यादिमक्षणात् । स्याद्योऽनन्तरपा-
श्चात्यः, स तुर्यस्यान्तिमः क्षणः ॥ २१ ॥ आषाढाभिरुत्तराभिस्तदा योगोऽमृतद्युतेः । तद्भुक्तशेषा एकोनच-
त्वारिंशन्मुहूर्त्तकाः ॥ २२ ॥ द्वाषष्टिभागाश्चत्वारिंशदेकस्याथ तस्य च । सप्तषष्टिभवाः सप्तचत्वारिंशत्कि-
लांशकाः ॥ २३ ॥ पुनर्वसुभ्यां सूर्यस्य, तदा योगः प्रकीर्त्तितः । तद्भुक्तशेषा एकोनत्रिंशदेव मुहूर्त्तकाः ॥२४॥ २५
एकविंशतिरंशाश्च, मुहूर्त्तस्य द्विषष्टिजाः । तस्यैकस्य सप्तचत्वारिंशच्च चूर्णिकांशकाः ॥ २५ ॥ युगस्यान्यस्या- ॥३८४॥
दिमस्य, चन्द्राब्दस्यादिमक्षणात् । अनन्तरो यः पाश्चात्यः, पञ्चमाब्दस्य सोऽन्तिमः ॥ २६ ॥ आषाढाभिरुत्तरा-
भिस्तदा योगः सितद्युतेः । चरमे समये तासां, वर्त्तमानो भवेत्स हि ॥ २७ ॥ सूर्यस्य च तदा योगः, पुष्येण २८

परिकीर्त्तितः । भुक्तशेषास्तदा तस्य, मुहूर्त्ता एकविंशतिः ॥ २८ ॥ द्वाषष्टिजास्त्रयश्चत्वारिंशदंशास्तथोपरि ।
तस्यांशस्य त्रयस्त्रिंशद्विभागाः सप्तषष्टिजाः ॥ २९ ॥ अत्र येऽर्कस्य नक्षत्रयोगे प्रोक्ता मुहूर्त्तकाः । ते भानु-
सत्का बोद्धव्या, विधोस्तु व्यावहारिकाः ॥ ३० ॥ आह च—अहोरात्रस्य हि त्रिंशत्तमोऽंशो व्यावहारिकः ।
मुहूर्त्त इति जानीमः, किंरूपोऽसौ रवेः पुनः ! ॥ ३१ ॥ अत्रोच्यते—यत्संपूर्णमहोरात्रं, युज्यते भं हिमां-
शुना । तस्य योगोऽभवद्यावत्कालमुष्णांशुना सह ॥ ३२ ॥ तस्य त्रिंशत्तमो भागो, यावान् जायेत निश्चितः ।
तावन्मानो मुहूर्त्तोऽत्र, ज्ञेयो विज्ञैर्विवस्वतः ॥ ३३ ॥ स चायं—त्रयोदश मुहूर्त्तानि, मुहूर्त्तस्यैककस्य च । कृत- ५
द्वाषष्टिभागस्य, चतुर्विंशतिरंशकाः ॥ ३४ ॥ द्वाषष्ट्यंशस्य चैकस्य, छिन्नस्य सप्तषष्टिधा । किंचित्समधिकाः
सार्द्धास्त्रिपञ्चाशद्विभागकाः ॥ ३५ ॥ तथाहि—स्युर्द्वादशमुहूर्त्ताढ्या, अहोरात्रास्त्रयोदश । समक्षेत्राणामुडूनां,
योगकालो विवस्वतः ॥ ३६ ॥ त्रयोदशाहोरात्रा ये, मुहूर्त्तकरणाय ते । त्रिंशद्गुणीकृता जाता, नवत्याढ्या
शतत्रयी ॥ ३७ ॥ द्वादशानां मुहूर्त्तानां, शेषाणामत्र योजने । चतुःशती द्व्युत्तरा स्यात्त्रिंशता सा विभज्यते
॥ ३८ ॥ पूर्णास्त्रयोदश प्राप्ताः, शिष्यन्ते द्वादशाथ ते । द्वाषष्टिघ्नाश्चतुश्चत्वारिंशा सप्तशती भवेत् ॥ ३९ ॥ १०
एतस्यास्त्रिंशता भागे, चतुर्विंशतिराप्यते । शेषा चतुर्विंशतिः सा, सप्तषष्ट्या हता भवेत् ॥ ४० ॥ अष्टाढ्या
षोडशशती, त्रिंशताऽसौ विभज्यते । प्राप्ताः सार्द्धास्त्रिपञ्चाशत्किञ्चित्समधिका इति ॥ ४१ ॥ इति सूर्यमुहू-
र्त्तप्रमाणानयनोपायः ॥ तुल्यार्द्धसार्द्धक्षेत्रोडुपूक्तमाना मुहूर्त्तकाः । त्रिंशत्पञ्चदश पञ्चचत्वारिंशत्स्युरुष्णगाः १४

चन्द्राद्यब्देषु मुहूर्त्ता दिनानि

॥ ४२ ॥ तैश्च त्रयोदश दिनाः, सद्वादशमुहूर्त्तकाः । तथा स्युः षडहोरात्रा, मुहूर्त्ताश्चैकविंशतिः ॥ ४३ ॥ अहोरात्रा विंशतिश्च, मुहूर्त्तत्रितयाधिकाः । क्रमात्त्रैधेषु भेष्वर्कभोगः स्याद्व्यावहारिकः ॥ ४४ ॥ अष्टादश शतास्त्रिंशा, अहोरात्रा युगे स्मृताः । पञ्चानामपि वर्षाणां, तत्तत्संख्यासमुच्चयात् ॥ ४५ ॥ तथाहि—संवत्सरास्त्रयश्चान्द्रा, युगे द्वौ चाभिवर्द्धितौ । तत्र चन्द्राब्दस्य मानमित्येतत्प्राग्निरूपितम् ॥ ४६ ॥ चतुष्पञ्चाशदधिकमहोरात्रशतद्वयम् । द्वादश द्वाषष्टिभागा, अहोरात्रस्य चोपरि ॥ ४७ ॥ अस्मिंस्त्रिगुणिते जातमहोरात्रसहस्रकम् । द्वाषष्ट्याऽभ्यधिकं षट्त्रिंशच्च द्वाषष्टिजा लवाः ॥ ४८ ॥ अभिवर्द्धितमानं चाहोरात्राणां शतत्रयम् । सत्र्यशीति चतुश्चत्वारिंशद् द्वाषष्टिजा लवाः ॥ ४९ ॥ अस्मिन् द्विगुणिते सप्त, शताः षट्षष्टिसंयुताः । अहोरात्राः स्युस्तथाष्टाशीतिर्द्वाषष्टिजा लवाः ॥ ५० ॥ अष्टाशीतिरमी भागाः, प्राच्यषट्त्रिंशता युताः । जाताश्चतुर्विंशमेव, शतं द्वाषष्टिजा लवाः ॥ ५१ ॥ अहोरात्रद्वयं लब्धं, द्वाषष्ट्याऽस्मिन् हृते सति । अष्टादश शतास्त्रिंशाः, सर्वे संकलितास्ततः ॥ ५२ ॥ सप्तषष्टिर्ऋक्षमासा, द्वाषष्टिस्ते तथैन्दवाः । ऋतुमासाश्चैकषष्टिः, षष्टिर्मासा विवस्वतः ॥ ५३ ॥ अभिवर्द्धितमासाश्च, सप्तपञ्चाशदाहिताः । शिष्येत सप्ताहोरात्री, सैकादशमुहूर्त्तिका ॥ ५४ ॥ त्रयोविंशतिरंशाश्च, मुहूर्त्तस्य द्विषष्टिजाः । मासानां मानमित्येवं, युगे प्रोक्तं पृथक् पृथक् ॥ ५५ ॥ युगाहोरात्रवृन्दस्य, हृते भागे यथोदितैः । स्वीयस्वीयमासमानैर्युगे मासास्त्रयो (तथा)ऽत्र च ॥५६ ॥

अयनानि दश प्राहुर्ऋतवस्त्रिंशदाहिताः । षष्टिर्मासाः शतं विंशं, पक्षाः सौरप्रमाणतः ॥ ५७ ॥ चतुष्पञ्चाशत्सहस्राः, शतैर्नवभिरन्विताः (५४९००) । युगे मुहूर्त्ता निर्दिष्टाः, शिष्टैर्विष्टपपूजितैः ॥ ५८ ॥ एकोनविंशतिसहस्राधिकं लक्षयोर्द्वयम् । आढकानां षट् शतानि, तौल्यमानं युगे जगुः (२१९६००) ॥ ५९ ॥ चतुष्पञ्चाशच्छतानि, भाराणां नवतिस्तथा (५४९०) । मेयरूपतया मानं, युगस्याहुर्मनीषिणः ॥ ६० ॥ चान्द्रं वर्षं युगस्यादिस्तस्यादिर्मास इष्यते । मासादिरसितः पक्षस्तस्यादिर्दिवसो भवेत् ॥६१॥ तत्रापि भरतक्षेत्रे, क्षेत्रे चैरवताभिधे । युगस्यादिर्दिनस्यादौ, विदेहेषु निशामुखे ॥ ६२ ॥ यदाषाढपौर्णमासीरजन्याः समनन्तरं । प्रवर्त्तते युगस्यादिर्भरतैरवताख्ययोः ॥ ६३ ॥ पूर्वापरविदेहेषु, तदा च रजनीमुखम् । ततो निशामुखादेव, युगादिस्तत्र कीर्त्तितः ॥ ६४ ॥ किंच—रुद्राद्यो मुहूर्त्ताः स्युरहोरात्रा दिनादयः । उक्ता जिनेन्द्रैर्भरतैरावताह्वयवर्षयोः ॥ ६५ ॥ महाविदेहेषु पुनरहोरात्रा निशादयः । यतस्तत्र युगस्यादिर्निशारम्भात्प्रवर्त्तते ॥ ६६ ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिसूत्रे[1]—' किमाईं णं भंते ! संवच्छरा ? किमाइया अयणा ? किमाइया उऊ ? किमाइया मासा ? किमाइया पक्खा ? किमाइया अहोरत्ता ? किमाइया करणा ? किमाइया नक्खत्ता ?, गोअमा ! चन्दाइया संवच्छरा, दक्खिणाइया अयणा, पाउसाइया उऊ, सावणाइया मासा, बहुलाइया पक्खा, दिवसाइया अहोरत्ता, रुद्दाइया मुहुत्ता, बवाइया करणा, अभियाइया नक्खत्ता पन्नत्ता समणाउसो !" श्राव-

१ सूत्रमेतत् जम्बूद्वीपगतयोर्भरतैरावतयोः सूर्यचारं युगादिभाविनं तिथ्यादिं चापेक्ष्य ज्ञेयम्, अन्ययुगस्य मध्ये वर्षप्रभृतेरादीनां वैचित्र्येऽनिष्टापत्तेः ।

॥ ३८५ ॥

णासितपक्षस्य, तिथेः प्रतिपदोऽपि च । बालवस्य करणस्य, ऋक्षस्याभिजितस्तथा ॥ ६७ ॥ प्रथमे समये प्रोक्तो, युगारम्भश्चिदुत्तरैः । भरतैरावतमहाविदेहेषु समं जिनैः ॥ ६८ ॥ तथोक्तं ज्योतिष्करण्डे—"सावणबहुलपडिवए, बालवकरणे अभीइनक्खत्ते । सव्वत्थ पढमसमए जुगस्स आइं वियाणाहि ॥ ६९ ॥" इदं तु वाल्लभ्यवाचनानुगतं ज्ञेयं, ज्योतिष्करण्डकर्त्तुर्वालभ्यत्वात्, माथुरवाचनानुगतभगवत्यादिसूत्रेषु तु यस्मिन् समये मेरोर्दक्षिणोत्तरयोर्युगस्य प्रतिपत्तिस्ततोऽनन्तरे द्वितीये समये मेरोः पूर्वापरयोर्युगस्य प्रतिपत्तिरित्यभिप्रायो दृश्यते, तथा च तद्ग्रन्थः—"जया णं भंते ! जंबुद्दीवे दीवे दाहिणड्ढे वासाणं पढमे समए पडिवज्जइ तया णं उत्तरड्ढेवि वासाणं पढमे समए पडिवज्जइ, जयाणं उत्तरड्ढे वासाणं पढमे समए पडिवज्जइ तया णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमपचत्थिमेणं अणंतरपुरक्खडसमयंसि वासाणं पढमे समए पडिवज्जइ ?, तह चेव जाव पडिवज्जइ," एवं चावलिकादिसूत्रगर्भितं ऋतुत्रयसूत्रं अयनसूत्रं चाधीत्य 'जहा अयणेणं अभिलावो तहा संवच्छरेणवि भाणिअव्वो, जुएणवि वाससएणवि' इत्यादि भूयान् सूत्रसंदर्भो भगवतीसूत्रादर्शाद्बोध्यः, जम्बूद्वीपप्रज्ञप्तिसूत्रेऽपि इदमेव सूत्रं 'जहा पंचमसए पढमुद्देसए' इत्यतिदेशेन संगृहीतं बोद्धव्यं । अत्र च जम्बूद्वीपप्रज्ञप्तिवृत्तौ उ० श्रीशान्तिचन्द्रगणिभिरिहैवमुक्तं—"युक्त्यानुकूलं तु युगपत्प्रतिपत्तिसमये संभावयामः," तथाहि—'सव्वे कालविसेसा, सूरपमाणेण हुंति नायव्वा' इति वचनाद् यदि सूर्यचारविशेषेण कालविशेष-

१ सव्वत्थेत्यस्य सर्वेषां भरतानां सर्वेषामैरावतानां ग्रहणे न मतभेदोऽत्र ।

प्रतिपत्तिर्दक्षिणोत्तरयोराद्यसमये तर्हि दक्षिणोत्तरप्रतिपत्तिसमये पूर्वापरयोः पूर्वकालस्यापर्यवसानं वाच्यं, पूर्वापरविदेहापेक्षयाऽस्त्येव तदिति चेत्सूर्ययोश्चीर्णचरणं अपरं वा सूर्यद्वयं वाच्यं ययोश्चारविशेषाद्दक्षिणोत्तरप्रतिपत्तिसमयापेक्षयोत्तरसमये पूर्वापरयोः कालविशेषप्रतिपत्तिरित्यादि भूयान् परवचनावकाश इत्यलं प्रसङ्गेनेति । वक्ष्यन्ते ये च कालांशाः, सुषमसुषमादयः । आरम्भं प्रतिपद्यन्ते, सर्वे तेऽपि युगादितः ॥७०॥ युगपर्यवसाने च, ते यान्ति परिपूर्णताम् । तस्मात्कालविशेषेषु, युगं प्रागुदितं जिनैः ॥७१॥ तदुक्तं ज्योतिष्करण्डके—"एए कालविभागा, पडिवज्जंते जुगंमि खलु सव्वे।पत्तेयं पत्तेयं जुगस्स अंते समप्पिंति॥७२॥" ज्योतिष्करण्डटीकाकाराः पादलिप्तसूरयोऽप्याहुः—"एए उ सुसमसुसमादयो अद्धाविसेसा जुगाइणा सह पवत्तंते जुगंतेण सह समप्पिंति"।

अथ वक्ष्ये प्रतियुगमयनानि यथाऽऽगमम् । आवृत्तीः सूर्यशशिनोस्तत्तिथीनुडुभिस्सह ॥ ७३ ॥ स्वरूपमृतुमासानां, तिथीनां चावमस्य च । नक्षत्राणि यथायोगमेतेषां करणान्यपि ॥ ७४ ॥ युगे युगेऽयनानि स्युर्भानोर्दश दश ध्रुवम् । तदेकैकमहोरात्रसत्र्यशीतिशतात्मकम् ॥ ७५ ॥ प्रत्ययः क इहात्रेति, यदि शुश्रूष्यते त्वया । त्रैराशिकं तदाऽत्रेदं, श्रूयतां मित्र ! दर्श्यते ॥ ७६ ॥ अष्टादश शतास्त्रिंशा, अयनैर्दशभिर्यदि । अहोरात्रास्तदैकेनायनेन किं लभामहे ? ॥ ७७ ॥ अत्रान्त्येनैकरूपेण, राशिना गुणितः स्थितः । तथैव मध्यमो राशिरेकेन गुणितं हि तत् ॥ ७८ ॥ ततो दशकरूपेण, हृतेऽस्मिन्नाद्यराशिना । अहोरात्रशतं लब्धं, सत्र्यशीति यथोदितम् ॥ ७९ ॥ मण्डलानामपि शतं, सत्र्यशीति चरेद्रविः । एकैकं प्रत्यहोरात्रं, पूरयन्नयनेऽयने

॥ ८० ॥ सर्वान्तरानन्तरे यन्मण्डले दक्षिणायनम् । आरभ्यते पूर्यते तत्सर्वबाह्ये च मण्डले ॥ ८१ ॥ सर्वबाह्यानन्तरे च, मण्डलेऽथोत्तरायणम् । आरभ्यते पूर्यते तत्सर्वाभ्यन्तरमण्डले ॥ ८२ ॥ अथ सूर्यायनज्ञानविषये करणं ब्रुवे । यतोऽतीतवर्त्तमानायनज्ञानं सुखं भवेत् ॥ ८३ ॥ राकामावास्यारूपाणि, प्राग्विवक्षितवासरात् । तानि पञ्चदशघ्नानि, कर्त्तव्यानि ततोऽत्र च ॥ ८४ ॥ अतीतास्तिथयः क्षेप्या, वर्त्तमानस्य पर्वणः । पात्यन्तेऽवमरात्राश्च, युगादारभ्य ये गताः ॥ ८५ ॥ राशौ तस्मिंस्ततो भक्ते, सत्र्यशीतिशतेन यत् । लब्धमेकद्व्यादिरूपं, तत्संस्थाप्य विचिन्त्यते ॥ ८६ ॥ लब्धः समोऽङ्को यदि तद्व्यतीतमुत्तरायणम् । विषमोऽङ्कोऽथ लब्धश्चेत्तद्गतं दक्षिणायनम् ॥ ८७ ॥ अंशास्तु ये पूर्वराशौ, भागशेषा अवस्थिताः । ते तत्कालं प्रवृत्तस्यायनस्य दिवसाः किल ॥ ८८ ॥ युगमध्ये यथा कश्चिन्नवमासव्यतिक्रमे । जनः पृच्छति पञ्चम्यां, किमद्यायनमस्ति ? भोः ! ॥ ८९ ॥ अनन्तरं च कतरद्व्यतीतमिति तत्र च । पूर्वोक्तविधिना प्राज्ञो, दद्यादित्येवमुत्तरम् ॥ ९० ॥ नवानां ननु मासानां, पर्वाण्यष्टादशागमन् । तानि पञ्चदशघ्नानि, द्वौ शतौ स्तः सप्तती ॥ ९१ ॥ पञ्चम्यां पृष्टमिति च, क्षिप्यते तत्र पञ्चकम् । पञ्चसप्ततिसंयुक्ते, संजाते द्वे शते ततः ॥ ९२ ॥ नवमास्यां च चत्वारोऽवमरात्रा भवन्ति ये । ते त्यज्यन्ते ततो जातौ, द्वौ शतौ सैकसप्तती ॥ ९३ ॥ अस्य राशेः सत्र्यशीतिशतेन भजने सति । लब्धमेकं रूपमष्टाशीतिः शेषाऽवतिष्ठते ॥ ९४ ॥ ततश्चातीतमयनमेकं तदपि दक्षिणम् । साम्प्रतं वर्त्तमानं च, गण्यतामुत्तरायणम् ॥ ९५ ॥ तस्याप्यष्टाशीतितमं, साम्प्रतं वर्त्तते दिनम् । द्वितीयो-

ऽप्यत्र दृष्टान्तो, दर्श्यते गुरुदर्शितः ॥ ९६ ॥ पञ्चविंशतिमासातिक्रमे केनापि पृच्छयते । दशम्यामयनं किं भो !, वर्त्ततेऽद्य गतं च किम् ? ॥ ९७ ॥ पञ्चाशद्यानि पर्वाणि, मासेषु पञ्चविंशतौ । तानि पञ्चदशघ्नानि, पञ्चाशा सप्तशत्यभूत् ॥ ९८ ॥ दशम्यां पृष्टमिति च, क्षिप्यन्ते दश तेन च । शतानि सप्त जातानि, षष्ट्याढ्यानि ततः परम् ॥ ९९ ॥ द्वादशावमरात्राः स्युर्मासेषु पञ्चविंशतौ । तेषु त्यक्तेष्वष्टचत्वारिंशा सप्तशती भवेत् ॥ ५०० ॥ सत्र्यशीतिशतेनास्य, राशेर्विभजने सति । चत्वार एव लभ्यन्ते, शेषास्तिष्ठन्ति षोडश ॥ १ ॥ गतानि चत्वार्ययनान्यतीतं यदनन्तरम् । तदुत्तरायणं दक्षिणायनं त्वस्ति साम्प्रतम् ॥ २ ॥ षोडशो दिवसस्तस्याप्यधुना खलु वर्त्तते । एवमन्यत्रापि भाव्यं, करणं ज्ञैर्यथोचितम् ॥ ३ ॥ युगे युगे चतुस्त्रिंशमयनानां शतं विधोः । तच्चैकैकं भचक्रार्द्धभोगमानमिहोदितम् ॥ ४ ॥ सर्वर्क्षभोगकालो हि, विधोः संकलितो भवेत् । सप्तविंशतिरेवाहोरात्राः पूर्णास्तथोपरि ॥ ५ ॥ सप्तषष्टिविभक्ताहोरात्रांशाश्चैकविंशतिः । भमासोऽप्ययमेवेन्दोरुदग्याम्यायनात्मकः ॥ ६ ॥ सप्तषष्टिविभक्ताहोरात्रांशानां भवेदिह । भमासस्त्रिंशदधिकैरष्टादशमितैः शतैः ॥ ७ ॥ ईदृशाश्च भमासाः स्युः, सप्तषष्टिर्युगे युगे । एकैकस्मिन् भमासे च, स्यादिन्दोरयनद्वयम् ॥ ८ ॥ युक्तं ततश्चतुस्त्रिंशमयनानां शतं युगे । एकैकस्यायनस्याथ, मानं व्यक्त्या निशम्यताम् ॥ ९ ॥ चरेत्प्रत्ययनं चन्द्रो, मण्डलानि त्रयोदश । चतुश्चत्वारिंशदंशांश्चैकस्य सप्तषष्टिजान् ॥ १० ॥ ततश्च—त्रयोदशैवाहोरात्रा, भागाश्च सप्तषष्टिजाः । चतुश्चत्वारिंशदहोरात्रस्यायनमैन्दवम् ॥ ११ ॥ यद्वा—सप्तषष्टिभवैः

पञ्चदशाढ्यैर्नवभिः शतैः । अहोरात्रस्य भागैः स्याद्धमासार्द्धं सुनिश्चितम् ॥ १२ ॥ चन्द्रस्यैकैकमयनमेतन्मानं
निरूपितम् । त्रैराशिकबलेनात्र, प्रत्ययोऽपि निरूप्यते ॥ १३ ॥ चतुस्त्रिंशेनायनानां, शतेन तुहिनद्युतेः । प्राप्ता-
न्यष्टादश त्रिंशान्यहोरात्रशतानि चेत् ॥ १४ ॥ तदैकेनायनेनेन्दोर्लभ्यते किमिति त्रिषु । अन्त्येनैकेन गुणितो,
मध्यराशिस्तथा स्थितः ॥ १५ ॥ आद्येन च चतुस्त्रिंशशतरूपेण राशिना । मध्यराशौ हृते लब्धा, अहोरात्रा-
स्त्रयोदश ॥ १६ ॥ अष्टाशीतिः शिष्यते सा, सप्तषष्ट्या निहन्यते । अष्टापञ्चाशच्छतानि, स्युः षण्णवतिम- २०
न्यथ ॥ १७ ॥ चतुस्त्रिंशशतेनैषां, हृते भागे यथोदिताः । चतुश्चत्वारिंशदंशाः, संप्राप्ताः सप्तषष्टिजाः ॥ १८॥
अत्र चन्द्रायणज्ञानविषये करणादिनिरूपणं तु क्षेत्रलोके विंशतितमे सर्गे कृतमस्तीति ततो ज्ञेयं । अयनानि
दशार्कस्य, चतुस्त्रिंशं शतं विधोः । युगे युगे स्युर्यत्तत्र, त्रैराशिकमथोच्यते ॥ १९ ॥ सत्र्यशीतिशतेना-
होरात्राणामयनं रवेः । स्याद्येकं तदा त्रिंशैः, किमष्टादशभिः शतैः ? ॥ २० ॥ त्रैराशिकस्थापना १८३-१-
१८३०, अन्त्येन राशिना राशावेकरूपेऽत्र मध्यमे । गुणिते स्युः शतान्यष्टादश त्रिंशद्युतान्यथ ॥ २१ ॥ आद्येन
राशिना भागे, सत्र्यशीतिशतात्मना । लब्धा दशैतावन्त्येवायनानि स्युर्युगे रवेः ॥ २२ ॥ सप्तषष्ट्युद्भवचतु- २५
श्चत्वारिंशल्लवाधिकैः । त्रयोदशभिरेकं चेदहोरात्रैः किलायनम् ॥ २३ ॥ त्रिंशैस्तदाष्टादशभिरहोरात्रशतै-
र्विधोः । अयनानि कियन्ति स्युरिति राशित्रयं लिखेत् ॥ २४ ॥ राशित्रयस्थापना—$१३\frac{४४}{६७}$-१-१८३०
सावर्ण्यार्थमाद्यराशावहोरात्रास्त्रयोदश । सप्तषष्ट्या निहत्यांशाः, क्षिप्यन्ते सन्ति येऽधिकाः ॥ २५ ॥ जाता २८

॥ ३८८ ॥

नवशती पञ्चदशोपेताऽथ सन्ति ये । अष्टादश शतास्त्रिंशाः, सप्तषष्ट्यैव तेऽपि च ॥ २६ ॥ सवर्णनार्थं
ताड्यन्ते, लक्षमेकं भवेत्ततः । द्वाविंशतिः सहस्राणि, षट्शती च दशोत्तरा ॥ २७ ॥ अन्त्येन राशिनाऽथैवं-
रूपेण मध्यमो हतः । नूनमेकात्मको राशिर्गुणकेन समोऽभवत् ॥ २८ ॥ ततोऽस्मिन्नवभिः पञ्चदशोपेतैः
शतैर्हृते । चतुस्त्रिंशं शतं लब्धमयनानां युगे विधोः ॥ २९ ॥ अथायनारम्भरूपा, भवन्त्यावृत्तयो दश । तत्र
स्युः श्रावणे पञ्च, पञ्च माघे विवस्वतः ॥ ३० ॥ याम्यायनारम्भरूपाः, पञ्च ताः श्रावणे स्मृताः । तथोत्तरा- ५
यणारम्भरूपा माघे च पञ्च ताः ॥ ३१ ॥ आद्यावृत्तिः श्रावणाद्यप्रतिपद्यभिजिद्युता । माघस्य श्यामसप्तम्यां,
द्वितीया हस्तसंयुता ॥ ३२ ॥ तृतीया स्यान्नभःकृष्णत्रयोदश्यां मृगान्विता । चतुर्थी शुक्लतुर्यायां, माघे शत-
भिषग्युता ॥ ३३ ॥ विशाखायुग्नभःश्वेतदशम्यां पञ्चमी भवेत् । षष्ठी माघे प्रतिपदि, श्यामायां पुष्यशा-
लिनी ॥ ३४ ॥ सप्तमी कृष्णसप्तम्यां, श्रावणे रेवतीयुता । माघे कृष्णत्रयोदश्यामष्टमी मूलसंयुता ॥ ३५ ॥
नभश्चतुर्थ्यां शुक्लायां, नवमी योनिदेवयुग् । माघकृष्णत्रयोदश्यां, दशमी कृत्तिकाश्रिता ॥ ३६ ॥ अथात्र १०
करणं—विशिष्टतिथियुक्ता या, ह्यावृत्तिर्ज्ञातुमिष्यते । गुण्यते तत्सङ्ख्ययैकोनया त्र्यशीतियुक् शतम् ॥ ३७ ॥
अङ्कस्थानेन गुणितं, येन त्र्यशीतियुक् शतम् । त्रिघ्नं रूपेणाधिकं तद्राशौ जाते नियोजयेत् ॥ ३८ ॥ ततश्च
पञ्चदशभिर्हृते भागे यदाप्यते । गतेष्वेतावत्सु पर्वस्वावृत्तिः सा विवक्षिता ॥ ३९ ॥ पश्चादुद्धरिता येऽङ्का-
स्तावत्सु दिवसेष्वथ । चरमे दिवसे विन्यादावृत्तिं तां विवक्षिताम् ॥ ४० ॥ आद्यावृत्तिर्युगे कस्यां, तिथा- १४

वित्यूह्यते यदि । तत्प्रस्तुतेयं प्रथमावृत्तिरित्येकको धृतः ॥ ४१ ॥ अस्मिंश्चैकोनिते शेषः, कश्चिदङ्को न तिष्ठति । तत्पाश्चात्ययुगावृत्तिर्दशमी ध्रियतेऽन्तिमा ॥ ४२ ॥ ततस्त्र्यशीत्याऽभ्यधिकं, दशभिर्गुण्यते शतम् । त्रिंशान्येवं शतान्यष्टादश (१८३०) जातान्यतः परम् ॥ ४३ ॥ दशभिर्गुणितं यस्मात्सत्र्यशीतिशतं ततः । दश त्रिघ्नाः सैकरूपाश्चैकत्रिंशद्भवन्ति ये ॥ ४४ ॥ ते पूर्वराशौ क्षिप्यन्ते, एकषष्ट्यधिका ततः । अष्टादशशती जाता (१८६१) तां पञ्चदशभिर्भजेत् ॥ ४५ ॥ चतुर्विंशं शतं लब्धमेकं रूपं च शिष्यते । जिज्ञासिताया आवृत्तेस्ततोऽभूदिति निर्णयः ॥ ४६ ॥ चतुर्विंशपर्वशतात्मके प्राच्ययुगे गते । प्रवर्त्तमानेऽभिनवे, युगस्य प्रथमे तिथौ ॥ ४७ ॥ आद्याऽऽवृत्तिः प्रतिपदि, भवतीत्यथ कथ्यते । द्वितीयोऽप्यत्र दृष्टान्तो, बोधदार्ढ्याय धीमताम् ॥ ४८ ॥ कस्यां तिथौ द्वितीया स्यादावृत्तिर्माघभाविनी ? । इति प्रश्ने कृते धार्य, आवृत्त्यङ्को द्विकस्तदा ॥ ४९ ॥ अस्मिन्नङ्के चैककोने, एक एवावशिष्यते । सत्र्यशीतिशतं तेन, गुण्यते स्यात्तथा स्थितम् ॥ ५० ॥ एकोऽत्र गुणकस्त्रिघ्नः, सैको जातश्चतुष्टयम् । एतद्युक्तोऽभवद्राशिः, ससाशीतियुतं शतम् ॥ ५१ ॥ भागेऽस्य पञ्चदशभिर्लभ्यन्ते द्वादशोपरि । शिष्यन्ते सप्त तेनैष, पूर्वोक्तप्रश्ननिर्णयः ॥ ५२ ॥ स्याद् द्वितीया द्वादशानां, विगमे युगपर्वणाम् । माघस्य श्यामसप्तम्यामावृत्तिस्तिग्मरोचिषः ॥ ५३ ॥ कस्यां तिथौ स्यादावृत्तिस्तृतीयेतीष्यते यदि । तदा धृतस्त्रिको रूपोनितेऽस्मिन् शिष्यते द्विकः ॥ ५४ ॥ सत्र्यशीतिशतं तेन, गुणितं जायते किल । शतत्रयं सषट्षष्टि, द्विकेऽथ त्रिगुणीकृते ॥ ५५ ॥ सैके जाताः सप्त ते च, पूर्वराशौ नियोजिता । त्रिस-

सत्या समधिकमेवं जातं शतत्रयम् ॥ ५६ ॥ हृतेऽस्मिन् पञ्चदशभिश्चतुर्विंशतिराप्यते । त्रयोदशावशिष्यन्ते, तदेष प्रश्ननिर्णयः ॥ ५७ ॥ चतुर्विंशतिपक्षातिक्रमे तीर्थेश्वरैर्युगे । नभःकृष्णत्रयोदश्यां, तृतीयाऽऽवृत्तिरीरिता ॥ ५८ ॥ एवमन्यास्वपि तिथिषु करणभावना कार्या, आवृत्तिनक्षत्रज्ञानमुद्दिश्य करणं त्वतिविस्तरमिति नात्र प्रपञ्चितं, तज्ज्योतिष्करण्डवृत्त्यादिभ्योऽवसेयं, अत्र वासना चैवं—आवृत्तिघस्रादेकस्मादावृत्तिरपरा भवेत् । दिने चतुरशीत्याढ्यशततमे यथाक्रमम् ॥ ५९ ॥ सत्र्यशीतिदिनशतमानमेकं यतोऽयनम् । समाप्यारभ्यते नव्यायनं घस्रे ततोऽग्रिमे ॥ ६० ॥ नभःकृष्णप्रतिपदो, माघस्य श्यामसप्तमी । भवेच्चतुरशीत्याढ्यशततम्येव तद्यथा ॥ ६१ ॥ षण्णां मासामहोरात्राः, स्युरशीतियुतं शतम् । माघस्य सप्ताहानीति, ससाशीतियुतं शतम् ॥ ६२ ॥ एभ्यस्त्रयोऽवमरात्राः, पात्यन्ते मासषट्कजाः । ततश्चतुरशीत्याढ्यं, शतमेव व्यवस्थितम् ॥ ६३ ॥ तत्र च—सत्र्यशीतिदिनशतमानमेकं किलायनम् । षष्ठ्यां पूर्णं पुनश्चान्यत्सप्तम्यां प्रत्यपद्यत ॥ ६४ ॥ एवं च—माघस्य श्यामसप्तम्या, द्वादशी नभसोऽसिता । सत्र्यशीतिशततमी, पूर्णं तत्र ततोऽयनम् ॥ ६५ ॥ त्रयोदश्यां च संप्राप्तं, भूयोऽपि दक्षिणायनम् । एवमावृत्तितिथिषु, कार्याऽन्यास्वपि भावना ॥ ६६ ॥ इन्दुभोग्योडुसंयोगः, प्रागुक्तस्तिथिभिः सह । वक्ष्येऽर्कभोग्यनक्षत्राण्यावृत्तिषु दशस्वथ ॥ ६७ ॥ आवृत्तीः श्रावणे पञ्चाप्यादित्यः कुरुते युगे । पुष्ययुक्तो वहिर्गच्छन्, सर्वाभ्यन्तरमण्डलात् ॥ ६८ ॥ अष्टादशमुहूर्त्ताढ्यमहोरात्रचतुष्टयम् । पुष्यस्य भुक्त्वाऽर्कः सर्वा, आवृत्तीः श्रावणे सृजेत् ॥ ६९ ॥ अभ्यन्तरं

विशन् बाह्यमण्डलात् कुरुते रविः । पश्चापि माघस्यावृत्तीरभिजित्प्रथमक्षणे ॥ ७० ॥ तथोक्तं ज्योतिष्करण्डके—"अब्भिंतराहि निंतो, आइच्चो पुस्सजोगमुवगम्म । सव्वा आउट्टीओ करेइ सो सावणे मासे ॥ ७१ ॥ बाहिरओ पविसंतो आइच्चो अभिइजोगमुवगम्म । सव्वा आउट्टीओ करेइ सो माघमासंमि ॥ ७२ ॥" एवं च मकरे राशौ, यद्भानोरुत्तरायणम् । कर्के याम्यायनं लोके, ख्यातं तदपि संगतम् ॥ ७३ ॥

अथ विषुवत्प्रकरणं निरूप्यते—पञ्चदशमुहूर्त्तात्मा, रजनी दिवसोऽपि च । यत्र तुल्यावुभौ स्यातां, स कालो विषुवं स्मृतम् ॥ ७४ ॥ तथोक्तमभिधानचिन्तामणौ—"तुल्यनक्तंदिने काले, विषुवद् विषुवं च तत्"। तच्च श्यामादिवसयोः, पञ्चदशमुहूर्त्तयोः । प्रदोषकाले विज्ञेयं, निश्चयापेक्षया बुधैः ॥ ७५ ॥ यतः—सार्द्धैकनवतौ बाह्यादाभ्यन्तराच्च मण्डलात् । समाक्रान्तेषु सूर्येण, मण्डलेषु भवेदिदम् ॥ ७६ ॥ तत्प्रत्ययनमेकैकं, ततस्तानि युगे दश । याम्यायनस्य पञ्चौजान्येषु स्युर्मासि कार्त्तिके ॥ ७७ ॥ समानि माधवे मासि, पञ्च सौम्यायनस्य च । तिथिचन्द्रार्कनक्षत्रयोगोऽथैषां निरूप्यते ॥ ७८ ॥ तृतीयायां तिथौ षट्सु, व्यतिक्रान्तेषु पर्वसु । रोहिणीचन्द्रनक्षत्रे, विषुवं प्रथमं भवेत् ॥ ७९ ॥ त्रिंशत्पर्वातिक्रमे च, पञ्चदश्यां तृतीयकम् । प्रज्ञप्तं स्वातिनक्षत्रे, विषुवं पुरुषोत्तमैः ॥ ८० ॥ त्रिचत्वारिंशतं पर्वाण्यतिक्रम्य युगादितः । स्यात्पुनर्वसुनक्षत्रे, तुर्यं षष्ठीतिथौ ध्रुवम् ॥ ८१ ॥ पञ्चपञ्चाशतं पर्वाण्यतिक्रम्य च पञ्चमम् । उत्तरासु भद्रपदास्वाख्यातं द्वादशीतिथौ ॥ ८२ ॥ अष्टषष्टिमतिक्रम्य, पर्वाणि विषुवं भवेत् । षष्ठं तिथौ तृतीयायां, मैत्रनक्षत्र एव च ॥ ८३ ॥ पर्वाण्यशीतिमुल्लङ्घ्य, नवम्यां सप्तमं पुनः । मघासु मघवत्पूज्यैर्विषुवं कथितं जिनैः ॥ ८४ ॥ अतिक्रम्य द्विनवतिं, पर्वाण्यष्टममीरितम् । अश्विनीनाम्नि नक्षत्रे, पञ्चदश्यां तथा तिथौ ॥ ८५ ॥ पञ्चाधिकं पर्वशतं, व्यतीत्य नवमं जिनैः । स्यादाषाढास्तूत्तरासु, तिथौ षष्ठ्यामितीरितम् ॥ ८६ ॥ अतिक्रम्य तथा पर्वशतं सप्तदशाधिकम् । उत्तरासु फाल्गुनीषु, द्वादश्यां दशमं भवेत् ॥ ८७ ॥ अत्रेयं वासना–विषुवं स्यात्तृतीयायां, षट्पर्वातिक्रमेऽग्रिमे । ततो यथोत्तरं योज्याः, षट् तिथ्यङ्के विचक्षणैः ॥ ८८ ॥ द्वितीयादिविषुवतामित्येवं लभ्यते तिथिः । षट्सु क्षिप्तेषु चेत्सङ्ख्या, भवेत्पञ्चदशाधिका ॥ ८९ ॥ तदैकं पर्व पर्वाङ्के, क्षिप्त्वा पञ्चदशात्मकम् । शेषाङ्कप्रमिता विज्ञैर्विज्ञेया विषुवत्तिथिः ॥ ९० ॥ अथात्र करणं निरूप्यते–द्विगुणेष्टविषुवसङ्ख्या रूपोना षड्गुणा च पर्वमितिम् । वक्ति तथा पर्वाङ्को दलीकृतस्त्वाह विषुवतिथिम् ॥ ९१ ॥ ( आर्या ) पर्वाङ्कार्द्धं पञ्चदशाधिकं तु तिथिभिर्भजेत् । पर्वाङ्केष्वागतं दद्याच्छेषाङ्कान्निर्णयेत्तिथिम् ॥ ९२ ॥ तथाहि–युगे विषुवमाद्यं स्यात्कतिपर्वव्यतिक्रमे । कस्यां तिथाविति प्रश्ने करणं भावयेदिति ॥ ९३ ॥ आद्यं विषुवदित्येको, द्विघ्नो रूपोनितः पुनः । एकः स षड्गुणः षट्कः, पर्वाङ्कः सोऽर्द्धितस्तिथिः ॥ ९४ ॥ एवं च—षट्सु पर्वस्वतीतेषु, युगे विषुवमादिमम् । तृतीयायां तिथावेवं, चतुर्थमथ भाव्यते ॥ ९५ ॥ तद्यथा—द्विघ्नश्चतुष्को रूपोनः, सप्त स्युस्ते च षड्गुणाः । द्वाचत्वारिंशद्भवन्ति, तेऽर्द्धितास्त्वेकविंशतिः ॥ ९६ ॥ अधिका पञ्चदशाङ्कादियं तद्भज्यतेऽथ तैः (१५) । पर्वस्वेकं क्षिपेल्लब्धं, शेषाः षट् तिथिसूचकाः ॥ ९७ ॥ ततश्च–स्यात्पर्वसु त्रिचत्वारिंशत्यतीतेष्वथो युगे ।

षष्ठ्यां तिथौ तद्विषुवमेवं सर्वत्र भाव्यताम् ॥ ९८ ॥ पञ्चापि विषुवन्त्यर्कः, कुर्यायाम्यायनस्थितः । स्वातेर्नक्षत्रस्य भुक्त्वा, त्रयोविंशतिमंशकान् ॥ ९९ ॥ अंशाश्चात्र चतुस्त्रिंशदधिकशतच्छिन्नरूपस्य ज्ञेयाः । पञ्चापि विषुवन्त्यर्कः, कुर्यात्सौम्यायनस्थितः । एकोनसप्ततिं भागानश्विन्या अवगाह्य च ॥ ६०० ॥ इति विषुवत्प्रकरणं ॥

अयनानां चतुस्त्रिंशं, शतं शीतद्युतेर्युगे । तत्रोत्तरायणानि स्युः, सप्तषष्टिर्युगे युगे ॥ १ ॥ सप्तषष्टिरेव याम्यायनान्येकान्तराण्यथ । प्रागुत्तरायणं पश्चाद्याम्यायनमिति क्रमः ॥ २ ॥ ततश्च—या नक्षत्रार्द्धमासेनैवोत्तराभिमुखा विधोः । आवृत्तयस्ताः सर्वाः स्युरभिजित्प्रथमक्षणे ॥ ३ ॥ भमासार्द्धेनाथ पुनर्दक्षिणाभिमुखा विधुः । आवृत्तीः कुरुते पुष्ययोगं प्राप्याखिला अपि ॥ ४ ॥ तत्रापि—मुहूर्त्तदशकं भुक्त्वा, विधुर्भागांश्च विंशतिम् । पुष्यस्य सप्तषष्ट्युत्थान्, याम्यावृत्तीः प्रपद्यते ॥ ५ ॥ इत्ययनप्रकरणं समाप्तम् ॥

ब्रूमः षण्णामथर्त्तूनां, स्वरूपं किञ्चिदागमात् । सूर्यसंबन्धिनस्ते स्युश्चन्द्रसंबन्धिनोऽपि च ॥ ६ ॥ सार्द्धास्त्रिंशदहोरात्रा, एको मासो विवस्वतः । ताभ्यां द्वाभ्यामहोरात्रा, एकषष्टिर्कतू रवेः ॥ ७ ॥ ऋतुः प्रावृड् भवेदाद्यो, वर्षारात्रो द्वितीयकः । शरदाख्यस्तृतीयः स्यात्तुर्यो हेमन्तसंज्ञकः ॥ ८ ॥ वसन्तः पञ्चमः ख्यातः, षष्ठो ग्रीष्मः प्रकीर्त्तितः । षडेते ऋतवः ख्याता, युगे त्रिंशद्भवन्ति ते ॥ ९ ॥ उक्तं च ज्योतिष्करण्डके—"पाउस वासारत्तो सरओ हेमंत वसंत गिम्हा य । एए खलु छप्पि उऊ जिणवरदिट्ठा मए सिट्ठा ॥ १० ॥" प्रथमाषाढराकायाः, प्रारभ्यैषामुपक्रमः । भवन्ति त्रिंशतैभिश्च, यथोक्ता युगवासराः १८३० ॥ ११ ॥ द्वावाषाढौ युगान्ते स्तस्तत्राद्यस्य सितत्विषि । चतुर्दश्यां प्राग्युगर्त्तुः, पूर्णस्त्रिंशत्तमो भवेत् ॥ १२ ॥ ततस्तस्यैव राकायां, युगस्याभिनवस्य तु । ऋतुराद्यो लगेद्भाद्रस्याद्येऽसौ पूर्यते तिथौ ॥ १३ ॥ आद्याषाढस्यैकदिनं, त्रिंशत्रिंशद्दिनात्मकौ । द्वितीयाषाढनभसौ, भाद्रस्यैकं दिनं ततः ॥ १४ ॥ स्युर्द्वाषष्टिरेभ्य एकोऽवमरात्रो निपात्यते । एकषष्टिदिनात्मेति, सूर्यर्त्तुः प्रथमो युगे ॥ १५ ॥ एकषष्टिस्त्रिशता च, गुण्या सर्वर्त्तुसङ्ख्यया । अष्टादश शतास्त्रिंशा, एवं स्युर्युगवासराः ॥ १६ ॥ एवमन्यत्रापि भाव्यं, यन्त्रकं वा विलोकनीयं ॥ सूर्यर्त्तुज्ञानविषये, करणं प्रतिपाद्यते । येन विज्ञातमात्रेण, सुखेन ऋतुरूह्यते ॥ १७ ॥ युगेऽतीतपर्वसङ्ख्या, कार्या पञ्चदशाहता । पर्वणो वर्त्तमानस्य, विवक्षितदिनावधि ॥ १८ ॥ क्षिप्यन्ते तत्र तिथयः, पात्यन्तेऽवमरात्रकाः । ततस्ता द्विगुणीकृत्य, सैकषष्टिर्विधीयते ॥ १९ ॥ द्वाविंशेन शतेनास्या, हृते भागे यदाप्यते । तस्मिन् षड्भिर्हृते शेषमतिक्रान्त ऋतुर्भवेत् ॥ २० ॥ द्वाविंशशतभक्तस्य, राशेर्यच्छेषमास्थितम् । तस्मिन् द्वाभ्यां हृते लभ्या, वर्त्तमानर्त्तुवासराः ॥ २१ ॥ युगे प्रथमदीपाल्यां, यदि कश्चन पृच्छति । सूर्यर्त्तुः कतमोऽतीतः ?, कतमो वर्त्ततेऽधुना ? ॥ २२ ॥ सप्त पर्वाण्यतीतानि, तदा तत्र युगादितः । तानि पञ्चदशघ्नानि, स्युः पञ्चाभ्यधिकं शतम् ॥ २३ ॥ द्वाभ्यामवमरात्राभ्यां, हीनं तत् त्र्युत्तरं शतम् । तद् द्वाभ्यां गुण्यते जाते, द्वे शते षड्भिरुत्तरे ॥ २४ ॥ तत्रैकषष्टिक्षेपे द्वे, शते ससप्तषष्टिके । एतयोर्ह्रियते भागो, द्वाविंशेन शतेन च ॥ २५ ॥ द्वौ लभ्येते न तौ भागं, सहेते षड्भिरित्यतः । स्थितौ द्वावेव शेषा ये, त्रयोविंशतिरंशकाः ॥ २६ ॥ तेषामर्द्धे कृते सार्द्धा, एका-

ऋतुप्रारंभतिथयः
॥ ३९२ ॥

दश स्थिता इति । आगतं द्वावृतू यातौ, तृतीयो वर्त्ततेऽधुना ॥ २७ ॥ वर्त्तमानस्य तस्यैकादश जग्मुर्दिना इति । द्वादशोऽस्त्यधुना घस्र, इति प्रश्नस्य निर्णयः ॥ २८ ॥ यद्वाऽक्षयतृतीयायामाद्यायां यदि पृच्छति । तदा पञ्चदशघ्नानि, पर्वाण्येकोनविंशतिः ॥ २९ ॥ पञ्चाशीत्या समधिकं, ततो जातं शतद्वयम् (२८५) । तृतीयायां पृष्टमिति, क्षिप्यन्ते तिथयस्त्रयः ॥ ३० ॥ साष्टाशीति शतद्वन्द्वं (२८८), जज्ञेऽथावमरात्रकैः । पञ्चभिस्त्यक्तमेतत् स्यात्, सत्र्यशीति शतद्वयं (२८३) ॥ ३१ ॥ अस्मिन् द्विगुणिते पञ्चशती षट्षष्टियुग्भवेत् । सैकषष्टिरियं सप्तविंशा भवति षट्शती (६२७) ॥ ३२ ॥ द्वाविंशेन शतेनास्या १२२, भागे पञ्चकमाप्यते । उद्धरन्ति सप्तदश, स्युः सार्द्धा अष्ट तेऽर्द्धिताः ॥ ३३ ॥ पञ्चर्त्तवस्ततोऽतीताः, षष्ठोऽसौ वर्त्ततेऽधुना । अष्टौ जग्मुर्दिनान्यस्याधुना नवममस्ति च ॥ ३४ ॥ त्रिंशतोऽपि युगर्त्तूनां, पूर्त्तेर्मासांस्तिथीनपि । पक्षांश्च कृष्णशुक्लाख्यान्, ब्रूमोऽथ समयोदितान्॥ ३५॥ आद्यो भाद्रपदश्यामप्रतिपद्यन्तमश्नुते । कार्त्तिकस्य तृतीयायां, कृष्णपक्षे द्वितीयकः ॥ ३६ ॥ पौषस्य कृष्णपञ्चम्यां, तृतीयः पूर्त्तिमश्नुते । फाल्गुनश्यामसप्तम्यां, पूर्यते च तुरीयकः ॥ ३७ ॥ राधश्यामनवम्यां च, पञ्चमः परिपूर्यते । शुचेरशुभ्रैकादश्यां, षष्ठः पूर्णो भवेदृतुः ॥ ३८ ॥ पूर्णो भाद्रपदश्यामत्रयोदश्यां च सप्तमः । अमावास्यां कार्त्तिकस्य, पूर्णो भवति चाष्टमः ॥ ३९ ॥ एते यथोक्तमासेषु, कृष्णपक्षेऽन्तमाप्नुयुः । ऋतवोऽष्टापि तीर्थेशैरित्युक्तं सर्वदर्शिभिः ॥ ४० ॥ पौषशुक्लद्वितीयायां, नवमर्त्तुः समाप्यते । फाल्गुनश्वेततुर्यायां, दशमोऽन्तं प्रपद्यते ॥ ४१ ॥ एकादशोऽन्तं वैशाखशुक्लषष्ठ्यां बिभर्त्यथ ।

आषाढशुक्लाष्टम्यां च, द्वादशः परिपूर्यते ॥ ४२ ॥ त्रयोदशो भाद्रपददशम्यां विशदत्विषि । चतुर्दशः कार्त्तिकीकद्वादश्यां धवलद्युतौ ॥ ४३ ॥ पौषश्वेतचतुर्दश्यां, पूर्त्तिं पञ्चदशोऽश्नुते । वलक्षपक्षप्रान्ताः, सप्तामी ऋतवः स्मृताः ॥ ४४ ॥ ऋतवोऽमी पञ्चदश, युगपूर्वार्द्धभाविनः । इतः पञ्चदशोच्यन्ते, युगपश्चार्द्धभाविनः ॥ ४५ ॥ फाल्गुनस्य प्रतिपदि, श्यामायामथ षोडशः । राधकृष्णतृतीयायामन्तं सप्तदशोऽश्नुते ॥ ४६ ॥ आषाढासितपञ्चम्यामन्तमष्टादशो भजेत् । भाद्रानुज्ज्वलसप्तम्यां, पूर्यतेऽष्टादशाग्रिमः ॥ ४७ ॥ कार्त्तिके विंशतितमो, नवम्यां मेचकद्युतौ । पौषस्य कृष्णैकादश्यामेकविंशतिसङ्ख्यकः ॥ ४८ ॥ फाल्गुनस्य त्रयोदश्यां, द्वाविंशः श्यामलत्विषि । स त्रयोविंशतितमो, राधाऽमायां प्रपूर्यत ॥ ४९ ॥ अष्टाप्यमी कृष्णपक्षप्रान्ताः पूर्यतेऽथ च । शुचिशुक्लद्वितीयायां, चतुर्विंशतिपूरणः ॥ ५० ॥ भाद्रस्य श्वेततुर्यायां, पञ्चविंशः प्रपूर्यते । षड्विंशतितमः षष्ठ्यां, शुभ्रायां कार्त्तिकस्य तु ॥ ५१ ॥ स सप्तविंशतितमः, पौषाष्टम्यां सितद्युतौ । दशम्यां फाल्गुने श्वेतत्विष्यष्टाविंशतिप्रमः ॥ ५२ ॥ द्वादश्यां राध एकोनत्रिंशत्तमः सितत्विषौ । शुचिशुक्लचतुर्दश्यां, पूर्त्तिं त्रिंशत्तमोऽश्नुते ॥ ५३ ॥ त्रिंशदप्येवमृतवः, प्रोक्ताः प्राप्तसमाप्तयः । एकान्तरेषु मासेषु, तिथिष्वेकान्तरास्विति ॥ ५४ ॥ किञ्च—कर्ममासात्सूर्यमासेऽहोरात्रार्द्धं यदेधते । ऋतौ द्विभानुमासोत्थेऽहोरात्रो वर्द्धते ततः ॥ ५५ ॥ ततश्च—कर्ममासद्वये षष्टिरहोरात्रा भवन्ति वै । सूर्यमासद्वयात्मर्त्तुस्त्वेकषष्टिदिनात्मकः ॥ ५६ ॥ द्विकर्ममासापेक्षस्तद्भवेदृतुमृतुं प्रति । अहोरात्रः समधिकश्चतुर्मास्यां तु तद्द्वयम् ॥ ५७ ॥ वर्षाशी-

तोष्णकालेषु, चतुर्मासमितेषु यत् । अधिरात्रं भवेत्पर्व, तृतीयमथ सप्तमम् ॥ ५८ ॥ तथोक्तं ज्योतिष्करण्डे—"तइयंमि य कायवं अइरत्तं सत्तमे य पवंमि । वासहिमगिम्हकाले चउचउमासे विहीयंते ॥ ५९ ॥" श्रावणो मार्गशीर्षश्च, चैत्रश्चेति यथाक्रमम् । वर्षाशीतोष्णकालानामादिमासाः प्रकीर्त्तिताः ॥ ६० ॥ सूर्यर्त्तुपूर्त्तिसमये, कर्ममासव्यपेक्षया । अहोरात्रः समधिकः, स्यादेकैक इति स्फुटम् ॥ ६१ ॥ आषाढे च भाद्रपदे, कार्त्तिके पौष एव च । फाल्गुने माधवे चातिरात्रं नान्येषु कर्हिचित् ॥ ६२ ॥ ऋतुप्रारम्भका मासा, अप्येत एव कीर्त्तिताः । ज्योतिष्करण्डप्रज्ञप्तिवृत्त्यादेर्मतमेतकत् ॥ ६३ ॥ भगवतीवृत्तौ तु—प्रावृट् श्रावणादिः वर्षारात्रोऽश्वयुजादिः शरन्मार्गशीर्षादिः हेमन्तो माघादिः वसन्तश्चैत्रादिः ग्रीष्मो ज्येष्ठादिरिति पक्षान्तरं दृश्यते, इदं च पक्षान्तरं जम्बूद्वीपप्रज्ञप्तिसूत्रेऽपि उत्सर्पिणीनिरूपणे 'चउद्दस पढमसमए' इत्यस्मिन् सूत्रे संगृहीतमस्ति, यतस्तत्र श्रावणे मासि उत्सर्पिणी लगति, तत्प्रथमसमय एव चतुर्दश काला युगपल्लगन्ति, तन्मध्ये ऋतुरप्यस्ति, तत ऋतोरप्यारम्भः श्रावणे मासि भवतीति पक्षान्तरमिति ज्ञेयं । किंच–दक्षिणायनारम्भकोऽपि श्रावण एव, चातुर्मासकारम्भकोऽप्ययमेव, तेन ऋत्वारम्भकोऽप्यसाविति पक्षोऽपि युज्यत एवेति । यद्वा सूर्यवर्षमाश्रित्य युगे ऋतवः प्रथमाषाढपूर्णिमाद्यः स्युः, कर्मवर्षस्य तु ऋतवः श्रावणासितप्रतिपदाद्याः स्युरित्यतो वा पक्षान्तरमिदं भावीति संभाव्यते, तत्त्वं त्विह तद्विद्वेद्यमिति ॥ ऋतूनामित्यमी मासा, यथाशास्त्रं निरूपिताः । अथर्त्तुपूरकतिथिज्ञानाय करणं ब्रुवे ॥ ६४ ॥ जिज्ञासितर्त्तोर्या संख्या, द्विगुणा सा

विधीयते । रूपोना क्रियते द्वाभ्यां, गुण्यते च ततः पुनः ॥ ६५ ॥ द्विः स्थाप्यतेऽथ चैकस्याः, कृतेऽर्द्धे ज्ञायते सुखम् । युगातीतपर्वयुक्ताभीष्टर्त्तोरन्तिमा तिथिः ॥ ६६ ॥ यथा युगे तिथौ कस्यां, प्रथमर्त्तुः समाप्यते ? । इति प्रश्ने ऋतुसंख्यैककः स द्विगुणीकृतः ॥ ६७ ॥ द्वौ स्यातां तौ च रूपोनावेकः स द्विगुणः पुनः । द्वावेव तौ द्विः स्थाप्येते, एकत्रार्द्धे कृते पुनः ॥ ६८ ॥ एकोऽवशिष्ट एवं च, द्विपर्वातिक्रमे युगे । ऋतुराद्यः प्रतिपदि, संपूर्णः प्रथमे तिथौ ॥ ६९ ॥ जिज्ञासिते द्वितीयर्त्तौ, द्वावेव द्विगुणीकृतौ । जाताश्चत्वार एकोनास्त्रयस्ते द्विगुणीकृताः ॥ ७० ॥ जाताः षट् ते स्थापिता द्विरेकत्र चार्द्धितास्त्रयः । अन्यत्र तु षडेव स्युस्तदेवं प्रश्ननिर्णयः ॥ ७१ ॥ युगादितः षट् पर्वाणि, व्यतीत्यर्त्तुर्द्वितीयकः । तृतीयायां तिथौ पूर्ण, एवं सर्वत्र भावना ॥ ७२ ॥ त्रिंशत्तमे ऋतौ जिज्ञासिते त्रिंशद् द्विताडिता । षष्टिः स्यादथ सैकोनषष्टी रूपोज्झिता भवेत् ॥ ७३ ॥ भूयः सा द्विगुणा जातमष्टादशोत्तरं शतम् । द्विः संस्थाप्य च तस्यार्द्धे, कृत एकत्र शिष्यते ॥ ७४ ॥ एकोनषष्टिरित्येवं, विवक्षितविनिश्चयः । अष्टादशोत्तरे पर्वशतेऽतीते युगादितः ॥ ७५ ॥ एकोनषष्टितमायां, तिथौ संपूर्णतां दधौ । ऋतुस्त्रिंशत्तम इति, ज्ञेयं तत्त्वमिदं त्विह ॥ ७६ ॥ एकोनषष्टिस्तिथयः, स्युरित्येकोनषष्टिका । ह्रियते पञ्चदशभिः, स्याच्छेषाङ्कसमा तिथिः ॥ ७७ ॥ ततश्च—युगस्य पञ्चमे वर्षे, आषाढे प्रथमेऽस्य च । पूर्णः शुक्लचतुर्दश्यामृतुस्त्रिंशत्तमोऽन्तिमः ॥ ७८ ॥

अथ चन्द्रर्त्तुस्वरूपमुच्यते—सर्वर्क्षभोगो नक्षत्रपर्याय इति कथ्यते । ते च भानोर्युगे पञ्च, सप्तषष्टिर्निशा-

पतेः ॥ ७९ ॥ एकैकस्मिंश्च नक्षत्रपर्याये ऋतवो हि षट् । ततोऽर्कस्य युगे त्रिंशत्, द्व्युत्तरेन्दोश्चतुःशती ॥ ८० ॥ एकैकश्च मृगाङ्कर्तुरहोरात्रचतुष्टयी । सप्तत्रिंशदहोरात्रभागाश्च सप्तषष्टिजाः ॥ ८१ ॥ विधोर्यदेकनक्षत्रपर्याये सप्तविंशतिः । अहोरात्राः सप्तषष्टिभागास्तथैकविंशतिः ॥ ८२ ॥ तेषां भागे हृते षड्भिर्लब्धा दिनचतुष्टयी । शेषं दिनत्रयं तच्च, सप्तषष्ट्या हतं भवेत् ॥ ८३ ॥ द्विशत्येकोत्तराऽत्रैकविंशत्यंशविमिश्रणे । द्वाविंशे द्वे शते सप्तषष्ट्यंशानामिमे पुनः ॥ ८४ ॥ षड्भक्ते सप्तषष्ट्यंशाः, सप्तत्रिंशद्यथोदिताः । इदं चन्द्रर्तुमानं च, चन्द्रसर्वर्तुसंख्यया ॥८५॥ चतुःशत्या द्व्युत्तरया, गुण्यते चेद्भवन्ति तत् । अष्टादश शतास्त्रिंशा, यथोक्ता युगवासराः ॥८६॥

अथ चन्द्रर्तुज्ञानाय करणमुच्यते—युगातीतपर्वसंख्या, कार्या पञ्चदशाहता । विवक्षितदिनात्प्राच्या, वर्त्तमानस्य पर्वणः ॥ ८७ ॥ तिथयस्तत्र योज्यन्तेऽवमरात्रोज्झिताऽथ सा । चतुस्त्रिंशशतहता, पञ्चाढ्यत्रिंशताञ्चिता ॥ ८८ ॥ शतैर्दशोत्तरैः षड्भिर्विभाज्यैवं कृते सति । लभ्यन्तेऽतीतऋतवः, शेषांशाश्चोद्वरन्ति ये ॥ ८९ ॥ तेषां भागे चतुस्त्रिंशशतेनात्र यदाप्यते । ते दिना वर्त्तमानर्त्तोः, शेषा अंशा दिनस्य च ॥९०॥ चतुर्भिः कलापकम् । द्वितीयपर्वैकादश्यां, चन्द्रर्तुः कतमो युगे । इति प्रश्नेऽतीतमेकं, पर्व पञ्चदशाहतम् ॥ ९१ ॥ जाता पञ्चदशैतेषु, क्षिप्यन्ते दश वासराः । एकादश्याः प्रागतीता, जातैवं पञ्चविंशतिः ॥ ९२ ॥ अवमरात्रस्य त्वत्र संभवो नास्तीति ज्ञेयं । चतुस्त्रिंशशतघ्नाऽसौ, त्रयस्त्रिंशच्छती भवेत् । पञ्चाशदधिकाऽस्यां च, पञ्चाढ्यां त्रिशतीं क्षिपेत् ॥ ९३ ॥ शतानि पञ्चपञ्चाशान्येवं षट्त्रिंशदेषु च । शतैर्दशोत्तरैः षड्भिर्भक्तेष्वाप्येत पञ्चकम् ॥ ९४ ॥ अंशाश्च शेषास्तिष्ठन्ति, पञ्चाढ्यानि शतानि षट् । चतुस्त्रिंशशतेनैषां, भागे लब्धं चतुष्टयम् ॥९५॥ एकोनसप्ततिश्चांशाः, शेषास्ते द्व्यपवर्त्तिताः । लब्धाः सार्द्धाश्चतुस्त्रिंशत्सप्तषष्टिलवा इति ॥९६॥ अतीताः पञ्च ऋतवः, षष्ठर्त्तोश्च गता दिनाः । चत्वारः पञ्चमस्याह्नः, सप्तषष्टिभवा लवाः ॥९७॥ गताः सार्द्धाश्चतुस्त्रिंशत्, सार्द्धौ द्वौ सप्तषष्टिजौ । चन्द्रर्तौ स्तस्तदा षष्ठे, भागौ न्यूनतयाश्रितौ ॥ ९८ ॥ एवमन्यत्रापि भाव्यं ।

अथ चन्द्रर्तुसंपूर्त्तितिथेः करणमुच्यते । तत्र बोध्यो ध्रुवराशिः, पञ्चोपेतं शतत्रयम् ॥ ९९ ॥ चतुस्त्रिंशशतच्छिन्नाहोरात्रस्य लवा अमी । ज्ञेया ज्ञेयो ध्रुवराशिर्नक्षत्रकरणेऽप्यसौ ॥ ७०० ॥ अयं द्व्युत्तरवृद्धेन, ध्रुवराशिर्निहन्यते । राशिनैकादिना द्व्याढ्यचतुःशततमावधि ॥ १ ॥ एकेनाद्ये मृगाङ्कर्त्तौ, ध्रुवराशिर्निहन्यते । जिज्ञासिते द्वितीये तु, ध्रुवाङ्कस्ताड्यते त्रिभिः ॥ २ ॥ एवं च—द्व्याढ्यचतुःशततमजिज्ञासायां तु ताड्यते । ध्रुवराशिद्व्युत्तराष्टशतमानेन राशिना ॥ ३ ॥ राशिर्द्व्युत्तरया वृद्ध्या, वर्द्धमानो हि जायते । रूपोनो द्विगुणः स्वस्वाभीष्टचन्द्रर्त्तुमानतः ॥ ४ ॥ यथा तृतीये चन्द्रर्त्तौ, वृद्ध्या द्व्युत्तरया भवेत् । गुणकः पञ्चमः सोऽस्माद्रूपोनो द्विघ्न एव हि ॥ ५ ॥ ततस्तथा ताडितोऽसौ, ध्रुवराशिर्विभज्यते । चतुस्त्रिंशशतेनायं, तिथिश्चन्द्रर्तुपूर्त्तिभाग् ॥ ६ ॥ यथा द्वितीयचन्द्रर्त्तुपृच्छायां त्रिगुणीकृता । पञ्चाढ्या त्रिशती पञ्चदशाढ्याः स्यु शता नव ॥ ७ ॥ चतुस्त्रिंशशतेनैषां, भागे षट् करमागताः । शेषमेकादशशतं, तद् द्विकेनापवर्त्त्यते ॥ ८ ॥ अध्यर्द्धाः पञ्चपञ्चाशत्, लवाः स्युः सप्तषष्टिजाः । तदेवमिष्टचन्द्रर्त्तुनिश्चयोऽयमुपस्थितः ॥ ९ ॥ युगादेः षट्स्वतीतेषु,

दिनेषु सप्तमस्य च । अध्यर्द्धैः पञ्चपञ्चाशताऽशकैः सप्तषष्टिजैः ॥ १० ॥ व्यतीतैः स्यान्मृगांकर्त्तुर्द्वितीयः पूर्णतां गतः । कार्या विचक्षणैरेवं, सर्वत्रान्यत्र भावना ॥ ११ ॥

अथ सूर्यर्त्तुसंपूर्त्तौ, भोग्यमिन्दोस्तथा रवेः । यन्नक्षत्रं भवेत्तस्य, ज्ञानाय करणं ब्रुवे ॥ १२ ॥ ध्रुवाङ्कराशि-
र्ज्ञेयोऽत्र, पञ्चोपेतं शतत्रयम् । चतुस्त्रिंशशतच्छिन्नाहोरात्रांशात्मकोऽस्त्ययम् ॥ १३ ॥ एकादिद्व्युत्तरेणाप्तुं,
त्रिंशदन्तेन राशिना । हत्वा शोधनकान्यस्माद्वक्ष्यमाणानि शोधयेत् ॥ १४ ॥ तेषु यच्छोध्यमानेषु, सर्वाग्रेण
न शुध्यति । सूर्यर्त्तुपूर्त्तौ नक्षत्रं, स्याच्चन्द्रस्य रवेरपि ॥ १५ ॥ राशेर्द्व्युत्तरवृद्धस्य, ज्ञेया प्राग्वत्प्ररूपणा । २०
बोध्या शोधनकानां तु, प्राज्ञैः प्रज्ञापनाऽसकौ ॥ १६ ॥ अर्द्धक्षेत्रे सप्तषष्टिर्ऋक्षे शोधनकं स्मृतम् । समक्षेत्रे
चतुस्त्रिंशं, शतं शोधनकं भवेत् ॥ १७ ॥ सार्द्धक्षेत्रे च नक्षत्रे, स्याद्द्वेकाढ्यं शतद्वयम् । इन्दोरभिजितो भानि,
शोध्यान्यर्कस्य पुष्यतः ॥ १८ ॥ ऋक्षस्याभिजितः पूर्वं, द्विचत्वारिंशदंशकान् । राशेर्विशोधयेत्तस्माच्चन्द्रयु-
क्तर्क्षचिन्तने ॥ १९ ॥ सूर्यर्क्षयोगचिन्तायां, चादौ पुष्यस्य शोधयेत् । अष्टाशीतिं ततः शोध्यान्युडूनि प्रोक्त-
वत् क्रमात् ॥ २० ॥ यथा प्रथमसूर्यर्त्तुः, कस्मिन्नुडुपशालिनि । नक्षत्रे पूर्णतामेति, युगे तत्रेदमादिशेत् ॥ २१ ॥ २५
प्रागुक्तो ध्रुवराशिर्यः, पञ्चोपेतं शतत्रयम् । एकेन गुणितः सोऽयं, तावानेव व्यवस्थितः ॥ २२ ॥ तस्मादभि- ॥३९५॥
जितः शुद्धा, द्वाचत्वारिंशदादितः । सत्रिषष्टि शतद्वन्द्वं, शेषं तस्माच्च शोध्यते ॥ २३ ॥ श्रुतेः शतं चतुस्त्रि-
शमथ शेषं शतं स्थितम् । एकोनत्रिंशमस्माच्च, धनिष्ठा तु न शुध्यति ॥२४॥ ततश्च—एतावत्सु (१२९) धनि- २८

ष्ठाया, भुक्तेष्वंशेष्विहेन्दुना । सूर्यर्त्तुः प्रथमः पूर्ण, इति पूर्वोक्तनिर्णयः ॥ २५ ॥ अथ प्रथमसूर्यर्त्तुपूर्त्तौ सूर्य-
क्षमुच्यताम् । ध्रुवाङ्कोऽत्रापि पूर्वोक्तः, पञ्चोपेतं शतत्रयम् ॥ २६ ॥ एतच्चैकेन गुणितं, तादृगेव व्यवस्थितम् ।
अष्टाशीतिः शोध्यतेऽस्मात्, पुष्यस्य प्रथमं ततः ॥ २७ ॥ शेषे च द्वे शते सप्तदशाढ्ये शोध्यते ततः । अश्ले
षायाः सप्तषष्टिः, शेषं सार्द्धं शतं स्थितम् ॥ २८ ॥ शतमस्माच्चतुस्त्रिंशं, मघासंबन्धि शोध्यते । षोडशाव-
स्थिताः शेषास्तदेष प्रश्ननिर्णयः ॥ २९ ॥ सूर्येण पूर्वफाल्गुन्या, भागेषु षोडशस्विह । भुक्तेषु प्रथमोऽर्कर्त्तुः,
संपूर्ण इति बुध्यताम् ॥ ३० ॥ लोके तु—मासौ मार्गादिकौ द्वौ द्वावृतुर्हेमन्त एव च । शिशिरश्च वसन्तश्च, ५
ग्रीष्मो वर्षास्तथा शरत् ॥ ३१ ॥ ऋतुभिश्चायने भानोः, शिशिराद्यैस्त्रिभिस्त्रिभिः । उदग्याम्याभिधे ताभ्यां,
द्वाभ्यामर्कस्य वत्सराः ॥ ३२ ॥ इति श्रूयते, इति ऋतुप्रकरणं समाप्तं ॥

ऋतौ ऋतौ द्वौ द्वौ मासावित्यब्दे द्वादशैव ते । नामान्येषां द्विधा लौकिकानि लोकोत्तराणि च ॥ ३३ ॥
तत्र लौकिकान्येवं—स्याच्छ्रावणो भाद्रपद, आश्विनः कार्त्तिकोऽपि च । मार्गशीर्षश्च पौषश्च, माघः फाल्गुन १०
एव च ॥ ३४ ॥ चैत्रस्तथा च वैशाखो, ज्येष्ठाऽऽषाढाविति क्रमात् । लोकोत्तराण्यथोच्यन्ते, नामान्येषां यथा-
क्रमम् ॥ ३५ ॥ अभिनन्दित इत्याद्यो, द्वितीयः स्यात्प्रतिष्ठितः । तृतीयो विजयाख्यः स्याच्चतुर्थः प्रीतिवर्द्धनः
॥ ३६ ॥ पञ्चमो भवति श्रेयान्, षष्ठः शिव इति स्मृतः । सप्तमः शिशिरः ख्यातो, हिमवानिति चाष्टमः
॥ ३७ ॥ वसन्तमासो नवमस्ततः कुसुमसंभवः । एकादशो निदाघो द्वादशो वनविरोहकः ॥ ३८ ॥ अत्र १४

सूर्यप्रज्ञप्तिवृत्तौ अभिनन्दितस्थानेऽभिनन्दन इति, वनविरोहस्थाने वनविरोधीति दृश्यते । प्रतिमासं च पक्षौ द्वौ, बहुलः शुक्ल एव च । आद्यः पिधीयमानेन्दुर्मुच्यमानविधुः परः ॥ ३९ ॥ प्रतिपक्षं पञ्चदश, दिवसा रात्रयोऽपि च । प्रतिपद्दिवसो यावदन्ते पञ्चदशीदिनः ॥ ४० ॥ पूर्वाङ्गनामा प्रथमः, परः सिद्धमनोरमः । मनोहरस्तृतीयः स्याद्यशोभद्रस्तुरीयकः ॥ ४१ ॥ परो यशोधरः षष्ठः, सर्वकामसमृद्धकः । सप्तमस्त्विन्द्रमूर्द्धाभिषिक्तः सौमनसोऽष्टमः ॥ ४२ ॥ धनञ्जयस्तु नवमोऽर्थसिद्धो दशमः स्मृतः । एकादशश्चाभिजातो, द्वादशोऽत्यशनाभिधः ॥ ४३ ॥ शतञ्जयस्तदग्र्यः स्यादग्निवेश्मा चतुर्दशः । पञ्चदशस्तूपशमसंज्ञको दिवसो मतः ॥ ४४ ॥ अह्नां पञ्चदशानामप्येताः संज्ञाः श्रुते स्मृताः । अथाह्वयक्रमः पञ्चदशानामुच्यते निशाम् ॥ ४५ ॥ उत्तमा १ च सुनक्षत्रा २, एलापत्या ३ यशोधरा ४ । सौमनसा ५ श्रीसम्भूता ६, विजया ७ वैजयन्त्यपि ८ ॥४६॥ जयन्ती ९ नवमी ज्ञेया, दशमी चापराजिता १० । इच्छा ११ तथा समाहारा १२, भवेत्तेजा १३ त्रयोदशी ॥ ४७ ॥ अतितेजा १४ स्ततो देवानन्दा १५ पञ्चदशी भवेत् । नामान्तरं भवत्यस्या, नूनं निरतिरित्यपि ॥ ४८ ॥ इत्यहोरात्राणां दिनरात्रिनामानि ॥ तिथयोऽपि स्मृताः पञ्चदश द्वेधा भवन्ति ताः । दिनरात्रिविभेदेन, तासां नामान्यथ ब्रुवे ॥ ४९ ॥ नन्दा १ भद्रा २ जया ३ तुच्छा ४, पूर्णे ५ त्यावर्त्यते त्रिशः । पञ्चैवं त्रिगुणाः पञ्चदशोक्तास्तिथयो जिनैः ॥ ५० ॥ नन्दाख्या प्रतिपत् षष्ठी, भवेदेकादशी तथा । द्वितीया सप्तमी द्वादश्येता भद्राभिधा मताः ॥५१॥ जयास्तृतीयाष्टम्यौ च, त्रयोदशी च कीर्त्तिता । चतुर्थी नवमी भूतेष्टा च



तुच्छाह्वया स्मृताः ॥ ५२ ॥ पञ्चमी दशमी पञ्चदशी पूर्णाभिधा इमाः । अहस्तिथीनां नामानि, ज्ञेयान्येवं यथाक्रमम् ॥ ५३ ॥ उग्रवती भोगवती, तृतीया च यशोमती । सर्वसिद्धा शुभानामा, पञ्चैतास्तिथयस्त्रिशः ॥ ५४ ॥ अयं भावः—उग्रवत्यभिधानेन, नन्दातिथिनिशातिथिः । भद्रातिथीनां रजनीतिथिर्भोगवतीति च ॥ ५५ ॥ यशोमतीति च ज्ञेया, जयानां यामिनीतिथिः । तुच्छा रात्रितिथिर्ज्ञेया, सर्वसिद्धेति नामतः ॥ ५६ ॥ शुभनामा भवेत्पूर्णा, तिथी रात्रितिथिः स्फुटम् । एवं पञ्चदश ज्ञेया, रजनीतिथयो बुधैः ॥ ५७ ॥ एषां पञ्चदशानां तिथीनां स्वामिनश्चैवं लौकिकशास्त्रेषु निरूपिताः—तिथिपाश्चतुर्मुख १ विधातृ २ विष्णवो ३, यम ४ शीतदीधिति ५ विशाख ६ वज्रिणः ७ । वसु ८ नाग ९ धर्म १० शिव ११ तिग्मरश्मयो १२, मदनः १३ कलि १४ स्तदनु विश्व १५ इत्यपि ॥ ५८ ॥ तिथौ हि दर्शसंज्ञके, पितॄनुशन्त्यधीश्वरान् । त्रयोदशीतृतीययोः, स्मृतस्तु वित्तपोऽपरैः ॥ ५९ ॥ मतान्तरे च—वह्नि १ विरिञ्चो २ गिरिजा ३ गणेशः ४, फणी ५ विशाखो ६ दिनकृन् ७ महेशः ८ । दुर्गा ९ न्तको १० विश्व ११ हरि १२ स्मराश्च १३, शर्वः १४ शशी १५ चेति पुराणदृष्टाः ॥ ६० ॥ एषां देवानां प्रतिष्ठादौ च तत्तत्तिथीनामुपयोगः, जिनस्य तु प्रतिष्ठादौ सर्वेऽपि तिथिनक्षत्रकरणक्षणाः शुद्धत्वे सत्युपयोगिन एव, तस्य सर्वदेवाधिदेवत्वादित्याद्यारम्भसिद्धिवार्त्तिके ॥ अहोरात्रतिथीनां च, विशेषोऽयमुदीरितः । भानूत्पन्ना अहोरात्रास्तिथयः पुनरिन्दुजाः ॥ ६१ ॥ उक्तं च—"सूरस्स गगणमंडलविभागनिप्फाइया अहोरत्ता । चंदस्स हाणिवुड्ढीकएण निप्फज्जए उ तिही ॥ १ ॥" किंच—अहोरात्रो भवे-

॥ ३९७ ॥

दर्कोदयादर्कोदयावधि । द्वाषष्टितमभागोनाहोरात्रप्रमिता तिथिः ॥ ६२ ॥ इत्यादिभिर्विशेषैः स्यादहोरात्रात्पृथक् तिथिः । द्विधात्वं च भवेत्तस्या, दिनरात्र्यंशकल्पनात् ॥ ६३ ॥ यद्वदेकोऽप्यहोरात्रः, सूर्यजातो द्विधाकृतः । दिनरात्रिविभेदेन, संज्ञाभेदप्ररूपणात् ॥ ६४ ॥ तथैव तिथिरेकापि, शशिजाता द्विधा कृता । दिनरात्रिविभेदेन, संज्ञाभेदप्ररूपणात् ॥ ६५ ॥ एकैकस्यास्तिथेः कालमानमेवं प्रकीर्त्तितम् । मुहूर्त्तानां त्रिंशदेकन्यूनभागास्तथोपरि ॥ ६६ ॥ स्युर्द्वात्रिंशन्मुहूर्त्तस्यैकस्य द्वाषष्टिकल्पिताः । अस्योत्पत्तिः कथमिति ?, श्रद्धा चेत् श्रूयतां तदा ॥ ६७ ॥ अहोरात्रस्य भागा द्वाषष्टिभागीकृतस्य हि । एकषष्टिस्तिथेर्मानमेकैकस्य यदीरितम् ॥ ६८ ॥ द्वाषष्टिजांशरूपैकषष्टिस्तत्रिंशता हता । अहोरात्रमुहूर्त्तैः स्यात्रिंशाष्टादशशत्यहो (१८३०) ॥६९॥ एते चांशा द्वाषष्ट्यंशीकृतसकलतिथिमुहूर्त्तानाम् । सन्तीति द्वाषष्ट्या मुहूर्त्तकरणाय भजनीयाः ॥ ७० ॥ ( आर्या ) ततो मुहूर्त्ता एकोनत्रिंशद् द्वात्रिंशदंशकाः । द्वाषष्टिजा मुहूर्त्तस्यागतास्तैश्च तिथेर्मितिः ॥ ७१ ॥ कालेन चेयता पञ्चदशांशश्चतुरंशकः । द्वाषष्ट्यंशीकृतस्येन्दोर्हीयते वर्द्धते तथा ॥ ७२ ॥ ततश्च—यत्तिथिश्चन्द्रजेत्युक्तं, तदप्येवं विनिश्चितम् । इन्दोः पञ्चदशांशस्य, हानिवृद्ध्यनुवर्त्तनात् ॥ ७३ ॥ इति तिथिमाननिरूपणं ॥ सांप्रतं चेप्सितदिने, कियन्मानेप्सिता तिथिः । इति ज्ञानाय करणं, यथाशास्त्रं निरूप्यते ॥ ७४ ॥ अभीष्टतिथिपर्यन्तस्थितिराशिर्युगादितः । द्वाषष्ट्या ह्रियते लब्धं, त्याज्यं शेषं तु यत्स्थितम् ॥ ७५ ॥ तदेकषष्ट्या गुणितं, द्वाषष्ट्या प्रविभज्यते । लब्धमत्रापि च त्याज्यं, शेषास्तिष्ठन्ति ये लवाः ॥ ७६ ॥ तावन्मानाऽभीष्टतिथिर्विवक्षितदिने भवेत् । उदाहरणमस्याथ, करणस्य निशम्यताम् ॥ ७७ ॥ युगस्य प्रथमे चन्द्रवर्षे मासे तथाऽऽश्विने । कियन्माना भवेच्छुक्लपञ्चमीत्यत्र कथ्यते ॥७८॥ तिथिराशिर्भवत्येतत्पञ्चम्यन्तो युगादितः । अशीतिसंख्यो द्वाषष्ट्या, भक्तेऽस्मिन्नेक आप्यते ॥ ७९ ॥ स च त्याज्यः शेषमष्टादश तान् परिताडयेत् । एकषष्ट्या स्यात्ततोऽष्टानवत्याढ्यं सहस्रकम् ॥ ८० ॥ द्वाषष्ट्याऽस्मिन् हृते लब्धं, त्यक्तं शेषमिह स्थितम् । द्वाषष्ट्यंशाश्चतुश्चत्वारिंशदित्येष निर्णयः ॥ ८१ ॥ युगस्याद्ये चन्द्रवर्षे, धवलाश्विनपञ्चमी । चतुश्चत्वारिंशदंशमानाऽस्तीत्यत्र भावना ॥ ८२ ॥ अत्र चेयं वासना—द्वाषष्ट्या हि तिथिभिः परिपूर्णा एकषष्टिरहोरात्रा भवन्ति, ततः परिपूर्णाहोरात्रपातनार्थं द्वाषष्ट्या ईप्सिततिथिराशेर्विभागः क्रियते, विभागे च कृते यच्छेषमुपलभ्यते तद्यदेकषष्टिगुणं क्रियते तद् एकैकस्यास्तिथेर्द्वाषष्टिभागीकृताहोरात्रसत्कैकषष्टिभागप्रमाणत्वादिति ज्ञेयं ॥

युगेऽथावमरात्राणां, स्वरूपं किञ्चिदुच्यते । भवन्ति ते च षड् वर्षे, तथा त्रिंशद्युगेऽखिले ॥ ८३ ॥ एकैकस्मिन्नहोरात्रे, एको द्वाषष्टिकल्पितः । लभ्यतेऽवमरात्रांश, एकवृद्ध्या यथोत्तरम् ॥ ८४ ॥ कर्ममासे ततः पूर्णे, त्रिंशद् द्वाषष्टिजा लवाः । लभ्यन्तेऽवमरात्रस्य, तत एवोच्यते बुधैः ॥ ८५ ॥ विश्लेषे विहिते येऽंशाः, शेषाः कर्मेन्दुमासयोः । त्रिंशद् द्वाषष्टिजाः कर्ममासस्यैतेऽवमांशकाः ॥ ८६ ॥ उक्तं च—चंदउडुमासाणं अंसा जे दिस्सए विसेसंमि । ते ओमरत्तभागा भवंति मासस्स नायव्वा ॥ ८७ ॥” कर्ममासद्वये पूर्णे, ततः षष्टिदि-

नात्मके । संपूर्णोऽवमरात्रः स्यादेकषष्टितमे दिने ॥ ८८ ॥ अयं भावः—द्वाषष्टिरंशाः कल्प्यन्तेऽहोरात्रस्यादिमेऽथ च । तत्रैकषष्टिभागात्मा, संपूर्णा प्रथमा तिथिः ॥ ८९ ॥ एको द्वाषष्टिभागो योऽहोरात्रस्यावशिष्यते । एकांशेन द्वितीयापि, तिथिस्तत्र समाविशत् ॥ ९० ॥ एको द्वाषष्टिभागोऽस्या, अतीतः प्रथमे दिने । ततः षष्ट्यंशात्मिकेयमहोरात्रे द्वितीयके ॥ ९१ ॥ द्वाषष्ट्यंशद्वये तस्य, शेषेऽसौ पूर्णतां गता । द्वाभ्यां भागाभ्यां प्रविष्टा, तृतीयाऽस्मिंस्ततस्तिथिः ॥ ९२ ॥ अहोरात्रे तृतीयेऽथ, भागास्तुर्यतिथेस्त्रयः । प्रविशन्त्यथ पञ्चम्याश्चत्वारोऽंशास्तुरीयके ॥ ९३ ॥ एवमेकैकभागेन, हीयते प्राक्तना तिथिः । वर्द्धते प्रत्यहोरात्रं, तिथिरागामिनी पुनः ॥ ९४ ॥ एकत्रिंशत्तमतिथेरेवं त्रिंशत्तमे दिने । त्रिंशदंशाः प्रविष्टाः स्युस्ततस्तस्मिन् दिने खलु ॥ ९५ ॥ द्वात्रिंशदंशप्रमिता, तिथिस्त्रिंशत्तमी भवेत् । त्रिंशद्द्वाषष्ट्यंशमाना, चैकत्रिंशत्तमी तिथिः ॥ ९६ ॥ क्रमाच्च—द्वावंशौ स्तः षष्टितमतिथेः षष्टितमे दिने । एकषष्टितमतिथेस्तत्र षष्टिः स्युरंशकाः ॥ ९७ ॥ एकषष्टितमतिथेश्चैकषष्टितमे दिने । एकोंऽशः स्यात्ततो द्वाषष्टितमी चाखिला तिथिः ॥ ९८ ॥ एवं च द्वाषष्टितमी, प्रविष्टा निखिला तिथिः । एकषष्टिभागरूपाऽत्रैकषष्टितमे दिने ॥ ९९ ॥ एकषष्टितमदिनस्याद्यो द्वाषष्टिजो लवः । एकषष्टितमतिथेश्चरमोऽसौ विभाव्यताम् ॥ ८०० ॥ ततश्च द्वाषष्टितमोऽप्यत्रैवान्तं गतस्तिथिः । एवमस्मिन्नहोरात्रे, द्वे तिथी पूर्णतां गते ॥ १ ॥ द्वाषष्टितमघस्रस्य, ततः सूर्योदयक्षणे । उपस्थिता पूर्वरीत्या, द्राक् त्रिषष्टितमी तिथिः ॥ २ ॥ एवं च द्वाषष्टितमी, नाप्ता सूर्योदयं तिथिः । पतितेति ततो लोके, शुभकार्येष्वनादृता ॥ ३ ॥ तथाऽऽहुः—"एकंमि अहोरत्ते दोऽवि तिही जत्थ निहणमेज्जासु । सोऽत्थ तिही परिहायइ सुहुमेण हविज्ज सो चरिमो ॥ ४ ॥" 'सुहुमेण'त्ति सूक्ष्मेण—अतिश्लक्ष्णेन द्वाषष्टितमरूपतया एकैकेन भागेन हीने परिहीयमानाया द्वाषष्टितमायास्तिथेः स एकषष्टितमो दिवसश्चरम इति । तथाहि—युगस्याद्यप्रतिपदश्चतुष्पर्वव्यतिक्रमे । लभतेऽवमरात्रत्वमेकषष्टितमा तिथिः ॥ ५ ॥ आश्विनप्रतिपत् कृष्णा, सा ज्ञेयाऽस्यां यतोऽविशत् । तिथिर्द्वितीया सर्वांशैरेकषष्टिलवात्मिका ॥ ६ ॥ ज्योतिष्करण्डके तु—"तइयंमि ओमरत्तं कायव्वं सत्तमंमि पक्खंमि । वासहिमगिम्हकाले चउचउमासे विधीयंते ॥ ७ ॥" इत्युक्तं, एतदनुसारेण च आषाढप्रतिपद आरभ्य यथोत्तरमेकषष्टितमासु भाद्रपदकृष्णप्रतिपदादिष्ववमरात्राः स्युः, परं ज्योतिष्करण्डकटीकायां श्रीमलयगिरिपादैरेवमुक्तं—इहाषाढाद्या लोके ऋतवः प्रसिद्धिमैयरुस्ततो लौकिकव्यवहारमपेक्ष्याषाढादारभ्य प्रतिदिवसमेकैकद्वाषष्टिभागहान्या वर्षाकालादिगतेषु तृतीयादिपर्वसु यथोक्ता अवमरात्राः प्रतिपाद्यन्ते, परमार्थतः पुनः श्रावणबहुलप्रतिपल्लक्षणाद्युगादित आरभ्य चतुश्चतुष्पर्वातिक्रमे वेदितव्या इति ज्ञेयं । आश्विनस्य तृतीयाया, असितायाः प्रभृत्यथ । कृष्णा तृतीया मार्गस्यावमस्तुर्यान्विता भवेत् ॥ ८ ॥ प्रभृत्यस्याश्च पञ्चम्या, कृष्णा माघस्य पञ्चमी । युक्ता पतितया षष्ठ्या, प्राप्नोत्यवमरात्रताम् ॥ ९ ॥ एवं च—आश्विनो मार्गशीर्षश्च, माघश्चैत्रस्तथा परः । ज्येष्ठस्ततः श्रावणश्च, पुनरप्येत एव षट् ॥ १० ॥ पुनरप्याश्विनो मार्गौ, द्वितीयः पौष एव च । युगाद्यर्द्धे पञ्चदश, मासाः सावमरात्रकाः ॥११॥ आश्विनाद्येषु मार्गान्तेष्वष्टस्वाद्ये-

ष्वनुक्रमात् । विषमाः प्रतिपन्मुख्याः, स्युः कृष्णास्तिथयोऽवमाः ॥ १२ ॥ माघादिषु स्युर्द्वितीयपौषान्तेषु च सप्तसु । समसङ्ख्या द्वितीयाद्या, उज्ज्वलास्तिथयोऽवमाः ॥ १३ ॥ विषमेभ्योऽवमेभ्यश्चानन्तरास्तिथयः समाः । पतिताः स्युर्द्वितीयाद्यास्तेऽष्ट प्रतिपदन्विताः ॥ १४ ॥ अवमेभ्यः समेभ्यस्तु, विषमास्तिथयः खलु । भवन्ति पतिताः सप्त, तृतीयाद्या यथोदिताः ॥ १५ ॥ चैत्रो ज्येष्ठः श्रावणोऽश्वयुग्मार्गो माघ एव च । पुनः षडेते चैत्रोऽथ, ज्येष्ठोऽन्त्याषाढ एव च ॥ १६ ॥ युगान्त्यार्द्धे पञ्चदश, मासाः सावमरात्रकाः । तिथयस्त्ववमाः कृष्ण-शुक्लाः पूर्वार्द्धवत्स्मृताः ॥ १७ ॥ सुखावबोधाय चात्र यन्त्रकम् ॥ प्रतिपद्यवमरात्रीभूतायां कुत्र पर्वणि । द्वितीयान्तः समाविश्य, जायते पतिता तिथिः ? ॥ १८ ॥ अवमत्वं द्वितीयायां, प्राप्तायां क्व च पर्वणि । तृतीया पततीत्येवं, पृच्छेत्कोऽप्यखिलाः क्रमात् ? ॥ १९ ॥ ततोऽत्र करणाम्नायः, कश्चित्तादृग्निरूप्यते । यस्माद्यथोक्तपृच्छासु, कुर्यात्प्रतिविधीन् सुखम् ॥ २० ॥ पृच्छास्वेतासु विषमास्तिथयोऽत्र भवन्ति याः । रूपाधिकासु द्विघ्नासु, तासु स्यात्पर्वनिर्णयः ॥ २१ ॥ समास्तु तिथयो रूपाभ्यधिका द्विगुणीकृताः । एकत्रिंशद्युताः सत्योऽतीतपर्वप्रकाशिकाः ॥ २२ ॥ पर्वसङ्ख्या सा च पञ्चदशघ्ना स पतत्तिथिः । विभज्यमाना द्वाषष्ट्याऽवमसङ्ख्यां प्रकाशयेत् ॥ २३ ॥ आद्ये प्रश्ने यथोद्दिष्टा, प्रतिपत्तिथिरित्यतः । एकको विषमः सैको, द्विघ्नो जातं चतुष्टयम् ॥ २४ ॥ युगादितो व्यतिक्रान्ते, ततः पर्वचतुष्टये । अवमायां प्रतिपदि, द्वितीया न्यपतत्तिथिः ॥ २५ ॥ चतूरूपा पर्वसङ्ख्या, षष्टिः पञ्चदशाहता । पतत्तिथिर्द्वितीयेति, द्वाभ्यां युक्ता विधीयते ॥ २६ ॥

जाता द्वाषष्टिरेषा च, द्वाषष्ट्या प्रविभज्यते । लब्ध एकस्ततो जातोऽवमरात्रोऽयमादिमः ॥ २७ ॥ कदा पुनर्द्वितीयायां, तृतीया पततीति च । प्रश्ने द्वितीयोद्दिष्टेति, द्विको रूपाधिकस्त्रयः ॥ २८ ॥ ते च द्विगुणिताः षट् स्युर्द्वितीया यत्समा तिथिः । एकत्रिंशद्युताः षट् ते, सप्तत्रिंशद्भवन्ति तत् ॥ २९ ॥ ततश्च—सप्तत्रिंशत्तमे पर्वण्यतिक्रान्ते युगादितः । द्वितीयायां निपतिता, तृतीयेत्येष निर्णयः ॥ ३० ॥ पर्वसङ्ख्या चात्र सप्तत्रिंशत्पञ्चदशाहता । पञ्चपञ्चाशदधिका, शताः पञ्च भवन्त्यतः ॥ ३१ ॥ पतत्तिथिस्तृतीयेति, त्रीणि तेषु विनिक्षिपेत् । अष्टपञ्चाशदधिका, जाता पञ्चशती ततः ॥ ३२ ॥ विभज्यतेऽसौ द्वाषष्ट्या, नव प्राप्तास्ततः खलु । नवमोऽवमरात्रोऽयं, जात इत्येष निर्णयः ॥ ३३ ॥ सर्वास्वपि तिथिष्वेवं, कार्या करणभावना । पर्वनिर्देशमात्रं तु, क्रियते नाममात्रतः ॥ ३४ ॥ तृतीयायां पतेत्तुर्या, गते पर्वण्यथाष्टमे । चतुर्थ्यां पञ्चमी चैकचत्वारिंशत्तमे गते ॥ ३५ ॥ षष्ठी पतति पञ्चम्यां, पर्वणि द्वादशे गते । षष्ठ्यां च सप्तमी पञ्चचत्वारिंशत्तमे गते ॥ ३६ ॥ सप्तम्यामष्टमी यायाद्याते पर्वणि षोडशे । अष्टम्यां नवमी चैकोनपञ्चाशत्तमे गते ॥ ३७ ॥ नवम्यां माति दशमी, द्वाविंशतितमे गते । एकादशी दशम्यां च, त्रिपञ्चाशत्तमे गते ॥ ३८ ॥ एकादश्यां द्वादशी च, चतुर्विंशतिसङ्ख्यके । तस्यां त्रयोदशी सप्तपञ्चाशत्सङ्ख्यके गते ॥ ३९ ॥ गतेऽष्टाविंशतितमे, त्रयोदश्यां चतुर्दशी । चतुर्दश्यां विशेद्राका, चैकषष्टितमे गते ॥ ४० ॥ गते द्वात्रिंशत्तमेऽमावास्यायां प्रतिपद्विशेत् । एता युगस्य पूर्वार्द्धे, परार्द्धेऽप्येवमेव ताः ॥ ४१ ॥ राकायां च प्रतिपदो, भूतेष्टायाममातिथेः । संपातसंभवो

नास्तीत्येतद् ज्ञेयं मनस्विभिः ॥ ४२ ॥ एतस्य यन्त्रके दृष्टे, भवतां प्रत्ययो दृढः । भविष्यतीति तत्सम्यग्, वीक्षणीयं विचक्षणाः ॥ ४३ ॥ ननु कालः सदाऽनादिप्रवाहः परिवर्त्तते । जगत्स्वभावान्नियतस्वरूपेण दिवानिशम् ॥ ४४ ॥ न हानिः कापि कालस्य, न च वृद्धिः स्वरूपतः । ततोऽत्रावमरात्राधिमासादीनां कथा वृथा ॥ ४५ ॥ सत्यं किंत्विह मासानां, विरूपाणां परस्परम् । अंशादिभिर्विशेषो यो, वर्त्तते तदपेक्षया ॥ ४६ ॥ विवक्ष्येते हानिवृद्धी, कालस्य न तु वास्तवी । वस्तुतस्त्वेष नियतस्वरूपः परिवर्त्तते ॥ ४७ ॥ तथाहि—चन्द्रमासविवक्षायां, कर्ममासव्यपेक्षया । कालस्य हानिर्वृद्धिश्च, सूर्यमासविवक्षणे ॥ ४८ ॥ पृथग् पृथग् विवर्त्तन्ते, वस्तुतस्तु त्रयोऽप्यमी । मासा अनादिनियतस्वरूपेण सदा भुवि ॥ ४९ ॥ अथ नष्टतिथिं ज्ञातुं, करणं प्रतिपाद्यते । विज्ञायते सुखं येनानुक्तापि पर्वयुक् तिथिः ॥ ५० ॥ समुद्गच्छति मार्त्तण्डे, यद्येकाभिजितः कला । भुक्ता चन्द्रमसा तर्हि, कतमत्पर्व का तिथिः ? ॥ ५१ ॥ अत्र करणं—अभिजित्प्रमुखर्क्षाणामतीतानां यथाक्रमम् । इष्टभेष्टकलां यावत्, कला एकत्र मीलयेत् ॥ ५२ ॥ कला चात्राहोरात्रस्य सप्तषष्टितमो भागो बोद्धव्यः ॥ इष्टभेष्टकलां ताभ्योऽपनीयेत स्थितं च यत् । त्रिनवत्यधिकैस्ताढ्यं, त्रयोदशभिः शतैः ॥ ५३ ॥ विभज्यते च तत्रिंशैस्ततोऽष्टादशभिः शतैः । लब्धं संत्यज्यते शेषं, यत्स्यात्तत्स्थाप्यते द्विशः ॥ ५४ ॥ एकत्रास्मिन्नेकषष्ट्या, विभक्ते यदवाप्यते । अन्यराशौ क्षिप्यते तत्, सोऽङ्कराशिः पुनस्ततः ॥ ५५ ॥ ह्रियते पञ्चदशभिर्हृते च यदवाप्यते । तानि पर्वाणि शेषांशास्तिथिसङ्ख्या भवेदिह ॥ ५६ ॥ किंच—भमत्राभिजिदेवाद्यं, तत्कलाऽप्यादिमोदिता । तदेककात्तत्कलाकान्न किंचिदपनीयते ॥५७॥ यदस्मादेककादेककलापनयने भवेत् । शून्यं शेषं ततो न स्याद्गुणनाद्या क्रियोत्तरा ॥ ५८ ॥ यथा पूर्वोक्तपृच्छायामेका याऽभिजितः कला । गुण्यते त्रिनवत्याढ्यैः सा त्रयोदशभिः शतैः ॥ ५९ ॥ तावदङ्का भवेत्रिंशैर्नैषाऽष्टादशभिः शतैः । विभक्तुं शक्यते तेन, विधिः शेषो विधीयते ॥ ६० ॥ त्रयोदशशती सत्रिनवतिर्द्विर्निधीयते । एको राशिश्चैकषष्ट्या, ह्रियते तत्र चाप्यते ॥ ६१ ॥ द्वाविंशतिः क्षिप्यते सा, परराशौ ततो भवेत् । चतुर्दशशती पञ्चदशभिस्सहिताऽथ सा ॥ ६२ ॥ ह्रियते पञ्चदशभिश्चतुर्नवतिराप्यते । शेषास्तिष्ठन्ति पञ्चाशास्ततः पूर्वोक्तनिर्णयः ॥ ६३ ॥ चतुर्नवतिसङ्ख्यस्य, पर्वणः पञ्चमीतिथौ । सूर्योदये चन्द्रमसा, भुक्तैकाभिजितः कला ॥ ६४ ॥

करणानि निरूप्यन्ते, तिथ्यर्द्धप्रमितान्यथ । भवन्ति तानि द्वैधानि, चराणि च स्थिराणि च ॥ ६५ ॥ बवं च बालवं चैव, कौलवं स्त्रीविलोचनम् । गरादि वणिजं विष्टिः, सप्तैतानि चराणि यत् ॥ ६६ ॥ अन्यत्र स्त्रीविलोचनस्थाने तैतिलमिति, गरादिस्थाने च गरमिति संज्ञा श्रूयते इति ज्ञेयं । तिथिष्वनियतास्त्वेतान्यावर्त्तन्ते यथाक्रमम् । शुक्लपक्षे प्रतिपदः, पश्चिमार्द्धे बवं भवेत् ॥ ६७ ॥ द्वितीयायाश्चादिमेऽर्द्धे, बालवं कौलवं परे । तृतीयायाश्चादिमेऽर्द्धे, भवति स्त्रीविलोचनम् ॥ ६८ ॥ अपरार्द्धे तृतीयाया, गरादिकरणं भवेत् । चतुर्थ्याः प्रथमेऽर्द्धे स्याद्वणिजं विष्टिरन्तिमे ॥ ६९ ॥ पुनर्बवं बालवं च, पञ्चम्या अर्द्धयोर्द्वयोः । क्रमादर्द्धद्वये षष्ठ्याः, कौलवस्त्रीविलोचने ॥ ७० ॥ अर्द्धद्वये च सप्तम्या, गरादिवणिजे स्मृते । अष्टम्याः प्रथमेऽर्द्धे स्याद्विष्टिरन्त्ये

पुनर्बवम् ॥ ७१ ॥ बालवं कौलवं चेति, नवम्या अर्द्धयोर्द्वयोः । अर्द्धद्वये दशम्याः स्त्रीविलोचनगराभिधे ॥ ७२ ॥ एकादश्याः प्राक्तनेऽर्द्धे, वणिजं विष्टिरन्तिमे । पुनर्बवं बालवं च, द्वादश्या अर्द्धयोर्द्वयोः ॥ ७३ ॥ अर्द्धद्वये त्रयोदश्याः, कौलवस्त्रीविलोचने । अर्द्धद्वये चतुर्दश्या, गरादिवणिजे क्रमात् ॥ ७४ ॥ पूर्णिमायाः प्राक्तनेऽर्द्धे, विष्टिरन्त्ये पुनर्बवम् । कृष्णपक्षे प्रतिपदः, पूर्वार्द्धे बालवं स्मृतम् ॥ ७५ ॥ अत एव युगस्यादिर्बालवकरणे पूर्वं निरूपितेति ज्ञेयं ॥ अन्तिमेऽर्द्धे प्रतिपदः, कौलवं करणं भवेत् । द्वितीयाहर्निशोश्च स्त्रीविलोचनगरादिके ॥ ७६ ॥ तृतीयायां च वणिजविष्टी स्यातामहर्निशोः । चतुर्थ्याश्चाह्नि रात्रौ च, क्रमेण बवबालवे ॥ ७७ ॥ दिने रात्रौ च पञ्चम्याः, कौलवस्त्रीविलोचने । गरादिवणिजे षष्ठ्याः, सप्तम्या विष्टिसद्बवे ॥ ७८ ॥ अष्टम्यास्त्वह्नि रात्रौ च, क्रमाद्बालवकौलवे । अर्द्धद्वये नवम्याः स्त्रीविलोचनगरादिके ॥ ७९ ॥ दशम्यां वणिजं विष्टिः, क्रमादर्द्धद्वये भवेत् । एकादश्यां दिवा रात्रौ, क्रमेण बवबालवे ॥ ८० ॥ द्वादश्याश्च दिने रात्रौ, कौलवस्त्रीविलोचने । गरादिवणिजे ज्ञेये, त्रयोदश्यामहर्निशोः ॥ ८१ ॥ चतुर्दश्यां दिवा विष्टिरष्टावावृत्तयः स्मृताः । चराणामिति सप्तानां, मासे मासे पुनः पुनः ॥ ८२ ॥ तथाहुः—"मासेऽष्टशश्चराणि स्युरुज्ज्वलप्रतिपदन्त्यार्द्धात्" रात्रौ कृष्णचतुर्दश्याः शकुनिः करणं भवेत् । चतुष्पदं च नागं चामावास्यामर्द्धयोर्द्वयोः ॥ ८३ ॥ किंस्तुघ्नं स्यात्प्रतिपदः, शुक्लायाः प्रथमेऽर्द्धके । एतानि स्युस्तिथिष्वेतेष्वेव प्राहुः स्थिराण्यतः ॥ ८४ ॥ अत्र सर्वत्र दिनरात्रिशब्देनापि तिथीनां पूर्वार्द्धापरार्द्धे एव लक्षणीये, करणानां तिथ्यर्द्धप्रमितत्वादिति । एतेषां

स्वामिनः प्रयोजनं चैवं लौकिकशास्त्रेषु—इन्द्रो १ विधि २ मित्रा ३ र्यम ४ भू ५ श्री ६ शमना ७ श्चलेषु करणेषु । कलि १ वृष २ फणि ३ मरुतः ४ पुनराशाः क्रमशः स्थिरेषु स्युः ॥ १ ॥ ( आर्या ) अत्र शमनो—यमः स भद्रायाः स्वामी ॥ दशामूनि विविष्टीनि, दिष्टान्यखिलकर्मसु । रात्र्यहर्व्यत्ययाद्भद्राप्यदुष्टैवेति तद्विदः ॥२॥ विविष्टीनीति कोऽर्थः ?-एकादशसु करणेषु भद्रा दुष्टेति। शेषकरणप्रयोजनं त्वेवं—शकुनिचतुष्पदनागे किंस्तुघ्ने कौलवे च वणिजे च । ऊर्द्ध्वं संक्रमणं गरतैतिलविष्टिषु पुनः सुप्तम् ॥ ३ ॥ (आर्या) बवबालवे निविष्टं, सुभिक्षं चोर्द्ध्वसंक्रमे । उपविष्टो रोगकरः, सुप्तो दुर्भिक्षकारकः ॥ ४ ॥ तथा—शीतोष्णवर्षर्त्तुषु सूर्यसंक्रमाः, क्रमेण सुप्तोर्द्ध्वनिवेशिनः शुभाः। तथा "पूर्वोत्तरकरणद्वयसंधिगा संक्रान्तिस्तु सुप्तोत्थितेत्याख्या सर्वदाऽप्यशुभेति पूर्णभद्र" इत्याद्यारम्भसिद्धिवार्त्तिके ॥ इति करणप्रकरणं ॥

मुहूर्त्ताः परिवर्त्तन्ते, ये त्रिंशत्प्रतिवासरम् । तेषां नामक्रमं वक्ष्ये, सर्वज्ञागमदर्शितम् ॥ ८५ ॥ आद्यो रुद्रो दिनस्यादौ, श्रेयानिति द्वितीयकः। मित्रवायुसुपीताख्यास्तृतीयतुर्यपञ्चमाः ॥ ८६ ॥ षष्ठोऽभिचन्द्रो माहेन्द्रः, सप्तमः स्यादथाष्टमः । बलवान्नवमः पक्ष्मो, दशमो बहुसत्यकः ॥ ८७ ॥ एकादशः स्यादैशानो, द्वादशस्त्वष्ट(ष्ट)संज्ञकः । भावितात्मवैश्रवणौ, त्रयोदशचतुर्दशौ ॥८८॥ वारुणः स्यात्पञ्चदश, आनन्दः षोडशः स्मृतः। विजयः स्यात्सप्तदशोऽष्टादशो विश्वसेनकः ॥ ८९ ॥ एकोनविंशतितमः, प्राजापत्याह्वयो भवेत् । मुहूर्त्तो विंशतितमो, भवत्युपशमाभिधः ॥ ९० ॥ स्यादेकविंशतितमो, गन्धर्वोऽथाग्निवैश्यकः । द्वाविंशः स्यात्त्रयो-

विंशः, शतादिवृषभाभिधः ॥ ९१ ॥ चतुर्विंशस्त्वातपवान्, पञ्चविंशोऽवमो भवेत्। षड्विंशोऽरुणवान्
सप्तविंशो भौमाभिधः स्मृतः ॥ ९२ ॥ अष्टाविंशस्तु ऋषभः, सर्वार्थः स्यात्ततः परः। त्रिंशत्तमो राक्षसाख्यो,
मुहूर्त्तो यो निशोऽन्तिमः ॥ ९३ ॥ इति मुहूर्त्तप्रकरणं ॥

नक्षत्राणां परावर्त्तं, चन्द्रसंबन्धिनामथ। ब्रूमहे प्रत्यहोरात्रं, सूर्यसंबन्धिनामपि ॥ ९४ ॥ भवत्यभिजिदा-
रम्भो, युगस्य प्रथमक्षणे। अस्य पूर्वोक्तशीतांशुभोगकालादनन्तरम् ॥ ९५ ॥ श्रवणं स्यात्तस्य चेन्दुभोगका-
लव्यतिक्रमे। धनिष्ठेत्येवमादीनि, ज्ञेयानि निखिलान्यपि ॥ ९६ ॥ अथेन्दुना भुज्यमानमहोरात्रे विवक्षिते।
इष्टे तिथौ च नक्षत्रं, ज्ञातुं करणमुच्यते ॥ ९७ ॥ यस्मिन् दिने चन्द्रयुक्तं, नक्षत्रं ज्ञातुमिष्यते। तस्मादिना- २०
त्प्रागतीतपर्वसङ्ख्या युगादितः ॥ ९८ ॥ गुण्यते पञ्चदशभिस्ततः प्रागीप्सितात्तिथेः। तिथीनतीतान् सत्पर्वस-
त्कांस्तत्र नियोजयेत् ॥ ९९ ॥ अतीतावमरात्रोना, द्व्यशीत्या ह्रियतेऽथ सा। लब्धमंशाश्च ये शेषास्तानूर्द्ध्वाधो
न्यसेत्क्रमात् ॥ १०० ॥ लब्धमूर्द्ध्वं स्थापितं यत्तद्राशिरिति कथ्यते। अंशा अधःस्थिताः शेषराशिरित्यभि-
धीयते ॥ १ ॥ राशिं चतुर्गुणीकृत्य, शोधयेदेकविंशतिम्। शेषराशेरधःस्थाच्च, शोधयेत्सप्तविंशतिम् ॥ २ ॥
आसंभवं लब्धराशेः, शेषराशेश्च शोधयेत्। तामेकविंशतिं सप्तविंशतिं च क्रमान्मुहुः ॥ ३ ॥ अथोपरि- २५
तनो राशिरेकविंशतिशोधनम्। यद्यल्पत्वान्न क्षमेत, तदा राशेरधस्तनात् ॥ ४ ॥ एकं रूपं समादाय, सप्त-
षष्ट्या निहत्य च। राशौ क्षिप्त्वोर्द्ध्वगे कुर्यादेकविंशतिशोधनम् ॥ ५ ॥ याऽत्रैकविंशती राशेः, शोध्यतेऽभि- २८

जितो हि सा। भावनैवं शेषराशेः, सप्तविंशतिशोधने ॥ ६ ॥ आरभ्य श्रवणादत्रोत्तराषाढावसानकम्। सप्त-
विंशतिसङ्ख्याकमवधार्यं भमण्डलम् ॥ ७ ॥ शेषराशेस्ततः सप्तविंशतिर्यदि शुध्यति। शुद्धं तदाऽखिलमपि,
ज्ञेयमस्माद्भमण्डलम् ॥ ८ ॥ नाल्पत्वाचेदितः सप्तविंशतिः शोद्धुमर्हति। तदा द्वाविंशतिः शोध्या, शुद्ध्येन्नै-
षाऽपि चेत्तदा ॥ ९ ॥ शोध्या अष्टादशामीषां, शोधनासंभवे सति। त्रयोदश दशैषां चासंभवे पञ्च
शोधयेत् ॥ १० ॥ द्वाविंशतौ विशुद्धायामत्र शुद्धानि भावयेत्। सर्वाणि श्रवणादीनि, विशाखांतानि भान्यथ
॥ ११ ॥ अष्टादशसु शुद्धेषु, शुद्धानीह विचिन्तयेत्। श्रुत्यादीन्युत्तराफाल्गुन्यन्तान्यष्टादशाप्यथ ॥ १२ ॥ ५
त्रयोदशसु शुद्धेषु, शुद्धानि परिभावयेत्। श्रुत्यादीनि पुनर्वस्वन्तानि भानि त्रयोदश ॥ १३ ॥ एवं दशसु
शुद्धेषु, रोहिण्यन्तानि चिन्तयेत्। उदग्भद्रपदान्तानि, तथा शुद्धेषु पञ्चसु ॥ १४ ॥ पर्यन्तसूचकान्यत्र, यानि
प्रोक्तानि भानि षट्। सार्द्धक्षेत्राण्येव तानि, ज्ञेयानि निखिलान्यपि ॥ १५ ॥ तथाहि—श्रवणात्पञ्चमी सार्द्ध-
क्षेत्रा भाद्रपदोत्तरा। दशमं ब्राह्ममादित्यं, त्रयोदशं च तादृशम् ॥ १६ ॥ उत्तराफाल्गुनी चाष्टादशी भवति
तादृशी। सार्द्धक्षेत्रं विशाखाख्यं, द्वाविंशतितमं श्रुतेः ॥ १७ ॥ स्यात्सप्तविंशा तत्राथोत्तराषाढापि तादृशी। १०
एतानि स्युः पञ्चचत्वारिंशन्मुहूर्त्तकानि यत् ॥ १८ ॥ तथाहुः—"पंच १ दस २ तेरस ३ ट्ठारसेव ४ बावीस ५
सत्तवीसा य ६। सोज्झा दिवड्ढखित्तंत भद्दवाई असाढंता ॥ १९ ॥" एवं चाधस्तने शेषराशौ संशोधिते
सति। एकादिचतुरन्तं यच्छेषं तच्चन्द्रभं गतम् ॥ २० ॥ अत्र च एकादिचतुरन्तं यच्छेषं तत्रिंशद्गुणनेन मुहू- १४

र्त्तीकृत्य तस्मात्क्रमप्राप्तं यन्नक्षत्रं तद्यदि समक्षेत्रं तदा त्रिंशत् शोध्यते, अर्द्धक्षेत्रं चेत्पञ्चदश शोध्यन्ते, एवं शोधने यच्छेषं तच्चन्द्राक्रान्तस्य नक्षत्रस्यातीतं मुहूर्त्तादिकं भवतीति ज्ञेयं ॥ यच्चोपरितने राशावेकविंशतिशोधने । शेषं तत्त्रिंशताऽऽहत्य, सप्तषष्ट्या विभज्यते ॥ २१ ॥ लब्धा मुहूर्त्ता ज्ञातव्या, यत्तु तत्रापि शिष्यते । ते विज्ञेया मुहूर्त्तस्य, विभागाः सप्तषष्टिजाः ॥ २२ ॥ यथा युगस्य प्रथमे, वर्षे दशसु पर्वसु । अतिक्रान्तेषु पञ्चम्यां, किं नक्षत्रं निशापतेः ? ॥२३॥ याऽत्रातीतपर्वसङ्ख्या, वर्त्तते दशलक्षणा । तस्यां पञ्चदशघ्नायां, पञ्चाशं जायते शतम् ॥ २४ ॥ पञ्चम्यां पृष्टमिति च, चत्वारस्तिथयो गताः । ततश्चतुष्टयं तत्र, योजनीयं मनस्विभिः ॥ २५ ॥ चतुष्पञ्चाशदधिकं, शतं स्याद्राशिरेष च । हीनो द्वाभ्यामवमाभ्यां, द्विपञ्चाशं भवेच्छतम् ॥ २६ ॥ तस्य द्व्यशील्या भागे यद्रूपमेकमवाप्यते । तदूर्द्ध्वं न्यस्यते शेषां, सप्ततिं च न्यसेदधः ॥ २७ ॥ कृतश्चतुर्गुणो लब्धराशिरत्रैकलक्षणः । चत्वारः सप्ततिश्चोर्द्ध्वाधोभावेन स्थिता इह (४/७०) ॥ २८ ॥ अथोपरितनाद्राशेः, स्तोकत्वादेकविंशतिः । शोद्धुं न शक्यते तेनाधःस्थात्सप्ततिलक्षणात् ॥ २९ ॥ एकं रूपं समादाय, सप्तषष्टिगुणीकृतम् । निक्षिपेदूर्द्ध्वगे राशौ, तज्जाता सैकसप्ततिः ॥ ३० ॥ एकोनसप्ततिश्चाधस्तिष्ठेद्राशेरथोर्द्ध्वगात् (७१/६९) । शोधितायामभिजितः, सत्कायामेकविंशतौ ॥ ३१ ॥ पञ्चाशच्छिष्यतेऽधःस्थाद्राशेश्च सप्तविंशतौ । शोधितायां भचक्रस्य, द्विचत्वारिंशदास्थिता (५०/४२) ॥ ३२ ॥ शोध्यते चोर्द्ध्वगाद्राशेः, पुनरप्येकविंशतिः । राशेरधस्तनात् सप्तविंशतिर्भगणस्य च ॥३३॥ एकोनत्रिंशदूर्द्ध्वं स्यादधः पञ्चदश स्थिताः (२९/१५) । एकविंशतिरूर्द्ध्वस्थाद्राशेर्भूयोऽपि शोध्यते ॥ ३४ ॥ अष्टौ ततोऽवशिष्यन्ते (८/१५), राशावूर्द्ध्वं व्यवस्थिते । तेषां च पुरतो वक्ष्येऽवशिष्टां परिकर्मणाम् ॥ ३५ ॥ राशेरधस्ताच्छक्यन्ते, शोद्धुं पञ्चदशात्मकात् । न सप्तविंशतिर्द्वाविंशतिर्नाष्टादशापि न ॥ ३६ ॥ त्रयोदश तु शक्यन्ते, शोद्धुं तेषां च शोधने । श्रुत्याद्यादित्यान्तभानि, शुद्धानि स्युस्त्रयोदश ॥ ३७ ॥ शेषाच्च द्वितयात्त्रिंशद्गुणात्पुष्यो विशोध्यते । मुहूर्त्तैस्त्रिंशता पञ्चदशभिस्सार्द्धमेव च ॥ ३८ ॥ ये पञ्चदश शिष्यन्ते, मघानां ते मुहूर्त्तकाः । अथोर्द्ध्वराशौ सन्त्यष्टौ, तेषु त्रिंशद्गुणेषु च ॥ ३९ ॥ चत्वारिंशा द्विशती स्यात्, सप्तषष्ट्या हरेच्च ताम् । लब्धास्त्रयो मुहूर्त्तास्तान्, क्षिपेद्राशावधस्तने ॥ ४० ॥ अष्टादश मुहूर्त्ताः स्युस्तद्भागाः सप्तषष्टिजाः । एकोनचत्वारिंशच्च, तदेष प्रश्ननिर्णयः ॥ ४१ ॥ अष्टादशसु भुक्तेषु, मुहूर्त्तेष्वमृतांशुना । मघानामधिकैकोनचत्वारिंशल्लवेष्विह ॥ ४२ ॥ युगस्य प्रथमे वर्षे, दशपर्वव्यतिक्रमे । उदेति सूर्यः पञ्चम्यामहोरात्रेऽपि तावपि ॥ ४३ ॥ अहोरात्रे युगस्याद्ये, प्रतिपत्संज्ञके तिथौ । चन्द्रसंबन्धि नक्षत्रं, किमत्र? प्रतिपाद्यते ॥ ४४ ॥ चतुर्विंशं शतं सङ्ख्या, पाश्चात्ययुगपर्वणाम् । अष्टादशशती षष्टियुक् स्यात्पञ्चदशाहता ॥ ४५ ॥ त्रिंशतोऽवमरात्राणामेतस्याः पातने भवेत् । अष्टादशशती त्रिंशा, सा द्व्यशील्या विभज्यते ॥ ४६ ॥ लब्धां द्वाविंशतिं न्यस्योपरि कुर्याच्चतुर्गुणाम् । अष्टाशीतिर्भवेच्छेषामधः षड्विंशतिं न्यसेत् (२६) ॥ ४७ ॥ राशेरष्टाशीतिरूपादेकविंशतिशोधने । संजाताऽभिजितः शुद्धिः, सप्तषष्टिस्तु शिष्यते ॥ ४८ ॥ कल्पितैतावदंशत्वात्तया चैकं भवेदुडु । तस्मिंश्च भेऽधस्त्यराशौ, क्षिप्ते स्यात्सप्तविंशतिः ॥ ४९ ॥ स्यात् सप्तविं-

शतेर्भानां, शुद्धिरङ्कादतस्ततः । श्रुत्यादीन्युत्तराषाढान्तानि शुद्धानि भान्यतः ॥ ५० ॥ पूर्वोक्तनिर्णयोऽयं तद्युगस्यादिमे दिने । सूर्योदये शशी योगं, प्राप्नोत्यभिजिता सह ॥ ५१ ॥ युगस्याहि द्वितीयस्मिन्, द्वितीयायां तिथावथ । चन्द्रेण युक्तं नक्षत्रं, किं स्यादित्यत्र कथ्यते ॥५२॥ प्रतिपल्लक्षणैकैवातिक्रान्ता तिथिरत्र या । द्व्यशीत्या भजनं सा न, क्षमते यत्तनीयसी ॥ ५३ ॥ तदेतस्याः सप्तषष्टिः, कर्त्तव्याः शकलास्ततः । ऋक्षस्याभिजितः प्राज्ञैः, शोधनीयैकविंशतिः ॥ ५४ ॥ शेषा तिष्ठति षट्चत्वारिंशत्सा त्रिंशता हता । कर्त्तुं मुहूर्त्तान् साशीतिस्त्रयोदशशती भवेत् ॥ ५५ ॥ सप्तषष्ट्यां विभागेऽस्या, लब्धा मुहूर्त्तविंशतिः । चत्वारिंशन्मुहूर्त्तांशाः, शिष्यन्ते सप्तषष्टिजाः ॥ ५६ ॥ ततश्च—सचत्वारिंशदंशायां, श्रुतेर्मुहूर्त्तविंशतौ । भुक्तायामिन्दुनोदेति, द्वितीयेऽह्नि युगे रविः ॥ ५७ ॥ एवं सर्वत्राप्यन्यत्र करणभावना कार्या । इति चन्द्रनक्षत्रप्रकरणं ।

अष्टादशमुहूर्त्ताढ्यमहोरात्रचतुष्टयम् । भुक्त्वा पुष्यस्य पश्चापि, स्वाब्दान्यारभते रविः ॥ ५८ ॥ चतुर्विंशत्या मुहूर्त्तैरधिका भुक्तशेषकाः । भवन्त्यष्टावहोरात्रास्तदा पुष्यस्य भास्वतः ॥ ५९ ॥ ततश्च—स्युर्द्वादशमुहूर्त्ताढ्या, अहोरात्रास्त्रयोदश । तथा स्युः षडहोरात्रा, मुहूर्त्ताश्चैकविंशतिः ॥ ६० ॥ अहोरात्रा विंशतिश्च, मुहूर्त्तैस्त्रितयाधिकाः । समार्द्धसार्द्धक्षेत्राणां, भानां भोगः क्रमाद्रवेः ॥ ६१ ॥ एवं भैः सप्तविंशत्या, षष्टियुक्तशतत्रये । अह्नामतीतेऽर्कोऽब्दं स्यादेकषष्टितमे दिने ॥ ६२ ॥ द्वादशानां मुहूर्त्तानां, पूर्त्तौ पूर्णौ पुनर्वसू । पुष्यस्याष्टादश ततो, मुहूर्त्तास्तद्दिने गताः ॥ ६३ ॥ ततः परं च पुष्यस्यातीते दिनचतुष्टये । पूर्णार्काब्दस्य षट्षष्टियुक्ता दिन-

शतत्रयी ॥ ६४ ॥ सुखाववोधाय चात्र यन्त्रकं । यथार्कोडुव्यवस्थैवमेकस्याब्दस्य दर्शिता । पञ्चानामपि वर्षाणां, तथा ज्ञेया युगे बुधैः ॥६५॥ ज्ञातुं सूर्यस्य नक्षत्रं, विवक्षिततिथावथ । करणं प्रोच्यते पूर्वाचार्यदर्शितया दिशा ॥ ६६ ॥ युगेऽतीतपर्वसङ्ख्या, प्राग्वत्पञ्चदशाहता । विवक्षितदिनात्पूर्वमतीतैस्तिथिभिर्युता ॥ ६७ ॥ गतैरवमरात्रैश्च, वर्जिताऽथ त्रिभिः शतैः । विभज्यते सा षट्षष्ट्याऽधिकैर्लब्धं च वत्सरः ॥ ६८ ॥ शेषं भवति यत्तस्माद्यथार्हं वक्ष्यमाणकम् । संशोध्यते शोधनकं, गतनक्षत्रसूचकम् ॥६९॥ सप्तषष्ट्या त्रिंशत्याऽल्पा, भागं चेन्न क्षमेत सा । तदा शोध्यं शोधनकमादावेवात्र संभवेत् ॥७०॥ चतुर्विंशत्या मुहूर्त्तैरधिकं दिवसाष्टकम् । पुष्यस्य स्याच्छोधनकमथान्येषां तदुच्यते ॥ ७१ ॥ रात्रिन्दिवानि द्वाषष्टिर्मुहूर्त्ता द्वादशोपरि । उडूनामुत्तराफाल्गुन्यन्तानां शोधनं भवेत् ॥ ७२ ॥ भानां विशाखान्तानां च, षोडशाभ्यधिकं शतम् । भानां तथोत्तराषाढान्तानां त्र्यशीतियुक् शतम् ॥ ७३ ॥ चतुष्पञ्चाशदधिकमहोरात्रशतद्वयम् । षण्मुहूर्त्ताधिकं प्रौष्ठपदान्तानां विशोधनम् ॥ ७४ ॥ एकविंशतिसंयुक्तमहोरात्रशतत्रयम् । षण्मुहूर्त्तयुतं रोहिण्यन्तानां शोधनं मतम् ॥ ७५ ॥ एकषष्ट्या समधिकमहोरात्रशतत्रयम् । स्याद् द्वादशमुहूर्त्ताढ्यं, पुनर्वस्वन्तशोधनम् ॥ ७६ ॥ विना पुष्यं शोधनकान्यमूनि निखिलान्यपि । अध्यर्द्धक्षेत्रनक्षत्रावधिकानि भवन्ति वै ॥ ७७ ॥ यथार्हं च शोधनके, शोधिते शिष्यतेऽत्र यत् । एकादीनि ततो भानि, शोध्यानि स्वस्वमानतः ॥ ७८ ॥ स्वस्वमानं चार्द्धक्षेत्रादीनां नक्षत्राणां प्रागुक्तमेव ॥ एवं क्रमाच्छोध्यमानं, यन्नक्षत्रं न शुध्यति । तद्वर्त्तमानं नक्षत्रं, ज्ञेयं तस्यां तिथौ रवेः

॥७९॥ उदाहरणं चात्र—युगस्य प्रथमे वर्षे, दशपर्वव्यतिक्रमे । पञ्चम्यां सूर्यनक्षत्रं, किमित्यत्र निरूप्यते ॥ ८० ॥ अतीतपर्वणां सङ्ख्या, याऽस्त्यत्र दशलक्षणा । सा पञ्चदशनिघ्ना स्यात्पञ्चाशदधिकं शतम् ॥ ८१ ॥ चतुष्पञ्चाशं शतं स्यात्तद्गतैस्तिथिभिर्युतम् । शतं च स्याद् द्विपञ्चाशमवमद्वितयोज्झितम् ॥८२॥ सषट्षष्ठ्या त्रिशत्या तद्भागं न सहते कृशम् । तत आदित एवात्र, शोधनोपक्रमोऽर्हति ॥ ८३ ॥ संभवेच्छोधनं चात्र, षोडशाभ्यधिकं शतम् । विशाखान्तानि शुद्धानि, भानि ज्ञेयानि तेन च ॥८४॥ शेषं तिष्ठति षट्त्रिंशत्, ततः शुद्ध्यति राधिका । या द्वादशमुहूर्त्ताढ्यत्रयोदशदिनात्मिका ॥ ८५ ॥ द्वाविंशतिर्दिनाः शेषाः, साऽष्टादशमुहूर्त्तकाः । षड्दिन्याऽथैकविंशत्या, मुहूर्त्तैः शुद्धमिन्द्रभम् ॥ ८६ ॥ शेषा दिनाः पञ्चदश, मुहूर्त्ताः सप्तविंशतिः । तेभ्यः शुद्धं मूलभं तन्मानतो राधिकोपमम् ॥ ८७ ॥ शेषौ द्वौ पञ्चदशभिर्मुहूर्त्तैरधिकौ दिनौ । एतौ च पूर्वाषाढायास्तदा भुक्तौ विवस्वता ॥८८॥ युगेऽर्कोडुनिर्णयोऽयं, दशपर्वव्यतिक्रमे । ज्ञेयस्तिथौ च पञ्चम्यामेवं सर्वत्र भावना॥८९॥

युगेऽथ पौरुषीमानं, ज्ञातुं करणमुच्यते । वर्द्धमानं हीयमानं, याम्ये सौम्येऽयने क्रमात्॥९०॥ शङ्कुः पुरुषशब्देन, स्याद्देहः पुरुषस्य वा । निष्पन्ना पुरुषात्तस्मात्पौरुषीत्यपि सिद्ध्यति ॥ ९१ ॥ तथोक्तं नन्दीचूर्णौ—"पुरिसोत्ति संकू पुरिससरीरं वा, तत्र पुरिसाओ निप्फन्ना पोरिसी" इति, अयं भावः—स्वप्रमाणा भवेच्छाया, यदा सर्वस्य वस्तुनः । तदा स्यात्पौरुषी याम्यायनस्य प्रथमे दिने ॥ ९२ ॥ ततश्च तस्य पौरुष्यां, तथा छाया विवर्द्धते । यथा सौम्यायनस्यादौ, स्वमानाद् द्विगुणा भवेत् ॥ ९३ ॥ ततः पुनस्तथा छाया, हीयते सर्ववस्तुनः । यथा याम्यायनादौ सा, स्वस्ववस्तुमिता भवेत् ॥ ९४ ॥ सत्र्यशीतिशततमः, स्वस्वमानस्य योंऽशकः । प्रत्यहं तावती वृद्धिर्याम्ये सौम्येऽयने क्षयः ॥ ९५ ॥ तथाहि—चतुर्विंशत्यङ्गुलस्य, शङ्कोर्भवति तावती । छाया याम्यायनस्यादौ, वर्द्धते प्रत्यहं ततः ॥ ९६ ॥ एकषष्टिविभक्तस्याङ्गुलस्याष्टौ लवा अयम् । भागः शङ्कोर्यथोक्तस्य, सत्र्यशीतिशतोद्भवः ॥ ९७ ॥ तथाहि—एकैकमङ्गुलं कर्त्तुमेकषष्टिलवात्मकम् । सङ्ख्या शङ्कोरङ्गुलानामेकषष्ट्या निहन्यते ॥ ९८ ॥ चतुर्दश शतानि स्युश्चतुष्षष्टियुतान्यथ । सत्र्यशीतिशतेनैषां, विभागेऽष्टकमाप्यते ॥ ९९ ॥ प्राप्यं त्रैराशिकादप्येकषष्टिजलवाष्टकम् । वृद्धिहान्योरङ्गुलस्य, तदपि श्रूयतामिह ॥ १००० ॥ सत्र्यशीतिशतेनाह्नां, चतुर्विंशतिराप्यते । यद्यङ्गुलानामेकेन, किमह्ना लभ्यते तदा? ॥ १ ॥ त्रैराशिकस्थापना १८३–२४–१ ॥ एकेनान्त्येन गुणितश्चतुर्विंशतिलक्षणः । मध्यराशिस्तथैवास्यादेकेन गुणितं हि तत् ॥ २ ॥ सत्र्यशीतिशतेनैष, न भक्तुं शक्यते ततः (२४–१८३) । छेद्यच्छेदकयो राश्योस्त्रिभिः कार्याऽपवर्त्तना ॥ ३ ॥ राशिश्छेद्योऽष्टात्मकोऽभूदेकषष्ट्यात्मकः परः । एवं त्रैराशिकाल्लब्धमेकषष्टिलवाष्टकम् ॥४॥ सार्द्धत्रिंशदहोरात्रात्मके मासे विवस्वतः । चतुश्चत्वारिंशमेव, स्यादंशानां शतद्वयम् ॥ ५ ॥ यतस्त्रिंशद्गुणा अष्टौ, चत्वारिंशं शतद्वयम् । अहोरात्रार्द्धस्य चांशचतुष्कमत्र मील्यते ॥ ६ ॥ चतुश्चत्वारिंशमेतद्यत्किलांशशतद्वयम् । एकषष्ट्याऽस्य भागे स्यादङ्गुलानां चतुष्टयम् ॥ ७ ॥ तथा चाहुः—'वड्ढए हायए वावि, मासेणं चउरङ्गुलं ॥' 'मासेणं'ति सूर्यमासेनेत्यर्थः ॥ त्रिभिर्मासैरङ्गुलानि, वर्द्धन्ते द्वादश क्रमात् । षड्भिर्मासैश्च वर्द्धन्ते,

चतुर्विंशतिरङ्गुलाः ॥ ८ ॥ चतुर्विंशत्यङ्गुलस्य, शङ्कोश्छाया भवेदिति । दिने सौम्यायनस्याद्येऽष्टचत्वारिंशदङ्गुलाः ॥ ९ ॥ चतुर्विंशत्यङ्गुलस्य, शङ्कोश्छाया यथोदिता । चतुर्विंशत्यङ्गुलस्य, जानोरपि तथा भवेत् ॥ १० ॥ अत एव च—दिने याम्यायनस्याद्ये, द्विपदा पौरुषी भवेत् । जानुच्छायाप्रमाणा सा, मीयमाना स्वजानुना ॥११॥ पादद्वितयमानश्च, जानुः स्यात्पादमूलतः । द्वादशाङ्गुलमानोऽत्र, पादो न तु षडङ्गुलः ॥१२॥ वितस्तिमाना स्याच्छाया, मीयमाना वितस्तिना । याम्यायनादौ पौरुष्यां, पादोऽत्र स्यात् षडङ्गुलः ॥ १३ ॥ ततश्च जानुच्छायायामङ्गुलं वर्द्धते यदा । तदा वितस्तिच्छायायामङ्गुलार्द्धं विवर्द्धते ॥ १४ ॥ लघीयसो वस्तुनोऽपि, स्वस्वमानानुसारतः । एवं छायावृद्धिहानी, भावनीये स्वयं बुधैः ॥ १५ ॥ अयने दक्षिणे वृद्धौ, ध्रुवकः स्यात्पदद्वयम् । हानौ च ध्रुवकः सौम्यायने पदचतुष्टयम् ॥ १६ ॥ नभःकृष्णप्रतिपदि, द्विपदा पौरुषी भवेत् । युगस्य प्रथमेऽर्काब्दे, वर्द्धते च ततः क्रमात् ॥ १७ ॥ एवं च—माघस्य कृष्णसप्तम्यां, पौरुषी स्याच्चतुष्पदा । प्रागुक्तरीत्या क्रमतस्तत आरभ्य च क्षयः ॥ १८ ॥ द्वितीयेऽब्दे नभःकृष्णत्रयोदश्याः प्रभृत्यथ । वृद्धिर्माघश्वेततुर्यां, चादिं कृत्वा भवेत्क्षयः ॥ १९ ॥ तृतीयेऽब्दे नभःशुक्लदशम्यां वृद्ध्युपक्रमः । माघकृष्णप्रतिपदि, क्षयस्यादिः प्रकीर्त्तितः॥ २० ॥ वृद्ध्यारम्भश्चतुर्थेऽब्दे, सप्तम्यां नभसः शितौ । माघकृष्णत्रयोदश्या, आरभ्य च ततः क्षयः ॥ २१ ॥ नभःशुक्लचतुर्थ्यां च, वृद्ध्यादिः पञ्चमेऽब्दके । माघशुभ्रदशम्याश्च, प्रारभ्य भवति क्षयः ॥ २२ ॥ वृद्धौ क्षये च सततमङ्गुलस्यैकषष्टिजाः । अष्टांशाः पञ्चभागोनमङ्गुलं सप्तभिर्दिनैः ॥ २३ ॥



सविंशतिशतं भागाः, स्युः पञ्चदशभिर्दिनैः । एकषष्ट्यंशयुग्मोनं, तैश्च स्यादङ्गुलद्वयम् ॥ २४ ॥ यत्तु 'अङ्गुलं सत्तरत्तेण, पक्खेणं तु दुअङ्गुलं' इत्युच्यते तद्व्यवहार इति ज्ञेयं, श्रीउत्तराध्ययनसूत्रवृत्तौ च 'अङ्गुलं सत्तरत्तेणं' इत्यस्य व्याख्याने अङ्गुलं सप्तरात्रेण सार्द्धेनेति शेषो द्रष्टव्यः इत्युक्तमस्ति, तथा चाङ्गुलमेकैकषष्ट्यंशन्यूनमेव स्यादिति ध्येयं ॥ त्रिंशता च दिनैश्चत्वारिंशमंशशतद्वयं । चतुर्भिरेकषष्ट्यंशैस्तेनोना चतुरङ्गुली ॥ २५ ॥ अहोरात्रार्द्धस्य भागचतुष्कस्यात्र योजने । सार्द्धया त्रिंशताऽह्नां स्यात्पूर्णाऽङ्गुलचतुष्टयी ॥२६॥ एकः पादस्त्रिभिर्मासैर्वृद्धिहान्योर्भवेदिति । अयनेन च पूर्णेन, भवत्येवं पदद्वयम् ॥ २७ ॥ इदमर्थलेशतो नन्दीवृत्त्यादौ । यत्तु ज्योतिष्करण्डादौ, वृद्धिहान्योर्निरूपिताः । चत्वारोऽत्राङ्गुलस्यांशा, एकत्रिंशत्समुद्भवाः ॥२८॥ तात्पर्यभेदस्तत्रापि, न कश्चिदिति भाव्यताम् । यतस्तिथीन् पुरस्कृत्य, तत्रेयं पद्धतिः कृता ॥ २९ ॥ अहोरात्रान् पुरस्कृत्य, पूर्वमुक्ता च पद्धतिः । हानिवृद्धिफलं त्वत्र, न किञ्चिदपि भिद्यते ॥ ३० ॥ तथा ह्येकत्रिंशता स्युस्तिथिभिः परिपूर्णकाः । सार्द्धास्त्रिंशदहोरात्रास्तच्च प्राक् सुष्ठु भावितम् ॥ ३१ ॥ तत्सार्द्धत्रिंशताऽह्नां स्याद्यथाऽङ्गुलचतुष्टयम् । तथैकत्रिंशताऽपि स्यात्तिथिभिस्तच्चतुष्टयम् ॥ ३२ ॥ तथाहि—चत्वार एकत्रिंशद्घ्नाश्चतुर्विंशं शतं भवेत् । एकत्रिंशद्विभक्तेऽस्मिन्, स्यादङ्गुलचतुष्टयम् ॥ ३३ ॥ मासे मासे रवेरेवं, तिथ्यर्द्धाधिक्यमूह्यताम् । अहोरात्रैकषष्टौ स्युर्द्वाषष्टिस्तिथयो यथा ॥ ३४ ॥ त्र्यशीत्याढ्यमहोरात्रशतं यद्यनेऽयने । भवेत्तत्र तिथीनां तत्षडशीत्यधिकं शतम् ॥ ३५ ॥ एकत्रिंशद्विभक्तस्याङ्गुलस्यांशचतुष्टयम् । वृद्धिहान्योर्य-

दुक्तं तल्लभ्यं त्रैराशिकादपि ॥ ३६ ॥ षडशीत्याऽतिरिक्तेन, तिथीनां शतकेन चेत् । हानिवृद्ध्योरङ्गुलानां,
चतुर्विंशतिराप्यते ॥ ३७ ॥ तदैकतिथ्या किं प्राप्यमिति ज्ञातुमिदं लिखेत् (१८६–२४–१)। अन्त्येनैकेन
मध्यस्थो, राशिरत्र निहन्यते ॥ ३८ ॥ चतुर्विंशतिरेव स्यादेकेन गुणितं हि तत् । षडशीतिशतेनाल्पो, भक्तुं
नार्हत्ययं ततः ॥ ३९ ॥ छेद्यच्छेदकयो राश्योः, षड्भिः कार्याऽपवर्त्तना । छेद्यश्चतुष्कात्माऽन्यस्तु, स्यादेकत्रिं-
शदात्मकः ॥ ४० ॥ इत्येकत्रिंशदुद्भूतमङ्गुलांशचतुष्टयम् । त्रैराशिकबलेनापि, वृद्धिहान्योः समर्थितम् ॥ ४१ ॥
अथात्र करणं—यत्पर्वणोऽभीष्टतिथौ, पौरुषी ज्ञातुमिष्यते । ततः पूर्वमतीतानि, पर्वाणीह युगादितः ॥ ४२ ॥ २०
स्युर्यानि पञ्चदशभिर्गुणयेत्तानि तत्र च । अभीष्टतिथिपर्यन्तान्, पर्वणोऽस्य तिथीन् क्षिपेत् ॥ ४३ ॥ ह्रियते
षडशीत्याढ्यशतेन राशिरेष च । लब्धेऽङ्के विषमे ज्ञेयमतीतं दक्षिणायनम् ॥४४॥ ज्ञेयं लब्धे समे चाङ्केऽतिक्रान्त-
मुत्तरायणम् । एवं चात्रायनज्ञानोपाय एष प्रदर्शितः ॥ ४५ ॥ षडशीतिशतेनाथ, तिथिराशौ हृतेऽत्र यत् ।
शेषं स्यादथवा भागालाभे यत्स्याद्यथास्थितम् ॥ ४६ ॥ तच्चतुर्घ्नं विधायैकत्रिंशता प्रविभज्यते । यल्लब्धं
तान्यङ्गुलानि, यच्छेषं तेऽङ्गुलांशकाः ॥ ४७ ॥ याम्यायने ध्रुवाङ्कोऽस्ति, यः पादद्वयलक्षणः । स्यात्तत्रैतावतो २५
वृद्धौ, पौरुष्यह्नि विवक्षिते ॥ ४८ ॥ सौम्यायने ध्रुवाङ्कोऽस्ति, यश्चतुष्पादलक्षणः । ततश्चैतावतो हानौ, पौरु- ॥४०७॥
ष्यह्नि विवक्षिते ॥ ४९ ॥ युगस्य पर्वणि प्राज्ञ !, पञ्चाशीतितमे ननु । पञ्चम्यां स्यात्कतिपदा, पौरुषीति वद
द्रुतम् ॥ ५० ॥ अतीतानामिह चतुरशीतिर्याऽस्ति पर्वणाम् । षष्ट्याढ्या द्वादशशती, सा स्यात्पञ्चदशाहता २८

॥ ५१ ॥ पञ्चम्यां पृष्टमिति च, क्षिप्यते तत्र पञ्चकम् । पञ्चषष्टियुतानीति, शतानि द्वादशाभवन् ॥ ५२ ॥
षडशीतिशतेनैषां, भागे लब्धाश्च षट् ततः । षड् गतान्ययनान्यस्ति, साम्प्रतं दक्षिणायनम् ॥ ५३ ॥ शेष-
मेकोनपञ्चाशदधिकं शतमस्ति यत् । तस्मिंश्चतुर्गुणे पञ्च, शताः षण्णवतिस्पृशः ॥ ५४ ॥ हृताश्चैकत्रिंश-
ताऽमी, प्राप्ता चैकोनविंशतिः । शेषाः सप्ताङ्गुलास्ते च, स्युर्यवा अष्टभिर्हताः ॥५५॥ षट्पञ्चाशद्यवा जातास्ते
चैकत्रिंशता हृताः । लब्ध एको यवः शेषाः, पञ्चविंशतिरंशकाः ॥ ५६ ॥ पाद एकोनविंशत्याऽङ्गुलैः सप्ताङ्गु- ५
लाधिकः । याम्यायनत्वादेतच्च, वर्द्धनीयं पदद्वये ॥ ५७ ॥ ततः पादत्रयं सप्ताङ्गुलान्येकस्तथा यवः । एकत्रिं-
शद्भवाः पञ्चविंशतिश्च यवांशकाः ॥ ५८ ॥ पञ्चाशीतितमे पर्वण्येतन्माना युगे भवेत् । पञ्चम्यां पौरुषीत्येवं,
कार्याऽन्यत्रापि भावना ॥ ५९ ॥ युगे वा सप्तनवतेः, पर्वणां समतिक्रमे । पञ्चम्यां स्यात्कतिपदा, पौरुषीत्यत्र
कथ्यते ॥ ६० ॥ अत्र षण्णवतिः पञ्चदशघ्ना गतपर्वणाम् । पञ्चाढ्या स्याच्छताः पञ्चचत्वारिंशाश्चतुर्दश ॥ ६१ ॥
षडशीतिशतेनैषां, भागे सप्त करं गताः । सप्तायनी गता तस्मात्संप्रत्यस्त्युत्तरायणम् ॥ ६२ ॥ त्रिचत्वारिंश- १०
दधिकं, शेषं यद्वर्द्धते शतम् । तस्मिंश्चतुर्गुणे पञ्चशती स्यात्सद्विसप्ततिः ॥ ६३ ॥ विभक्तैकत्रिंशतेयं, प्राप्ता
चाष्टादशाङ्गुली । तया चैकं पदं लब्धमधिकान्यङ्गुलानि षट् ॥ ६४ ॥ शेषाश्चतुर्दशांशा ये, स्युर्यवास्तेऽष्टता-
डिताः । शतमेकं भवत्येवं, यवानां द्वादशोत्तरम् ॥ ६५ ॥ तस्यैकत्रिंशता भागे, हृते लब्धास्त्रयो यवाः ।
शेषाश्चैकत्रिंशदंशा, यवस्यैकोनविंशतेः ॥ ६६ ॥ सौम्यायनत्वादेतच्च, शोध्यं पदचतुष्टयात् । ततः स्यात्पौ- १४

रुषीमानमेवं पूर्वोदिते दिने ॥ ६७ ॥ पञ्चाङ्गुलानि द्वौ पादौ, तथा यवचतुष्टयम् । एकत्रिंशद्विभक्तस्य, यवस्य
द्वादशांशकाः ॥ ६८ ॥ किञ्च—अतीततिथिविज्ञानं, पौरुषीमानतोऽयने । यत्स्यात्त्रैराशिकायत्तं, तदप्यत्र
निशम्यताम् ॥६९॥ चतुर्भिरङ्गुलस्यैकत्रिंशद्भागैर्यदाऽऽप्यते। एका तिथिस्तत्तिथयश्चतुर्भिरङ्गुलैः कति (४/३१–१–४)
॥ ७० ॥ अङ्गुलात्माऽन्तिमो राशिः, सावर्ण्यायाद्यराशिना । भवेच्छतं चतुर्विंशमेकत्रिंशद्गुणीकृतः ॥ ७१ ॥
एतेन गुणितो मध्यराशिर्जात इयन्मितः । आद्येन राशिना भागे, चैकत्रिंशदवाप्यते ॥ ७२ ॥ चतुरङ्गुलवृ-
द्धायां, पौरुष्यां ध्रुवकोपरि । गता याम्यायनस्यैकत्रिंशत्तिथय एव तत् ॥ ७३ ॥ ध्रुवाच्चतुष्पादरूपादथ क्षीणे- २०
ष्विहाष्टसु । अङ्गुलेषु कियत्सौम्यायनस्य गतमुच्यताम् ॥ ७४ ॥ अत्रोच्यते—चतुर्भिरङ्गुलस्यैकत्रिंशद्भागैः क्षयं
गतैः । तिथिरेकाऽऽप्यते चेत्तत्ताः कत्यष्टभिरङ्गुलैः ॥ ७५ ॥ (४/३१–१–८) सावर्ण्यायान्तिमो राशिरेकत्रिंशद्गुणी-
कृतः । जायेते द्वे शते अष्टचत्वारिंशत्समन्विते ॥ ७६ ॥ (२४८)। अन्त्येन राशिनाऽनेन, राशिर्मध्यो हतोऽभ-
वत् । इयन्मानोऽथायमाद्यराशिना प्रविभज्यते ॥ ७७॥ द्वाषष्टिराप्यते तस्मात्, द्वाषष्टिस्तिथयो गताः । ज्ञेया
सौम्यायनस्येदृक् पौरुषी मानदर्शनात् ॥ ७८ ॥ इति पौरुषीप्रकरणं । पादोनपौरुषीरूपा, या पात्रप्रतिलेखना । २५
प्रातः स्यात्साङ्गुलैः षड्भिर्ज्येष्ठाषाढनभस्विके ॥ ७९ ॥ भाद्रादित्रितयेऽष्टाभिर्मार्गादित्रितये पुनः । अङ्गुलैर्द- ॥४०८॥
शभिः शेषत्रये त्वष्टाभिरङ्गुलैः ॥ ८० ॥ अत्रेदं तत्त्वं—यत्र यत्र हि मासादौ, या योक्ता पौरुषीमितिः । तत्र
तत्रोक्ताङ्गुलानां, क्षेपे पादोनपौरुषी ॥ ८१ ॥ इति पादोनपौरुषी । पौषमासे तनुच्छाया, नवपादमिता यदि । २८

तदा स्यात्पौरुषी सार्द्धा, मासे मासे ततः क्रमात् ॥ ८२ ॥ एकैको हीयते पादस्तदाऽऽषाढे पदत्रयम् । यथा
हानिस्ततो वृद्धिस्ततः पौषे यथोदितम् ॥ ८३ ॥ इति सार्द्धपौरुषी । पौषे वितस्तिच्छायाऽथ, यदि स्याद् द्वाद-
शाङ्गुला । तदा दिनस्य पूर्वार्द्धं, मासे मासे ततः पुनः ॥८४॥ द्वयोर्द्वयोरङ्गुलयोर्हानिर्भाव्या ततः शुचौ। मध्याह्ने
स्यान्न तच्छाया, खलमैत्रीव मूलतः ॥ ८५ ॥ यद्वा—पौषे दिनार्द्धेऽङ्घ्रिच्छाया, षट्पादा हीयते ततः । एकैको-
ऽङ्घ्रिर्मासि मासि, चाषाढे निष्ठिताऽखिला ॥ ८६ ॥ एतत्पादोनपौरुष्यादिकं मानं यदीरितम् । तत्सर्वं स्वस्व- ५
राकायां, विज्ञेयं व्यवहारतः ॥ ८७ ॥ इति पूर्वार्द्धं । इत्थं युगस्याभिहितं स्वरूपं, मयाऽऽप्तवाक्यानुगमेन
किञ्चित् । विशेषबोधस्पृहयालुभिस्तु, ज्योतिष्करण्डाद्यवलोकनीयम् ॥ ८८ ॥ ( उपजातिः ) विश्वाश्चर्यदकी-
र्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र
निश्चितजगत्तत्त्वप्रदीपोपमेऽष्टाविंशः परिपूर्णतामकलयत्सर्गो निसर्गोज्ज्वलः ॥ ८९ ॥ ९

॥ इति श्रीलोकप्रकाशेऽष्टाविंशतितमः सर्गः समाप्तः ॥ ग्रन्थाग्रं १२२२

## ॥ अथैकोनत्रिंशत्तमः सर्गः प्रारभ्यते ॥

युगैरित्युक्तरूपैः स्याच्चतुर्भिर्वर्षविंशतिः । पञ्चविंशतयोऽब्दानां, वर्षाणां शतमीरितम् ॥ १ ॥ दशवर्षशतान्यब्दसहस्रं परिकीर्त्तितम् । शतं वर्षसहस्राणां, वर्षलक्षं भवेदिह ॥ २ ॥ अतः परं च सर्वोऽङ्कः, शीर्षप्रहेलिकावधिः । भाव्यः क्रमेण चतुरशीतिलक्षगुणो बुधैः ॥ ३ ॥ तथाहि—वर्षलक्षाणि चतुरशीतिः पूर्वाङ्गमुच्यते । पूर्वाङ्गलक्षैश्चतुरशीत्या पूर्वं प्रकीर्त्तितम् ॥ ४ ॥ पूर्वे च वर्षकोटीनां, लक्षाणि किल सप्ततिः । षट्पञ्चाशत्सहस्राणि, निर्दिष्टानि जिनेश्वरैः ॥ ५ ॥ पूर्वलक्षाणि चतुरशीतिश्च त्रुटिताङ्गकम् । आयुर्मानं भवत्येतन्नाभेयस्य जिनेशितुः ॥ ६ ॥ त्रुटिताङ्गैश्च चतुरशीतिलक्षमितैर्मतम् । त्रुटितं स्यात्क्रमादेवमडडाङ्गं ततः परम् ॥ ७ ॥, अडडं चाववाङ्गं चाववं च हुहुकाङ्गकम् । हुहुकं चोत्पलाङ्गं चोत्पलं पद्माङ्गमेव च ॥ ८ ॥ पद्मं च नलिनाङ्गं च नलिनं स्यात्ततः परम् । भवत्यर्थनिपूराङ्गं, ततश्चार्थनिपूरकम् ॥ ९ ॥ अयुताङ्गं चायुतं च, नयुताङ्गं भवेत्ततः । नयुतं प्रयुताङ्गं च, प्रयुतं चूलिकाङ्गकम् ॥ १० ॥ चूलिका स्यात्ततश्चाग्रे, शीर्षप्रहेलिकाङ्गकम् । शीर्षप्रहेलिका चेति, पूर्णो गणितगोचरः ॥११॥ क्रमेण स्थापना । शीर्षप्रहेलिकाङ्काः स्युश्चतुर्णवतियुक् शतम् । अङ्कस्थानाभिधाश्चेमाः, श्रित्वा माथुरवाचनाम् ॥ १२ ॥ भगवतीसूत्रानुयोगद्वारसूत्रजम्बूद्वीपप्रज्ञप्त्यादिष्वयमङ्कक्रमो ज्ञेय इति भावः । वालभ्यवाचनायां तु—सङ्ख्याह्वयाश्च सन्त्यङ्कस्थानराशेरितोऽन्यथा । स्यादङ्कोऽत्रापि चतुरशीतिल-

क्षगुणो मुहुः ॥ १३ ॥ तथाहि—स्यात्पूर्वलक्षैश्चतुरशीत्याऽत्रैकं लताङ्गकम् । लताङ्गानां च चतुरशीत्या लक्षैर्भवेल्लता ॥ १४ ॥ लताभिस्तावतीभिश्च, भवेन्महालताङ्गकम् । महालता तैस्तावद्भिरित्याशीर्षप्रहेलिकाम् ॥ १५ ॥ नलिनाङ्गं च नलिनं, स्यान्महानलिनाङ्गकम् । महानलिनमेवं स्यात्पद्माङ्गं पद्ममेव च ॥ १६ ॥ महापद्माङ्गं च महापद्मं स्यात्कमलाङ्गकम् । कमलं महाकमलाङ्गं महाकमलं तथा ॥ १७ ॥ कुमुदाङ्गं च कुमुदं, स्यान्महाकुमुदाङ्गकम् । महाकुमुदमेवं स्यात्, त्रुटिताङ्गं ततः परम् ॥ १८ ॥ त्रुटितं महात्रुटिताङ्गं महात्रुटितं तथा । अडडाङ्गं चाडडं च, महाडडाङ्गमेव च ॥ १९ ॥ महाडडमथोहाङ्गमूहं प्रोक्तं ततः परम् । महोहाङ्गं महोहं च, शीर्षप्रहेलिकाङ्गकम् ॥ २० ॥ शीर्षप्रहेलिका च स्यात्सङ्ख्या पर्यन्तवर्त्तिनी । अस्यां पञ्चाशदधिकं, स्यादङ्कानां शतद्वयम् ॥ २१ ॥ १८७९५५१७९५५०११२५९५४१९००९६९९८१३४३०७७०७९७४६५४९४२६१९७७४७६५-७२५७३४५७१८६८१६ इति सप्ततिरंकाः, अग्रे चाशीत्यधिकं बिन्दुशतं । अत्र ज्योतिष्करण्डवृत्तौ श्रीमलयगिरिपूज्या इति स्माहुः—"इह स्कन्दिलाचार्यप्रवृत्तौ (प्रतिपत्तौ) दुष्षमानुभावतो दुर्भिक्षप्रवृत्त्या साधूनां पठनगुणनादिकं सर्वमप्यनेशत्, ततो दुर्भिक्षातिक्रमे सुभिक्षप्रवृत्तौ द्वयोः स्थानयोः सङ्घमेलकोऽभवत्, तद्यथा—एको वलभ्यामेको मथुरायां, तत्र च सूत्रार्थसंघटने परस्परं वाचनाभेदो जातो, विस्मृतयोर्हि सूत्रार्थयोः स्मृत्वा संघटने भवत्यवश्यं वाचनाभेद इति न काचिदनुपपत्तिः, तत्रानुयोगद्वारादिकमिदानीं वर्त्तमानं माथुरवाचनानुगतं, ज्योतिष्करण्डसूत्रकर्त्ता चाचार्यो वालभ्यस्तत इदं सङ्ख्यानप्रतिपादनं वालभ्यवाचनानुगत-

मिति नास्यानुयोगद्वारादिप्रतिपादितसङ्ख्यास्थानैः सह विसदृशत्वमुपलभ्य विचिकित्सितव्यमिति''॥ आरभ्य समयादेवं, शीर्षप्रहेलिकावधि । कालस्य गणितं ज्ञेयमुपमेयं ततः परम् ॥ २२ ॥ तथोक्तं भगवत्यनुयोगद्वारजम्बूद्वीपप्रज्ञप्त्यादिसूत्रेषु—'एताव ताव गणिए, एताव ताव गणियस्स विसए, तेण परं ओवमिए' अनेन कालमानेन, घर्मायां नारकाङ्गिनाम् । यथासंभवमायूंषि, मीयन्ते तत्त्ववेदिभिः ॥ २३ ॥ भवनेशव्यन्तराणां, केषाञ्चिन्नाकिनामपि । केषाञ्चिन्नृतिरश्चां च, तृतीयारकवर्त्तिनाम् ॥ २४ ॥ यद्यप्यस्मात्परोऽप्यस्ति, सङ्ख्याया विषयो महान् । पूर्वोदितचतुष्पल्यप्ररूपणनिरूपितः ॥ २५ ॥ किंत्वसंव्यवहार्योऽसौ, भवति स्थूलदर्शिनाम् । ततः संव्यवहार्येऽस्मिन्, सङ्ख्यानेन निरूपितः ॥ २६ ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिवृत्तौ—''एतस्माच्च परतोऽपि सर्षपचतुष्पल्यप्ररूपणागम्यः सङ्ख्येयः कालोऽस्ति, किंत्वनतिशायिनामसंव्यवहार्यत्वान्नेहोक्त'' इति । स्थित्यधिकारे तु सर्वत्रापि सिद्धान्ते पूर्वकोटेः परतोऽधिकां स्थितिं बिभ्राणौ नरतिर्यञ्चौ सङ्ख्येयायुष्कतया न व्यवह्रियेते, तथोक्तं—''इहासङ्ख्यातवर्षायुर्जघन्यस्थितिकः प्रक्रान्तः, स च सातिरेकपूर्वकोट्यायुर्भवति, तथैवागमे व्यवहृतत्वात्'' इति भग० चतुर्विंशे शते द्वितीयोद्देशकवृत्तौ । अत एव पूर्वकोट्यधिकायुषश्चारित्रप्राप्तिमुक्तिगमनादिकमपि निषिध्यत इति ज्ञेयम् ।

अथ द्विधोपमेयः स्यात्, पल्यसागरभेदतः । तत्स्वरूपं त्वत्र शास्त्रे, संज्ञासर्गे निरूपितम् ॥ २७ ॥ पल्योपमानां सूक्ष्माद्धाह्वयानां कोटिकोटिभिः । दशभिर्जायतेऽत्रैकं, सूक्ष्माद्धासागरोपमम् ॥ २८ ॥ एतेषां सागराणां च, चतस्रः कोटिकोटयः । आद्यः कालोऽवसर्पिण्यां, सुषमसुषमाभिधः ॥ २९ ॥ तिस्रोऽब्धिकोटिकोट्योऽथ, द्वितीयः सुषमाभिधः । तृतीयोऽब्धिकोटिकोटिद्वयं सुषमदुष्षमा ॥ ३० ॥ न्यूनः कालो द्विचत्वारिंशता वर्षसहस्रकैः । तुर्योऽब्धिकोटाकोट्येका, दुष्षमसुषमाभिधः ॥ ३१ ॥ पञ्चमोऽब्दसहस्राणि, स्याद्दुष्षमैकविंशतिः । तावन्त्यब्दसहस्राणि, षष्ठो दुष्षमदुष्षमा ॥ ३२ ॥ एवं दशभिरब्धीनां, कोटाकोटिभिरीरिता । एकाऽवसर्पिणी कालचक्रार्द्धं षडरात्मिका ॥ ३३ ॥ विपरीता व्यवस्थेयमुत्सर्पिण्यां प्रकीर्त्तिता । तथाहि तत्र प्रथमः, कालो दुष्षमदुष्षमा ॥ ३४ ॥ प्राग्वन्मानं त्वस्य वर्षसहस्राण्येकविंशतिः । द्वितीयो दुष्षमाप्यब्दसहस्राण्येकविंशतिः ॥ ३५ ॥ तृतीयोऽब्धिकोटिकोटी, दुष्षमसुषमावधिः । न्यूना सा च द्विचत्वारिंशता वर्षसहस्रकैः ॥ ३६ ॥ वार्द्धिकोटाकोटियुग्मं, तुर्यः सुषमदुष्षमा । पञ्चमः सुषमाकालस्तिस्रोऽब्धिकोटिकोटयः ॥ ३७ ॥ चतस्रोऽब्धिकोटिकोट्यः, सुषमसुषमान्तिमः । उत्सर्पिणीति वार्द्धीनां, दशभिः कोटिकोटिभिः ॥ ३८ ॥ एवं द्वादशकालाऽवसर्पिण्युत्सर्पिणी भवेत् । पुनः कालविभागास्ते, सुषमसुषमादयः ॥ ३९ ॥ सदा विवर्त्तमानत्वसाधर्म्यादेतदुच्यते । कालचक्रं कालभागाः, पूर्वोक्तास्त्वरका इह ॥ ४० ॥ चक्रस्य भ्रमतो यद्वत्पूर्वार्द्धे योऽन्तिमोऽरकः । परार्द्धे प्रथमः स स्याद्यस्तत्राद्योऽत्र सोऽन्तिमः ॥ ४१ ॥ एवमत्राप्युक्तनीत्या, कालचक्रेऽर्द्धयोर्द्वयोः । वैपरीत्याद्विवर्त्तन्ते, द्वादशाप्यरकाः क्रमात् ॥ ४२ ॥ भरतैरावताख्येषु, क्षेत्रेषु स्याद्दशास्वयं । कालः परावर्त्तमानः, सदा शेषेष्ववस्थितः ॥ ४३ ॥ यस्यां सर्वे शुभा भावाः, क्षीयन्तेऽनुक्षणं क्रमात् ।

अशुभाश्च प्रवर्द्धन्ते, सा भवत्यवसर्पिणी ॥ ४४ ॥ इति ज्योतिष्करण्डवृत्त्यभिप्रायः, जम्बूद्वीपप्रज्ञप्तिसूत्रे तु—'अणंतेहिं वण्णपज्जवेहिं गंधपज्जवेहिं यावत्परिहायमाणेहिं २ ओसप्पिणी पडिवज्जइ' इत्येव दृश्यते इति ज्ञेयं। शुभा भावा विवर्द्धन्ते, क्रमाद्यस्यां प्रतिक्षणम्। हीयन्ते चाशुभा भावा, भवत्युत्सर्पिणीति सा ॥ ४५ ॥ तथाहि—प्राप्तप्रकर्षे सुषमसुषमाख्येऽरके भवेत्। भरतैरवताख्येषु, मही करतलोपमा ॥४६॥ सा पञ्चवर्णैर्मणिभिः, स्याद्रम्या तादृशैस्तृणैः। तत्रासते शेरते च, रमन्ते च जनाः सुखम् ॥ ४७ ॥ भान्त्यत्रोद्दालकोद्दालादयो वृक्षाः पदे पदे। स्थूलमूलाश्चारुशाखा, दलपुष्पफलाञ्चिताः ॥ ४८ ॥ ते चामी—उद्दाला कोद्दाला मोद्दाला नृत्तमालकृतमालाः। स्युर्दन्तशृङ्गशङ्खश्वेतान्मालास्तरुविशेषाः ॥ ४९ ॥ (आर्या) भेरुसेरुहेरुतालाः, सालः सरल एव च। सप्तपर्णनागपूगाः, खर्जूरी नालिकेरिका ॥ ५० ॥ एषां वनानि भूयांसि, विराजन्ते पदे पदे। मल्लिका यूथिका जातिबाणमुद्गरबीअकाः ॥ ५१ ॥ सिन्दुवारमनोवेद्यसरिकानवमालिकाः। बन्धुजीवककोरिण्टवासन्तीकुन्दचम्पकाः ॥ ५२ ॥ एषां गुल्मा मृदुमरुत्कम्पिताः कुर्वते तदा। सुगन्धिभिः पञ्चवर्णैः, कुसुमैरास्तृतां महीम् ॥ ५३ ॥ वनराज्यस्तदा हंसैः, सारसैश्च कपिञ्जलैः। जीवञ्जीवैः कोकिलाद्यैर्भान्ति कान्ताञ्चितैः खगैः ॥ ५४ ॥ मत्ताङ्गाख्यास्तदा कल्पद्रुमाः स्युर्भासुरश्रियः। मत्तं मदस्तस्य चाङ्गं, कारणं येषु ते तथा ॥ ५५ ॥ चन्द्रप्रभाद्याः स्युर्मद्यविशेषा यादृशा इह। उत्कृष्टद्रव्यनिष्पन्ना, वर्णगन्धरसोत्तराः ॥ ५६ ॥ आरोग्यपुष्टिसौभाग्यमदतुष्ट्यादिकारकान्। तेषां फलानि पुष्पाणि, स्रवन्ति तादृशान् रसान् ॥ ५७ ॥ भृताङ्गाख्यास्तथा कल्पतरवो बिभ्रति श्रियम्। फलादि येषां रत्नादिनानापात्रत्वमियति ॥ ५८ ॥ तूर्याङ्गाख्यास्तदा कल्पतरवः सुखयन्ति च। चतुर्विधानां वाद्यानां, ततादीनां वरारवैः ॥ ५९ ॥ अयं भावः—पत्रपुष्पफलादीनां, भवेत्तेषां मरुज्जुषाम्। दक्षशिल्पिप्रयुक्तानामातोद्यानामिव ध्वनिः ॥ ६० ॥ आतोद्यचातुर्विध्यं चैवं—ततं वीणाप्रभृतिकं, तालप्रभृतिकं घनम्। वंशादिकं तु शुषिरमानद्धं मुरजादिकम् ॥ ६१ ॥ तदा दीपशिखा नाम, कल्पवृक्षाः स्फुरद्रुचः। दीपा इव स्नेहसिक्ता, दीप्यन्ते तिमिरच्छिदः ॥ ६२ ॥ अयं भावः—यथा दीपशिखा रात्रौ, गृहान्तर्द्योतते भृशम्। दिवसे वा गृहाद्यन्तस्तद्वद्देते द्रुमा अपि ॥ ६३ ॥ एवं च वक्ष्यमाणकल्पद्रुमेभ्य एषां विशेषो भावितो भवतीति ज्ञेयं। अथ ज्योतिषिका नाम, शोभन्ते कल्पपादपाः। ज्योतिर्वह्निर्दिनेशो वा, तत्तुल्यत्वात्तथाभिधाः ॥ ६४ ॥ 'ज्योतिर्वह्निदिनेशयो'रिति वचनात्। अयं भावः—तेषां स्वभावात्स्यात्कान्तिरचिरोद्गतसूर्यवत्। विद्युदुल्कावलयवन्निर्धूमानलपुञ्जवत् ॥ ६५ ॥ अत एव प्रभा तेषां, द्रष्टॄणां सुखदायिनी। दुःखदाऽक्षिप्रातिकूल्यान्न तु मध्यन्दिनार्कवत् ॥ ६६ ॥ नरक्षेत्राद्बहिर्वर्त्तिचन्द्रसूर्यग्रहादिवत्। परस्परावगाढाभिर्लेश्याभिर्भान्ति ते स्थिराः ॥ ६७ ॥ चित्राङ्गा नाम ये कल्पवृक्षास्ते माल्यदायिनः। चित्रं विवक्षया माल्यं, तद्धेतुत्वात्तथाभिधाः ॥ ६८ ॥ यथा प्रेक्षागृहं नानाचित्रोपेतं मनोरमम्। सर्वतो लम्बमानाभिः, पुष्पस्रग्भिरलङ्कृतम् ॥ ६९ ॥ ग्रथितैर्वेष्टिमैः संघातिमैश्च पूरिमैरिति। माल्यैः पूर्णं द्वारदेशोल्लसद्वन्दनमालिकम् ॥ ७० ॥ पञ्चवर्णपुष्पपुञ्जोपचारचारुभूतलम्। सुखदायि भवेल्लोके, तथा ते स्वर्द्रुमा अपि ॥ ७१ ॥ त्रिभि-

विंशेषकं ॥ भोज्यसंपादकाः कल्पवृक्षाश्चित्ररसाह्वयाः । चित्रो नानाश्चर्यदो वा, रसो ह्येषां ततस्तथा ॥ ७२ ॥ सुगन्धिस्वच्छकलमशालितन्दुलगर्भितम् । तादृग्गोदुग्धसंराद्धं, परमान्नं सुसंस्कृतम् ॥ ७३ ॥ सद्यस्कशारदघृतशर्कराक्षोदमिश्रितम् । तुष्टिपुष्ट्यादिजनकमतिस्वादु भवेद्यथा ॥ ७४ ॥ संस्कृतो वा सूपकारैरोदनश्चक्रवर्त्तिनः। चतुष्कल्पसेकसिक्तोऽखण्डः कमलशालिजः ॥ ७५ ॥ सुपक्वो बाष्पमुन्मुञ्चन्मृदुस्तुषमलोज्झितः। विविक्तसिक्थो विविधशाकशाली भवेद्यथा ॥ ७६ ॥ चतुष्कल्पसेकसिक्त इति । विज्ञा रसवतीशास्त्रे, कोमलं कर्त्तुमोदनम् । कुर्वन्ति चतुरः कल्पांस्ते सेकविषयानिह ॥ ७७ ॥ वस्त्रपूतस्वग्निपक्वप्राज्याज्यसमितोद्भवः । यथा वा मोदको भूरिशर्कराक्षोदमेदुरः ॥ ७८ ॥ द्राक्षाचारुकुलीनालीकेरखण्डादिबन्धुरः । कर्पूरैलालवङ्गादिराजद्रव्यपरिष्कृतः ॥ ७९ ॥ सुरभिः कोमलः स्वच्छो, बलपुष्ट्यादिकृद्भवेत् । क्षुत्पिपासाप्रशमनः, सर्वाङ्गीणप्रमोदकृत् ॥ ८० ॥ तथा नानारसोपेतसद्भोज्यविधिशालिभिः । फलपुष्पैर्विराजन्ते, वृक्षाश्चित्ररसा अपि ॥ ८१ ॥ अष्टभिः कुलकं । मण्यङ्गा नाम ये कल्पद्रुमास्ते भूषणप्रदाः । मणीर्मणिमयीर्भूषास्तद्दायित्वाच्च ते तथा ॥ ८२ ॥ हारोऽर्द्धहारो मुकुटः, कुण्डलं कर्णवालिका । कर्णवेष्टनकं ग्रैवेयकं कङ्कणमुद्रिका ॥ ८३ ॥ हेमजालं रत्नजालं, कटकं वलयाङ्गदे । बाहुबन्धो बाहुरक्षा, पुष्पकं तिलकोऽपि च ॥ ८४ ॥ दीनारमालिका चन्द्रमालिका सूर्यमालिका । शिरोमणिर्झुम्बनकं, काञ्ची च कटिसूत्रकम् ॥ ८५ ॥ नूपुरः पादकटको, घर्घरी क्षुद्रघण्टिका । भूषाभिदो या इत्याद्याः, स्वर्णमुक्तामणीभवाः ॥ ८६ ॥ स्वभावतस्तथारूपैः, फलपुष्पैरलङ्कृताः । तदर्थिनां द्रुमास्ते द्राक्, पूरयन्ति मनोरथान् ॥ ८७ ॥ पञ्चभिः कुलकं ॥ गेहाकाराः कल्पवृक्षा, नानागेहाकृतिस्पृशः । निवाससौख्यं विपुलं, वितरन्ति तदर्थिनाम् ॥ ८८ ॥ कपिशीर्षस्फुरद्वप्रचरिकाट्टालकाश्रिताः । मनोज्ञमण्डपास्तुङ्गतोरणाश्रितगोपुराः ॥ ८९ ॥ एकद्वित्रिचतुःपञ्चषट्सप्ताद्युरुभूमयः । गवाक्षालीपरिक्षिप्ताः, सन्निर्यूहविटङ्किकाः ॥ ९० ॥ अभ्रंलिहशिरश्चन्द्रशालाशालितमौलयः । सद्वारपट्टवलभीस्तम्भसंबन्धबन्धुराः ॥ ९१ ॥ वृत्तास्त्र्यस्राश्चतुःकोणा, आदर्शोपमकुट्टिमाः । चञ्चच्चन्द्रोदयाश्चारुचित्रचित्रितभित्तयः ॥ ९२ ॥ एकद्वित्रिचतुरादिशाला गर्भगृहाश्रिताः । श्रीवत्ससर्वतोभद्रनन्द्यावर्त्तादिसंज्ञिनः ॥ ९३ ॥ शैलार्द्धशैलसंस्थाना, गिरिकूटाकृतिस्पृशः । आस्थानप्रेक्षणगृहचित्रशालाद्यलङ्कृताः ॥ ९४ ॥ मज्जनादर्शशृङ्गारमोहनागारमण्डिताः । आपणाद्यैर्विशेषैश्च, विविधैरुपलक्षिताः ॥ ९५ ॥ सर्वर्त्तुसुखदा रम्या, लसत्सोपानदर्दराः । सुखारोहावताराश्च, सुखप्रवेशनिर्गमाः ॥ ९६ ॥ लिप्ता गुप्ता घृष्टमृष्टा, मार्जिताः सुधयोज्ज्वलाः । प्रासादाः स्युर्यथा लोके, स्वभावात्ते तथा द्रुमाः ॥ ९७ ॥ नवभिः कुलकं ॥ अनग्नाख्याः कल्पवृक्षाः, स्युर्नानावस्त्रदायिनः । जना अनग्नास्तेभ्यः स्युस्ततस्ते तादृशाभिधाः ॥ ९८ ॥ चीनांशुकं दुकूलं च, कौशेयमतसीमयम् । कार्पासिकं चाजिनकं, तार्णरल्लककम्बलाः ॥ ९९ ॥ इत्यादयो वस्त्रभेदा, देशे देशे भवन्ति ये । नानावर्णा मृदीयांसो, मनश्चक्षुर्वपुःसुखाः ॥ १०० ॥ द्रुमास्ते तादृशैर्वस्त्रैः, कम्रैः स्त्रीपुरुषोचितैः । स्वभावतः समुद्भूतैः, प्रीणयन्ति तदर्थिनः ॥ १ ॥ त्रिभिर्विशेषकं ॥ एवमेते दशविधाः, कल्पवृक्षाः स्वभावतः । यथोक्तरूपा जायन्ते, तादृक्कालानुभा-

कल्पाः युग्मियुग्मिन्यः

वतः ॥ २ ॥ तथोक्तं जीवाभिगमसूत्रे–"तहेव ते मत्तंगावि दुमगणा अणेगबहुवीससापरिणयाए मज्जविहीए उववेया फलेहिं पुण्णा वीसंदंती"त्यादि, एतन्नामसंग्रहश्चैवं—मत्त १ भृत २ त्रुटिताङ्गा ३ दीप ४ शिखाज्योतिरङ्ग ५ चित्राङ्गाः ६ । चित्ररसा ७ मण्यङ्गा ८ गेहाकारा ९ अनग्नाश्च १० ॥ ३ ॥ ( आर्या ) एते च वनस्पतय इति ज्ञायन्ते, तथोक्तं जम्बूद्वीपप्रज्ञप्तिवृत्तौ—"अथात्र वृक्षाधिकारात्कल्पद्रुमस्वरूपमाहे"ति, आचाराङ्गलोकसाराध्ययननिर्युक्तिवृत्तावप्युक्तं—"सचित्तो द्विपदश्चतुष्पदोऽपदश्चेति, द्विपदेषु जिनः, चतुष्पदेषु सिंहादिः, अपदेषु कल्पवृक्ष"इति ॥ तस्मिन्नवसरे च स्युर्मनुष्या युग्मधर्मिणः । सुरूपाः सुभगा दक्षा, न्यक्षलक्षणलक्षिताः ॥ ४ ॥ स्वर्णकच्छपसंस्थानमृदुरक्ततलक्रमाः । पुराद्रिमकराब्धीन्दुमुख्यरेखाङ्कितांह्रयः ॥ ५ ॥ संहतर्जुक्रमवृद्धचरणाङ्गुलिमञ्जुलाः । ताम्रोन्नततनुस्निग्धसन्नखा गुप्तगुल्फकाः ॥ ६ ॥ मृदुवृत्तक्रमस्थूलजङ्घा निगूढजानवः । हस्तिहस्तोरवो जात्यतुरङ्गगुप्तगुह्यकाः ॥ ७ ॥ जात्याश्ववद्वहिर्मूत्राद्युपलेपविवर्जिताः । कण्ठीरवकटीराः सद्वज्रमध्या झषोदराः ॥ ८ ॥ स्फुरत्तरङ्गसुभगत्रिवलीललितोदराः । निम्नप्रदक्षिणावर्त्तगङ्गावर्त्ताभनाभयः ॥ ९ ॥ मृदुस्निग्धतनुश्यामरोमराजीविराजिताः । मञ्जुमानोपेतपार्श्वा, अनालक्ष्यकरण्डकाः ॥ १० ॥ पृथुस्वर्णशिलाकल्पश्रीवत्साङ्कितवक्षसः । पुष्टप्रकोष्टकद्रङ्गपरिघोपमबाहवः ॥ ११ ॥ रक्ताब्जमञ्जुलतलमणिबन्धाढ्यपाणयः । स्वस्तिकार्केन्दुचक्रादिरेखाराजिकराम्बुजाः ॥ १२ ॥ वृषस्कन्धोन्नतस्कन्धा, दधानाः कण्ठकंदलम् । त्रिरेखं कम्बुसदृशं, चतुरङ्गुलमात्रकम् ॥ १३ ॥ व्याघ्रविस्तीर्णहनवोऽवस्थितश्मश्रुराजयः । पक्वबिम्बाभाधरौष्ठास्तद्वि-



श्रान्तसितस्मिताः ॥ १४ ॥ कुन्दपुष्पोपमाखण्डस्थिराच्छिद्ररदालयः । सुरक्तरसनाः कोकनदकोमलतालवः ॥ १५ ॥ शुकचञ्चूपमोत्तुङ्गसरलायतनासिकाः । स्मेराब्जत्रस्तहरिणनेत्रजैत्रोरुलोचनाः ॥ १६ ॥ आरोपितधनुर्वक्रसलीलश्यामलभ्रुवः । प्रमाणोपेतसुभगाव्याहतश्रवणेन्द्रियाः ॥ १७ ॥ पीनादर्शतलाकारकपोलललिताननाः । चन्द्रार्द्धभाला निर्लक्ष्मकार्त्तिकीन्दुसमाननाः ॥ १८ ॥ उष्णीषशिखरोदारसच्छत्राकारमौलयः । दाडिमीपुष्परक्ताच्छमृदुकेशान्तभूमयः ॥ १९ ॥ स्निग्धश्यामसुगन्धीषद्वक्रस्वावर्त्तमूर्द्धजाः । मत्तद्विपेन्द्रगतयो, द्वात्रिंशल्लक्षणान्विताः ॥ २० ॥ तानि चैवं—यूप १ स्तूप २ ध्वज ३ च्छत्र ४ कमण्डलु ५ यवां ६ कुशाः ७ । पताका ८ कूर्म ९ मकर १० मयूर ११ सुप्रतिष्ठकाः १२ ॥ २१ ॥ मेदिनी १३ तोरणा १४ म्भोधि १५ मन्दिरा-१६ दर्श १७ पर्वताः १८ । गजो १९ क्ष २० सिंह २१ कलश २२ रथ २३ मत्स्य २४ शुका २५ स्तथा ॥ २२ ॥ वरस्थाला २६ ष्टापद २७ श्रीदामा २८ भिषेक २९ चामराः ३० । वापी ३१ सौवस्तिक ३२ श्चेति, द्वात्रिंशत्पुण्यशालिनाम् ॥ २३ ॥ तदा सर्वाङ्गसुन्दर्यः, प्रशस्तस्त्रीगुणाश्रिताः । पुण्यनैपुण्यलावण्या, भवन्ति महिला अपि ॥ २४ ॥ सुवर्णकूर्मसंस्थानमृदुरक्ततलांह्रयः । सुश्लिष्टवृत्तसरलक्रमदीर्घाङ्गुलिव्रजाः ॥ २५ ॥ तलिनानुन्नतान् रक्तान्, दधत्यः पादयोर्नखान् । दशदिक्पतिदेवीनामात्तान् मौलिमणीनिव ॥ २६ ॥ यासां वृत्तक्रमस्थूलमृदुजङ्घापराजिताः । वसन्ति विपिनेऽद्यापि, हरिण्यो लज्जिता इव ॥ २७ ॥ जिता वृत्ताऽरोमपीनमृदुगौरैर्यदूरुभिः । कदल्योऽन्तर्दधुः शून्यभावं व्रीडातुरा इव ॥ २८ ॥ समुद्गसंपुट इव, श्लिष्टसन्धिर्न दृश्यते ।

यासां जानुर्भृशं गूढः, कृपणस्येव सेवधिः ॥ २९ ॥ नितम्बबिम्बं पृथु या, दधते पीनवर्त्तुलम् । जङ्गमं त्रिजगज्जिष्णोः, स्मरस्येव सुदर्शनम् ॥ ३० ॥ वदनद्विगुणायामं, मृदुलं मांसलं घनम् । विभाति जघनं यासां, स्वःसरित्पुलिनोपमम् ॥ ३१ ॥ यतो लक्षणोपेतस्त्रीणां जघनं मुखायामाद् द्विगुणविस्तारं भवतीति । कटी पटीयसी यासां, कण्ठीरवविजित्वरी । नाभिः सौन्दर्यसर्वस्वभूमभूमिगृहोपमा ॥ ३२ ॥ प्रक्षीणमुदरं यासां, न स्पष्टमुपलक्ष्यते । किन्तु त्रिवल्याद्याधेयानुपपत्त्या प्रतीयते ॥ ३३ ॥ यासामतिकृशो मध्यदेशो भङ्गभयादिव । त्रिवलीदम्भतः स्वर्णसूत्रत्रयदृढीकृतः ॥ ३४॥ यद्वा—पुरो रोमावली चारुर्यासां पश्चात्तु वेणियुक् । शङ्के भङ्गभिया मध्यो, दत्तायःपट्टिकाद्वयः ॥ ३५ ॥ रोमावली कुण्डलिनी, यासां नाभिबिलोद्गता । रागोरुगरलग्रस्तं, न केषां कुरुते मनः ? ॥ ३६ ॥ तनुस्निग्धश्यामरोमतरङ्गोच्चैः प्रसर्पति । यासां नाभिह्रदोद्भूता, रोमराजीतरङ्गिणी ॥ ३७ ॥ यासामुरोजौ राजेते, पीनवृत्तदृढोन्नतौ । मनःस्थयो रत्यनङ्गवेश्मनोः कलशाविव ॥ ३८ ॥ कुचौ सचूचुकौ यासां, नीलाब्जपिहिताननौ । मनःस्मरगृहद्वारमाङ्गल्यकलशाविव ॥ ३९ ॥ स्थातुं यत्कुचयोरन्तरक्षमा चारुवृत्तयोः । गुणान्वितापि सच्छिद्रा, मुक्तास्रग् लम्बते बहिः ॥ ४० ॥ मृणालिकामृदू बाहू, करौ यासां कजोपमौ । मृदुरक्ततलौ सूर्यचन्द्रचक्रादिचिह्नितौ ॥ ४१ ॥ सरलाभिः सुवृत्ताभिः, स्निग्धारुणनखांशुभिः । अङ्गुलीभिः करौ यासां, राजतः स्मरतूणवत् ॥ ४२ ॥ त्रिलोकोत्तरसौभाग्यव्यञ्जिरेखात्रयाङ्कितः । कण्ठो यासां विभाति स्म, चतुरङ्गुलसंमितः ॥ ४३ ॥ यासां हनुरनूनश्रीः, शोभते भासुरद्युतिः । स्वैरं

विलसतो रत्यनङ्गयोरिव दर्पणः ॥ ४४ ॥ अधरोष्ठपुटं यासां, क्लृप्तं रागरसैरिव । विरक्तानपि यद्रक्तान्, कुरुते चिन्तनादपि ॥ ४५ ॥ ईषद्रक्तं सुरक्तेन, नीरसं सरसेन च । स्वाधरोष्ठेन सस्पर्द्धं, प्रवालं सार्थकाभिधम् ॥ ४६ ॥ रक्तत्वं नीरसे रत्ने, माधुर्यं पाण्डुरेऽमृते । स्थाने द्वयोस्तयोर्योगाद्यदोष्ठस्तद्द्वयाधिकः ॥ ४७ ॥ अन्तर्मुखं दन्तपङ्क्तिर्यासामविरला समा । माणिक्यसंपुटन्यस्ता, मुक्तालिरिव राजते ॥ ४८ ॥ यासां रक्तोऽधरो रागं, जनयत्युचितं हि तत् । रागं मुक्तोपमा दन्तावली सूते तदद्भुतम् ॥ ४९ ॥ शोभते रसना यासां, कमलच्छदकोमला । सुखशय्येव भारत्या, जाग्रत्या मुखमन्दिरे ॥ ५० ॥ दीर्घोन्नताऽतिसरला, यासां नासा विराजते । कलिका दीपकस्येव, श्रियां क्रीडागृहे मुखे ॥ ५१ ॥ तीक्ष्णाग्रे विपुले श्यामतारके च यदीक्षणे । अन्तर्निविष्टभ्रमरे, भातः पद्मे इव स्मिते ॥ ५२ ॥ अक्षिभिः सुभगैर्यासां, हृतसौंदर्यसंपदः । उद्घाटपक्ष्माररयस्तस्थुः स्वःसुदृशां दृशः ॥ ५३ ॥ विलासचटुले यासां, कर्णोपान्तप्रसर्पिणी । नेत्रे साञ्जनलक्ष्मीके, भातः प्राप्ताञ्जने अपि ॥ ५४ ॥ यासु कामास्त्रशालासु, लम्बिते धनुषी इव । भ्रुवौ सदा सहस्थायिचक्षुर्बाणे विराजतः ॥ ५५ ॥ चक्षुःकासारयोर्यासां, शृङ्गाररसपूर्णयोः । कटाक्षा वीचय इवाभान्ति कामानिलोत्थिताः ॥ ५६॥ भूषणालङ्कृते यासां, श्रवणे दीर्घवर्त्तुले । दोलाविलासं बिभृतः, क्रीडतो रत्यनङ्गयोः ॥ ५७ ॥ सुवर्णशालिनोर्मुक्तामययोश्चारुवृत्तयोः । तुल्ययोः शोभते सङ्गो, यत्कुण्डलकपोलयोः ॥ ५८ ॥ यद्गौरगल्लयोर्भान्ति, कुटिलालकवल्लयः । प्रसूनेषोरिव जयप्रशस्त्यक्षरपङ्क्तयः ॥ ५९ ॥ मलिनांशव्यपोहाय, योऽयमर्द्धीकृतो विधुः ।

यासां भालस्थलं तेन, निर्मलेनेव निर्मितम् ॥ ६० ॥ यदास्यसुषमाकाङ्क्षी, ममज्जाम्भोनिधौ विधुः । तथापि योनिजातस्य, तस्य तातस्य सा कुतः ? ॥ ६१ ॥ किंचिदाकुञ्चिताः स्निग्धा, मृदुला श्यामलांशवः । यासामत्यन्ततनवः, केशा लेशा इव श्रियाम् ॥ ६२ ॥ मानवा मौलितो वर्ण्या, यद्यप्यंह्रेस्तु नाकिनः । तथाप्येतेऽतिपुण्यत्वाद्देवत्वेन विवक्षिताः ॥ ६३ ॥ सिद्धान्तेऽप्यत एवैषामनेनैव क्रमेण हि । आदिष्टं वर्णनं पूज्यैरियं तद्दिक् प्रदर्शिता ॥ ६४ ॥ एवं च ताः सुवदनाः, सुकेश्यः स्युः सुलोचनाः । चारुवक्षोजजघनाः, सदाऽवस्थितयौवनाः ॥ ६५ ॥ सद्राजहंसगतयः, कलकण्ठीकलस्वराः । स्वर्णचम्पकचार्वङ्ग्यो, द्वात्रिंशल्लक्षणाञ्चिताः ॥ ६६ ॥ द्वात्रिंशल्लक्षणानि च ज्योतिष्करण्डवृत्तौ श्रीमलयगिरिभिर्दर्शितानि पूर्वोक्तान्येव, किन्त्वत्र जम्बूद्वीपप्रज्ञप्तिवृत्तौ मकरस्थाने मकरध्वज इति दृश्यते, तथा च तद्ग्रन्थः—"मकरध्वजः—कामदेवस्तत्संसूचकं सूचनीये सूचकोपचाराल्लक्षण"मिति, तच्च सर्वकालमविधवत्वादिसूचकमिति ॥ स्वभर्त्तुः किञ्चिदूनोच्चा, भाग्यसौभाग्यभूमयः । सर्वेषामप्यनुमता, दक्षालापाः प्रियंवदाः ॥ ६७ ॥ सुस्था भाविकशृङ्गाराः, सीमन्ताद्युज्झिता अपि । मदमन्थरगामिन्यो, निर्विकाराशया अपि ॥ ६८ ॥ स्वाभाविकैरलङ्कारैर्दशभिः स्त्रीजनोचितैः । सुशिक्षिता इव सदा, लीलादिभिरलङ्कृताः ॥ ६९ ॥ ते चामी—लीला १ विलासो २ विच्छित्ति ३ बिब्बोकः ४ किलिकिञ्चितम् ५ । मोट्टायितं ६ कुट्टमितं ७, ललितं ८ विहृतं तथा ॥ विभ्रम ९ श्चेत्यलङ्काराः, स्त्रीणां स्वाभाविका दश । एतल्लक्षणानि चैवं काव्यानुशासनसूत्रे—वाग्वेषचेष्टितैः प्रियस्यानुकृतिर्लीला १ स्थानादीनां वैशिष्ट्यं विलासः २ ग्रन्थान्तरेऽप्युक्तं—स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणां चैव । उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् ॥ १ ॥ गर्वादल्पाकल्पन्यासः शोभाकृद्विच्छित्तिः, ३ इष्टेऽवज्ञा बिब्बोकः ४ वागङ्गभूषणानां व्यत्यासो विभ्रमः ५ स्मितहसितरुदितभयरोषगर्वदुःखश्रमाभिलाषसंकरः किलिकिञ्चितं ६ प्रियकथादौ तद्भावभावनोत्था चेष्टा मोट्टायितं ७ अधरादिग्रहादुःखेऽपि हर्षः कुट्टमितं ८ मसृणोऽङ्गन्यासो ललितं ९ व्याजादेः प्राप्तकालस्याप्यवचनं विहृतं १०, एतेषां दशानां सूत्राणां सोदाहरणा वृत्तयस्तु काव्यानुशासनटीकाया अलङ्कारचूडामणेरवसेयाः, एतच्च जम्बूद्वीपप्रज्ञप्तिसूत्रेऽपि सूचितं, तथाहि—"संगयगयहसिअभणिअचिट्ठिअविलाससंलावणिउणजुत्तोवयारकुसला" इति ॥ न तूद्दिश्यान्यमर्त्यांस्ता, विकारं बिभ्रते मनाक् । कालस्वभावाद्देवाल्पविकारा न्यायमार्गगाः ॥ ७० ॥ अनभ्यस्तनीतिकामशास्त्रा अपि स्वभावतः । युक्तकामोपचारेषु, चतुराश्चतुराशयाः ॥ ७१ ॥ नयनोत्सवकारिण्यश्चित्रकृत्प्रियदर्शनाः । साक्षादप्सरसः स्वर्गादवतीर्णा इव क्षितिम् ॥ ७२ ॥ तत्पतिप्राग्भवाचीर्णदानादिसुकृतोद्भवैः । पचेलिमैरिव फलैर्जातेदृग्रूपसंपदः ॥ ७३ ॥ तास्तादृश्यस्तदानीं स्युः, स्त्रियः कालस्वभावतः । युग्मिन्यः परिभोगार्हा, युग्मिनां पुण्यशालिनाम् ॥ ७४ ॥ सर्वेऽपि पुंस्त्रीरूपास्ते, मनुष्याः शुभलक्षणाः । नान्दीसिंहक्रौञ्चहंसगम्भीरमधुरस्वराः ॥ ७५ ॥ आद्यसंहनना आद्यसंस्थानाः कान्तिशालिनः । दद्रुकुष्ठकिलासादित्वग्दोषरहिताङ्गकाः ॥ ७६ ॥ कपोतवत्परिणताहाराः कङ्कवयोगुदाः । अलग्नमलमूत्रादिलेपापानास्तुरंगवत् ॥ ७७ ॥ पृष्ठकरण्डकवाच्यानि

॥४१५॥

पृष्ठवंशोन्नतास्थिशकलानि । षट्पञ्चाशां द्विशतीं दधतः क्रोशत्रयोन्नतयः ॥ ७८ ॥ आर्या ॥ पद्मोत्पलादिवचारुगन्धश्वासमुखाम्बुजाः । तनुक्रोधमानमायालोभदोषाः स्वभावतः ॥ ७९ ॥ विनीता भद्रकास्त्यक्तभक्ष्यभोज्यादिसंचयाः । संतोषिणो निरौत्सुक्या, मार्दवार्जवशालिनः ॥ ८० ॥ सत्यपि स्वर्णरत्नादौ, ममत्वावेशवर्जिताः । परस्परं त्यक्तवैरकलहद्रोहमत्सराः ॥ ८१ ॥ अश्वमातङ्गकरभवृषभादिषु सत्स्वपि । तद्भोगविमुखाः पादविहाराः स्वैरचारिणः ॥ ८२ ॥ गोमहिष्येडकाजासु, सुव्रतासु सतीष्वपि । तदङ्गीकारतद्दोहतदुग्धास्वादवर्जिताः ॥ ८३ ॥ यक्षभूतपिशाचादिग्रहमारिविवर्जिताः । कासश्वासज्वराद्यर्त्तिव्याधिव्यसनवञ्चिताः ॥ ८४ ॥ कृषिसेवावणिज्यादिवृत्तिक्लेशपरिच्युताः । वाञ्छामात्रप्राप्तकामा, निश्चिन्ताः सुखमासते ॥ ८५ ॥ भूपालयुवराजेभ्यः, श्रेष्ठिसैन्याधिपादिभिः । नायकै रहितास्तुल्याः, स्युः सर्वेऽप्यहमिन्द्रकाः ॥ ८६ ॥ एकादशभिः कुलकं ॥ तदा न कोऽपि कस्यापि, दासः प्रेष्यश्च कर्मकृत् । भागिको भृतकः शिष्य, आभियोग्योज्झिता हि ते ॥ ८७ ॥ प्रसूपितृस्वसृभ्रातृभार्यापुत्रस्नुषादिषु । स्वजनेष्वपि ते मर्त्या, न तीव्रप्रेमबन्धनाः ॥ ८८ ॥ तदा गोधूमशाल्याद्या, भवन्त्यौषधयः स्वयम् । सरसत्वाद्भुवो भूम्ना, सांप्रतीनतृणादिवत् ॥ ८९ ॥ आहारायोपयुज्यन्ते, न तास्तेषां नृणां परम् । पृथ्वीकल्पद्रुमफलपुष्पाहारा हि ते जनाः ॥ ९० ॥ शर्करामोदकादिभ्योऽप्यनन्तगुणमाधुरी । भूमिर्भवेत्तदा स्निग्धा, परिणामे हितावहा ॥ ९१ ॥ नीरोगाणां सुजातीनां, पालितानां प्रयत्नतः । पुण्ड्रेक्षुचारिणीनां च, गवां लक्षस्य यत्पयः ॥ ९२ ॥ एकगव्यां संक्रमितमर्द्धार्द्धादिव्यवस्थया ।

निष्पादितं तेन लक्षद्रव्यव्ययसमुद्भवम् ॥ ९३ ॥ दीपनीयं बृंहणीयं, सर्वाङ्गीणप्रमोदकृत् । सुरभि स्वादु कल्याणभोज्यं यच्चक्रवर्त्तिनः ॥ ९४ ॥ ततोऽप्यधिकमाधुर्यस्तुष्टिपुष्ट्यादिकृद्रसः । कल्पद्रुमाणां तेषां स्यात्पुष्पेषु च फलेषु च ॥ ९५ ॥ चतुर्भिः कलापकं । तुवरीकणमात्रेण, तेनाहारेण ते जनाः । अहोरात्रत्रयं यावत्, सुहिताः सुखमासते ॥ ९६ ॥ अथाहृत्य तमाहारं, प्रासादाकारशालिषु । प्रागुक्तकल्पवृक्षेषु, ते रमन्ते यथासुखम् ॥ ९७ ॥ यदा चतुर्विधाऽऽतोद्यहृद्यनादरसार्थिनः । तदा ते त्रुटिताङ्गाख्यानुपयान्ति सुरद्रुमान् ॥ ९८ ॥ एवं च—वस्त्रमाल्यविभूषाद्यैर्यदा यैर्यैः प्रयोजनम् । उपसर्पन्ति ते लोकास्तदा तांस्तान् सुरद्रुमान् ॥ ९९ ॥ तदाऽस्ति न पुरग्रामदुर्गापणगृहादिकम् । ततस्ते स्युर्जना वृक्षवासिनः स्वैरचारिणः ॥ २०० ॥ वीवाहयजनप्रेतकार्यादीनामभावतः । न तेषां कार्यवैयग्र्यं, तेऽव्यग्रमनसः सदा ॥ १ ॥ तदा प्रमार्जनी नास्ति, न च कश्चित्प्रमार्जकः । स्वभावाद्भूः कचवरपत्रस्थाणुतृणोज्झिता ॥ २ ॥ भवन्ति दंशमशकयूकाचञ्चटमत्कुणाः । मक्षिकाद्याश्च न तदा, जन्तवो देहिदुःखदाः ॥ ३ ॥ ये सिंहचित्रकव्याघ्रभुजगाजगरादयः । कालस्वभावतस्तेऽपि, न रौद्रा नापि हिंसकाः ॥ ४ ॥ एवं मृगा वृकाः श्वानः, पक्षिमार्जारमूषकाः । मिथो वैरोज्झिताः सर्वे, भद्रकाः स्युरहिंसकाः ॥ ५ ॥ न खड्गादीनि शस्त्राणि, नागबाणादयोऽपि न । न तत्प्रयोगी संग्रामः, कोऽपि कस्यापि नाशकृत् ॥ ६ ॥ नागबाणाद्यश्चैवं—नागबाणस्तमोबाणो, वह्निबाणो मरुच्छरः । एवमन्येऽपि ते स्वस्वनामकार्यप्रसाधकाः ॥ ७ ॥ नेतयः सप्त नो मारिर्ज्वरा नैकान्तरादयः । तदा नाकालमरणं, न दुर्भिक्षं न विड्वरः

॥ ८ ॥ एवं च ते निरातङ्का, निर्बाधा निरुपद्रवाः । सुखानि भुञ्जते यावज्जीवं प्राचीनपुण्यतः ॥ ९ ॥ ते च षोढा पद्मगन्धा १, मृगगन्धा २ स्तथाऽममाः ३ । सहाश्च ४ तेजस्तलिनः ५, शनैश्चारिण ६ इत्यपि ॥ १० ॥ इमे जातिवाचकाः शब्दाः संज्ञाशब्देन रूढाः, यथा पूर्वमेकाकारापि मनुष्यजातिस्तृतीयारकप्रान्ते श्रीऋषभदेवेन उग्रभोगराजन्यक्षत्रियभेदैश्चतुर्धा कृता तथाऽत्राप्येवं षड्विधा सा स्वभावत एवास्तीति जीवाभिगमवृत्तौ जम्बूप्र० वृ० च, पञ्चमाङ्गषष्ठशतकसप्तमोद्देशके तु पद्मसमगन्धयः मृगमद्गन्धयः ममकाररहिताः तेजश्च तलं च-रूपं येषामस्तीति तेजस्तलिनः, सहिष्णवः-समर्थाः, शनैः-मन्दमुत्सुकत्वाभावाचरन्तीत्येवंशीला इत्यन्वर्थता व्याख्याताऽस्तीति ॥ आयुषः शेषषण्मास्यां, बद्धाग्रिमभवायुषः । ते युग्ममेकं स्त्रीपुंसरूपं प्रसुवते जनाः ॥ ११ ॥ अहोरात्रांस्तदेकोनपञ्चाशतममी जनाः । रक्षन्ति तावता तौ च, स्यातां संप्राप्तयौवनौ ॥ १२ ॥ एषामेकोन-पञ्चाशद्दिनावधि च पालने । केचिदेवं पूर्वशास्त्रे, व्यवस्थां कोविदा विदुः ॥ १३ ॥ तथाहि—सुप्तोत्तानशया लिहन्ति दिवसान् स्वाङ्गुष्ठमार्यास्ततः, कौ रिङ्खन्ति पदैस्ततः कलगिरो यान्ति स्खलद्भिस्ततः । स्थेयोभिश्च ततः कलागणभृतस्तारुण्यभोगोद्गताः, सप्ताहेन ततो भवन्ति सुदृगादानेऽपि योग्यास्ततः ॥ १४ ॥ अयं भावः—सप्ताहे प्रथमेऽङ्गुष्ठं, लिहन्त्युत्तानशायिनः । द्वितीये भुवि रिङ्खन्ति, व्यक्तवाचस्तृतीयके ॥ १५ ॥ पदैः स्खलद्भिर्गच्छन्ति, चतुर्थे पञ्चमे पुनः । स्थिरैः पदैस्ते गच्छन्ति, षष्ठे सर्वकलाविदः ॥ १६ ॥ सप्ताहे सप्तमे प्राप्तयौवनाः प्रभविष्णवः । स्युः स्त्रीभोगेऽपि केचिच्च, सम्यक्त्वग्रहणोचिताः ॥ १७ ॥ तथोक्तं जम्बू० प्र० वृ०

"केचिच्च सुदृगादानेऽपि-सम्यक्त्वग्रहणेऽपि योग्या भवन्ती"ति,, एवं चात्र सप्तसप्तकव्यतिक्रमे सम्यक्त्वयोग्यतोक्ता, प्रज्ञापनाविशेषपदवृत्तौ च उत्कृष्टस्थितिमनुष्यसूत्रे 'दो नाणा दो अन्नाणा' इति उत्कृष्टस्थितिका मनुष्यास्त्रिपल्योपमायुषस्तेषां तावद् अज्ञाने नियमेन, यदा पुनः षण्मासावशेषायुषो वैमानिकेषु बद्धायुषस्तदा सम्यक्त्वलाभाद् द्वे ज्ञाने लभ्येते, अवधिविभङ्गौ चासंख्येयवर्षायुषां न स्त" इति, "तत्रोत्सर्पिण्यामवसर्पिण्यां च प्रत्येकं षड्विधेऽपि कालविभागे सम्यक्त्वस्य श्रुतस्य च द्वयोरप्यनयोः प्रतिपत्तिः संभवतीति प्रतिपद्यमानकस्संभवति, स च प्रतिपद्यमानकस्सुषमदुष्षमादिषु देशन्यूनकोट्यायुश्शेष एव प्रतिपद्यते, नाधिकायुश्शेष" इत्यावश्यकमलयगिरिवृत्तौ, तदत्र मतत्रये तत्त्वं सर्वविद्वेद्यमिति ज्ञेयं, असंख्यायुस्तिर्यक्षु तु जन्मतोऽपि सम्यक्त्वं संभवति, तथोक्तं षष्ठकर्मग्रन्थवृत्तौ—"क्षायिकसम्यग्दृष्टिस्तिर्यक्षु न संख्येयवर्षायुष्केषु मध्ये समुत्पद्यते, किंत्वसंख्येयवर्षायुष्केषु" ॥ सप्तावस्थाकालमानमित्यादौ प्रथमारके । ततः कालक्रमात्किंचित्संभवत्यधिकाधिकम् ॥ १८ ॥ इदमर्थतो जम्बूप्रज्ञप्तिवृत्तौ ॥ ततस्ते पितरस्तेषां, युग्मिनां पूरितायुषः । कासजृम्भादिभिर्मृत्वोद्भवन्ति त्रिदशालये ॥ १९ ॥ एतद्भवायुषा तुल्यायुषो न्यूनायुषोऽथवा । ते देवाः स्युर्युग्मिभवायुष्कान्न त्वधिकायुषः ॥ २० ॥ तिर्यञ्चोऽपि तदा तादृग्गुणाः कालानुभावतः । समापितायुषो

१ आद्यं तावन्मतं न क्वचित् तथाभूते शास्त्रे, तृतीये च मते शास्त्रज्ञानपूर्वकस्य सम्यक्त्वस्याधिगमरूपस्याधिकार इति न विरोधः, योग्यतापेक्षं वाऽऽद्यं. २ सम्यक्त्वात् प्राग् येनायुर्बद्धं तस्यैवोत्पत्तेस्तिर्यक्षु तादृक्षु नात्र तदा नूतनोत्पादः सम्यक्त्वस्य.

यान्ति, युग्मिनस्त्रिदशालयम् ॥ २१ ॥ तिर्यक्षु युग्मिनश्च स्युः, संज्ञिपक्षिचतुष्पदाः । तेषामेव ह्यसंख्यायुष्कतया स्वर्गतिनिश्चयात् ॥ २२ ॥ तथोक्तं—"नरतिरि असंखजीवी सव्वे नियमेण जंति देवेसु ।" इति, अन्येषां तु न युग्मित्वं, नापि स्वर्गतिनिश्चयः । पूर्वकोटिप्रान्तमायुस्तेषामुत्कर्षतोऽपि यत् ॥ २३ ॥ "गब्भभुअजलयरोभयगब्भोरग पुव्वकोडि उक्कोसा ॥ तथा—संमुच्छिपणिंदिथलखयरोरगभुअग जिट्ठठिइ कमसो । वाससहस्सा चुलसी बिसत्तरि तिपन्न बायाला ॥ १ ॥" इति वचनात्, पूर्वकोट्यायुष्काश्च न युग्मिनः, संख्यातायुष्कत्वादिति संभावयामः, किंच—संख्येयायुःपञ्चेन्द्रियाणां नपुंसकत्वेनैव युगलित्वं दुःश्रद्धानं, नपुंसकत्वमप्येषां दुर्वारं 'गब्भनरतिरिआ संखाउआ तिवेआ' इति वचनात्, कालसप्ततिकायां तु—अवि सव्वजीवजुअला । निअसमहीणा उ सुरगई तह य । थोवकसाया नवरं सव्वारयथलयराउमिणं ॥ १ ॥ मणुयाउसम गयाई चउरंस हयाद्जाइ अट्ठंसा । गोमहिसुट्टखराइ पणंस साणाइ दसमंसा ॥ २ ॥ उरभुअग पुव्वकोडी पलियासंखंस खयर पढमारे ।" इत्युक्तं, तदत्र तत्त्वं बहुश्रुतगम्यं । मृतानां नास्ति संस्कारो, युग्मिनामग्न्यभावतः । ततस्तेषां शरीराणि, तदासन्नवनस्थिताः ॥२४॥ भारण्डाद्याः पक्षिणो द्राग्, जगत्स्वाभाव्यतस्तथा । नीडकाष्ठवदादाय, प्रक्षिपन्त्यर्णवादिषु ॥२५॥ तदुक्तं श्रीहैमऋषभचरित्रे—"पुरा हि मृतमिथुनशरीराणि महाखगाः । नीडकाष्ठमिवोत्पाट्य, सद्यश्चिक्षिपुरम्बुधौ ॥ २६ ॥" अत्राम्बुधेरुपलक्षणत्वाद्यथायोगं गङ्गाप्रभृतिनदीष्वपीति ज्ञेयं ॥ ननूत्कर्षादपि

१ द्वितीये सर्वयुग्मिजीवा इत्युक्तावपि नात्र उरोभुजगादिग्रहणं, तस्य युग्मित्वाभावात्, तत्कालीनेषु तिर्यक्षु तद्ग्रणनं च नैवास्ति सूत्रे



धनुःपृथक्त्ववाङ्गैः पतत्रिभिः । तेषां त्रिक्रोशमानानां, वहनं संभवेत्कथम्? ॥ २७ ॥ अत्रोच्यते—खगाङ्गमाने यत्प्रोक्तं, पृथक्त्वं धनुषां श्रुते । तत्रैकवचनं जातौ, यथा व्रीहिः सुभिक्षकृत् ॥ २८ ॥ ततो धनुःपृथक्त्ववानां, बहुत्वमपि संभवेत् । विहङ्गानां देहमानं, तादृक्कालाद्यपेक्षया ॥ २९ ॥ ततश्च—भूयोधनुःपृथक्त्वाङ्गैर्नरहस्त्याद्यपेक्षया । सुवहानि तदङ्गानि, खगैराद्यारकादिषु ॥ ३० ॥ एवं च सूत्रे एकवचननिर्देशेऽपि बहुवचनव्याख्यानं श्रीमलयगिरिपादैरपि श्रीबृहत्संग्रहणीवृत्तौ—"दसवाससहस्साइं समयाई जाव सागरं ऊणं । दिवसमुहुत्तपुहुत्ता आहारूसास सेसाणं ॥ १ ॥" इत्यस्या गाथाया व्याख्याने कृतमस्तीति सर्वं सुस्थमित्याद्यधिकमुपा० श्रीशान्तिचन्द्रीयजम्बू० प्र० वृ०, यद्वा—भारण्डपक्षिणां लोकख्यातेभोद्वहनादिवत् । तेषां खगानां तद्युग्मिदेहोद्वहनसंभवः ॥ ३१ ॥ एवं स्वरूपमुक्तं यत्प्रथमं प्रथमारके । क्रमात्ततो हीयमानमवसेयं प्रतिक्षणम् ॥ ३२ ॥ वर्णगन्धरसस्पर्शसंस्थानोच्चत्वपर्यवैः । तथा संहननायुष्कबलवीर्यादिपर्यवैः ॥ ३३ ॥ अनन्तगुणहान्याऽनुसमयं हीयमानकैः । संपूर्णाः स्युः सागराणां, चतस्रः कोटिकोटयः ॥ ३४ ॥ गुणशब्दश्चात्र भागपर्यायस्तेन हीयते । अनन्तभागहान्यैव, वर्णादिः पर्यवव्रजः ॥ ३५ ॥ इत्थमेवानुयोगद्वारवृत्तौ एकगुणकालकविचारे स्पष्टमाख्यातं ॥ अनन्तगुणानां हानिरेवं तत्पुरुषोऽत्र सः ।

१ यद्यपि पृथक्त्वशब्देन बहूनि पृथक्त्वानि गृह्यन्ते परं तानि गव्यूतादर्वागेव न परतः, संग्रहणीव्याख्यानेऽपि दिवसपृथक्त्वादर्वागेव मुहूर्त्तपृथक्त्वस्य ग्राह्यता, तरवतस्तु अनेकैस्तैरुत्पाटने युग्मिनां न काप्युत्पत्तिः, कीटिकाभिःसर्पाकर्षणवत्०

नन्त्वनन्तगुणा हानिरित्येवं कर्मधारयः ॥ ३६ ॥ अत्र स इति समासो वैयाकरणरूढेः पदैकदेशे पदसमुदायोपचाराद्वेति ॥ अनन्तगुणहानिभावना चैवं—आद्यारकाद्यसमये, वर्त्तते यो द्रुमादिषु । सर्वोत्कृष्टः शुक्लवर्णः, केवलिप्रज्ञयाऽस्य च ॥ ३७ ॥ छिद्यमानस्य भागाः स्युर्निर्विभागा अनन्तशः । एते सर्वजीवराशेः, स्युरनन्तगुणाधिकाः ॥ ३८ ॥ तेषां मध्याद्राशिरेकोऽनन्तभागात्मकस्त्रुटेत् । द्वितीये समये चैवं, तृतीयादिक्षणेष्वपि ॥ ३९ ॥ इत्येवमवसर्पिण्याः, सर्वान्त्यसमयावधि । तत्र चायं निकृष्टः स्यात्तादृक्कालानुभावतः ॥४०॥ [1]उत्सर्पिण्याद्यसमयेऽप्येवंरूपो भवत्ययम् । ततो द्वितीयसमये, यथाहानि विवर्द्धते ॥ ४१ ॥ अनन्तगुणवृद्ध्यैवं, वर्द्धमानः क्षणे क्षणे । उत्सर्पिण्यन्त्यसमये, सर्वोत्कृष्टः स जायते ॥ ४२ ॥ नन्वेवं शुक्लवर्णस्य, मूलोच्छेदः प्रसज्यते । प्रत्यक्षबाधितं तच्च, जात्यादौ शौक्ल्यदर्शनात् ॥ ४३ ॥ अत्रोच्यतेऽनन्तकस्यानन्तभेदाः स्मृतास्ततः । प्रक्षीयमाणपर्यायांशानामल्पमनन्तकम् ॥ ४४ ॥ मूलपर्यायांशराशेस्त्वनन्तकं महत्तमम् । ततोऽनुसमयेऽनन्तहान्याऽप्युच्छिद्यते न तत् ॥ ४५ ॥ यदि भव्येषु सिध्यत्सु, संसारेऽस्मिन् प्रतिक्षणम् । अनन्तेनापि कालेन, भव्योच्छेदो न जायते ॥ ४६ ॥ तदैषां सर्वजीवेभ्योऽनन्तघ्नानां कथं भवेत् ? । उत्कृष्टवर्णभागानामुच्छेदोऽसंख्यकालतः ॥ ४७ ॥ ननु भव्यास्तु संख्येया, एव सिद्ध्यन्त्यनुक्षणम् । एते त्वनन्ता हीयन्ते, तत्साम्यमनयोः कथम् ? ॥ ४८ ॥ सत्यं यद्यपि [2]संख्येया, भव्याः सिध्यन्त्यनुक्षणम् । तथापि तत्सिद्धिकालोऽ-

१ कालस्योत्सर्पिणीरूपत्वात् स्यादेव वृद्धिराद्येऽपि समये, परं द्वयोः साम्यायेदं० २ अन्तरस्याविवक्षया समयेनाष्टोत्तरशतसिद्धेश्च०



नन्तकालात्मको भवेत् ॥ ४९ ॥ हीयन्तेऽनुक्षणं वर्णांशास्तु यद्यप्यनन्तशः । तथापि कालोऽत्रैकावसर्पिण्यात्मक एव हि ॥ ५० ॥ तद्दार्ष्टान्तिकदृष्टान्तवैषम्यं चिन्त्यमत्र न । एवं पीतादिवर्णेषु, गन्धादिष्वपि भावना ॥ ५१ ॥ एवं च द्रव्याणामानन्त्यात्प्रतिद्रव्यमेकैकांशहानिरिति यत्केचिदनन्तगुणहानिं समर्थयन्ति तदपास्तं द्रष्टव्यं । ननूक्ताः क्षीयमाणा ये, देहोच्चत्वस्य पर्यवाः । एकद्व्यादिखप्रतरावगाहन्यूनतात्मकाः ॥ ५२ ॥ असंख्या एव ते यस्मात्त्रिकोशवपुषापि हि । वगाह्यन्ते खप्रतरा, असंख्या एव नाधिकाः ॥ ५३ ॥ अनन्तगुणहानिस्तत्कथमेतेषु संभवेत् ? । अत्र ब्रूमः समाधानं, यदि शुश्रूष्यते त्वया ॥ ५४ ॥ देहस्थानां खप्रतरावगाहकारिणामिह । पुद्गलानामनन्तानां, हानिर्ज्ञेयाऽत्र धीधनैः ॥ ५५ ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिवृत्तौ—“प्रथमारके प्रथमसमयोत्पन्नानामुत्कृष्टं शरीरोच्चत्वं भवति, ततो द्वितीयादिसमयोत्पन्नानां यावतामेकनभःप्रतरावगाहित्वलक्षणपर्यवाणां हानिस्तावत्पुद्गलानन्तकं हीयमानं द्रष्टव्यं, आधारहानावाधेयहानेरावश्यकत्वादिति, तेनोच्चत्वपर्यायाणामनन्तत्वं सिद्धं, नभःप्रतरावगाहस्य पुद्गलोपचयसाध्यत्वादिति” पर्याया आयुषोऽप्येकद्व्यादिक्षणोनतात्मकाः । असंख्येया एव तेऽपि, स्युस्त्रिपल्यायुषोऽपि हि ॥ ५६ ॥ किंत्वेकादिक्षणोनेषु, स्थितिस्थानेषु तेष्विह । प्रत्येकं तद्धेतुकर्मप्रदेशाः स्युरनन्तशः ॥ ५७ ॥ तेऽप्यायुःपर्यवा एव, हेतौ कार्योपचारतः । एवं भाव्यायुषोऽनन्तगुणहानिः प्रतिक्षणम् ॥ ५८ ॥ अत एव श्रीजम्बूद्वीपप्रज्ञप्तिसूत्रेऽभिहितं—‘अणंतेहिं उच्चत्तपज्जवेहिं

लोकप्रकाशे अणंतेहिं आउअपज्जवेहिं अणंतगुणपरिहाणीए परिहायमाणे २” इति ॥ एवं चाद्यारकस्यादौ, त्रिक्रोशप्रमितं द्वितीयारक-
कालोके वपुः । त्रिपल्यप्रमितं चायुर्युग्मिनां प्राग् यदीरितम् ॥ ५९ ॥ तद्धीयमानं क्रमेणाद्यारकान्ते तु युग्मिनाम् । वर्णनं
२९ सर्गे स्याद् द्विक्रोशोच्चमङ्गं द्विपल्यमानं च जीवितम् ॥ ६० ॥ १५

एवं दशस्वपि क्षेत्रेष्वरके प्रथमे गते । द्वैतीयीकोऽरकस्तेषु, सुषमाख्यः प्रवर्त्तते ॥ ६१ ॥ तस्मिन् कालेऽपि मनुजाः,
॥४२०॥ पूर्ववद्युग्मिनोऽथ ते । अनन्तगुणहीनाः स्युः, पूर्वेभ्यो गुणलक्षणैः ॥ ६२ ॥ पृथ्वीपुष्पफलाहारास्तेऽहोरात्रद्वया-
न्तरे । काङ्क्षन्ति पुनराहारं, बदरीफलमात्रकम् ॥ ६३ ॥ चतुष्षष्टिं दिनान्येते, कुर्वतेऽपत्यपालनम् । अवस्थाः
प्राग्वदत्रापि, भाव्याः सप्त यथाक्रमम् ॥ ६४ ॥ चतुष्षष्टिरहोरात्रा, ह्रियन्ते यदि सप्तभिः । एकैकस्या अव- २०
स्थायास्तदा कालो भवत्ययम् ॥ ६५ ॥ दिनानि नव घट्योऽष्टौ, चतुस्त्रिंशत्पलानि च । अक्षराणि सप्तदश,
किंचित्समधिकानि च ॥ ६६ ॥ यत्पूर्वेभ्योऽधिकोऽपत्यपालने काल ईरितः । तदुत्थानबलादीनामनन्तगुणहा-
नितः ॥ ६७ ॥ पूर्वकालापेक्षयाऽत्र, भूयसाऽनेहसा भवेत् । बालानां व्यक्तता भाव्यमेवमग्रेऽपि धीधनैः ॥ ६८ ॥
पूर्वोक्तषट्प्रकारास्तु, भवन्त्यत्र न मानवाः । तादृक्कालानुभावेन, वक्ष्यमाणा भवन्ति च ॥ ६९ ॥ एकाः १ प्रचुर-
जङ्घाश्च २, कुसुमाख्या ३ स्तदा भुवि । तथा सुशमना ४ एव, मनुष्याः स्युश्चतुर्विधाः ॥ ७० ॥ रूढाः शब्दा अमी २५
प्राग्वत्, जनानां जातिवाचकाः । अन्वर्थजिज्ञासायां तु, सोऽपि भाव्यः क्रमादिति ॥ ७१ ॥ एकाः श्रेष्ठाः ॥४२०॥
पुष्टजङ्घतया प्रचुरजङ्घकाः । कुसुमाः पुष्पमृदवः, सम्यक्शान्तियुजोऽन्तिमाः ॥ ७२ ॥ भूमेः स्वरूपं यत्प्रोक्तं, २७

वनवृक्षाद्यलङ्कृतम् । दशानां स्वर्द्रुमाणां च, प्रथमं प्रथमारके ॥ ७३ ॥ अविच्छिन्नं तदत्रापि, निःशेषमनुवर्त्तते ।
किंचानन्तगुणन्यूनं, वर्णगन्धादिपर्यवैः ॥ ७४ ॥ अनन्तगुणहानिः स्यादारभ्य प्रथमक्षणात् । वर्णायुरुच्चतादीनां,
प्राग्वदत्राप्यनुक्षणम् ॥ ७५ ॥ अत्रादौ युग्मिनां देहो, भवेत्क्रोशद्वयोच्छ्रितः । पल्योपमद्वयं चायुः, प्रहीयेते
च ते क्रमात् ॥ ७६ ॥ ततोऽन्ते क्रोशमानं स्याद्वपुः पल्यं च जीवितम् । एतावदेव प्रथमं, तृतीयेऽप्यरके भवेत्
॥ ७७ ॥ द्वितीयस्यारकस्यादौ, बिभ्रते भृशमुच्छ्रिताः । अष्टाविंशतियुक् पृष्ठकरंडकशतं जनाः ॥ ७८ ॥ देहह्रा- ५
सक्रमेणैषां, क्रमात् हानिर्भवेत्ततः । स्युर्यावन्त्यरकस्यादौ, पर्यन्ते स्यात्तदर्द्धकम् ॥ ७९ ॥

एवं द्वितीयेऽप्यरके, क्रमात्संपूर्णतां गते । अरस्तृतीयः सुषमदुष्षमाख्यः प्रवर्त्तते ॥ ८० ॥ अब्धिकोटाको-
टियुग्मं, तस्य मानं यदीरितम् । क्रियन्तेऽङ्कास्त्रयस्तस्य, प्रथमो मध्यमोऽन्तिमः ॥ ८१ ॥ एकैकस्य विभागस्य,
मानमेवं भवेदिह । षट्षष्टिकोटिलक्षाणि, तावत्कोटिसहस्रकाः ॥ ८२ ॥ षट् शतानि च कोटीनां, षट्षष्टिको-
टयोऽपि च । लक्षाः षट्षष्टिरब्धीनां, षट्षष्टिश्च सहस्रकाः ॥ ८३ ॥ षट्शती च सषट्षष्टिर्द्वौ तृतीयलवौ १०
तथा । एकस्य वार्द्धेरित्येवं, भाव्यं गणितकोविदैः ॥ ८४ ॥ ६६६६६६६६६६६६६६६६ $\frac{२}{३}$ इत्यङ्कस्थापना ॥ तृतीयभाग-
योरस्यारकस्याद्यद्वितीययोः । कल्पवृक्षादिकं सर्वं, पूर्वोक्तमनुवर्त्तते ॥ ८५ ॥ एकक्रोशोच्छ्रिता आदावेक-
पल्योपमायुषः । जनाश्चतुःषष्टिपृष्ठकरण्डकयुताङ्गकाः ॥ ८६ ॥ अहोरात्रानिहैकोनाशीतिं रक्षन्ति तेऽङ्गजान् ।
अवस्थाः प्राग्वदत्रापि, सप्त तन्मानमुच्यते ॥ ८७ ॥ युग्मं ॥ एकादश दिनाः सप्तदश घट्यः पलाष्टकम् । चतु- १४

त्रिंशदक्षराणि, किंचित्समधिकानि च ॥ ८८ ॥ आद्यसंहननाः प्राग्वदाद्यसंस्थानशालिनः । कासजृम्भादिभिर्मृत्वैतेऽपि यान्ति ध्रुवं दिवम् ॥ ८९ ॥ तृतीयेऽस्य त्रिभागे तु, समतिक्रामति क्रमात् । षोढा संहननानि स्युः, संस्थानान्यपि देहिनाम् ॥ ९० ॥ धनुःशतानि भूयांसि, प्रथमं तूच्छ्रिताः जनाः । असंख्याब्दसहस्रायुर्भृतः स्वर्गतिगामिनः ॥ ९१ ॥ कालक्रमेण पर्यन्ते, हीयमानोच्छ्रयायुषः । अल्पान्तराशनाः प्रेमरागद्वेषस्मयाधिकाः ॥ ९२ ॥ प्राक्तनापेक्षया भूरिकालपालितबालकाः । यथार्हं यान्ति गतिषु, चतसृष्वपि ते मृताः ॥ ९३ ॥ संख्येयाब्दसहस्राणि, जघन्यं चायुरङ्गिनाम् । उत्कृष्टमत्रासंख्याब्दसहस्रप्रमितं मतम् ॥ ९४ ॥ आयुर्देहोच्छ्रयाहारान्तरस्य प्राग् यथाऽभवत् । नियता हानिरत्रांशे, चैषा न नियता तथा ॥ ९५ ॥ यथात्रारकयोराद्यद्वितीययोः क्रमाद् ह्रसेत् । क्रोशो दिनं च पल्यं चोच्छ्रयाहारान्तरायुषाम् ॥ ९६ ॥ द्वयोस्त्रिभागयोस्तद्वद्धीयते तच्छनैः शनैः । तृतीये तु त्रिभागेऽस्मिन्न नैयत्येन हीयते ॥ ९७ ॥ इदमेवारकस्यास्य, त्र्यंशक्लृप्तौ प्रयोजनम् । पूर्वैः संभावितं भागश्चायमस्य पृथक् ततः ॥ ९८ ॥ कल्पवृक्षा अपि तदा, स्युः क्रमाद् दृढमुष्टयः । लोभार्त्ता इव मूर्खाणां, वार्त्तेव विरसा क्षितिः ॥ ९९ ॥ ततस्ते सततं वृक्षफलौषध्यादिभोजिनः । तत्संग्रहममत्वाभिनिविष्टा विवदन्त्यपि ॥ १०० ॥ पल्याष्टमांशे शेषे स्युरस्मिन् कुलकरा वराः । प्रकाशांशा इवासन्नोदयाद्यजिनभास्वतः ॥ १ ॥ रागद्वेषाभिवृद्ध्याऽत्र, नीतिमार्गातिपातिनाम् । शिक्षणाय कुलकरकृताः स्युर्दण्डनीतयः ॥ २ ॥ सैकोननवतिपक्षे, शेषेऽस्य त्रुटिताङ्गके । उदेत्यादिमतीर्थेशो, जगच्चक्षुरिवोत्तमः ॥ ३ ॥ लोकानामुपकाराय, व्यवहारं दिशत्यसौ । अज्ञानतिमिरच्छेदी, सदसन्मार्गदर्शकः ॥ ४ ॥ क्रमाच्च मध्यमरसत्वेन कालस्य भूरुहाम् । मिथःसंघर्षणादग्निः, प्रादुर्भवति भूतले ॥ ५ ॥ तदा मन्दोदराग्नीनां, नैरस्याद्भूरिभोजिनाम् । रुजत्यजीर्णं जठरमामौषध्यादिभोजनं ॥ ६ ॥ तेषामनुग्रहायार्हन्, मृदमत्राणि शिक्षयेत् । अन्नपाकजलाधानाद्युचितानि यथायथम् ॥ ७ ॥ शिक्षितं प्रथमं येषां, शिल्पमेतद्युगादिना । तेषां वंशः कुम्भकार, इति नाम्ना प्रवर्त्तते । ॥ ८ ॥ एवं वक्ष्यमाणशिल्पकर्मणामनुसारतः । ते ते वंशाः प्रवर्त्तेरंश्चित्रकृन्नापितादयः ॥ ९ ॥ अधुनापि वदन्त्येवं, कुम्भकाराद्यो जनाः । वयमस्मिन्नियुक्ताः स्मो, जगदीशेन कर्मणि ॥ १० ॥ लोहशिल्पं विना वेश्मवाहनास्त्राद्यसंभवः । ततः प्रभुर्लोहकारशिल्पं लोके प्रवर्त्तयेत् ॥ ११ ॥ विना चित्रं न शोभेत, वेश्मशय्यासनादिकम् । ततः प्रभुश्चित्रकारशिल्पं लोके प्रदर्शयेत् ॥ १२ ॥ कल्पद्रुदत्तवस्त्राणामभावेन गताम्बराः । जनाः स्युर्दुःखिनस्तन्तुवायशिल्पं ततो दिशेत् ॥ १३ ॥ असंस्कृतश्मश्रुनखाः, स्युर्भीष्माकृतयो जनाः । ततो नापितशिल्पं तत्कृपया दर्शयेत्प्रभुः ॥ १४ ॥ पञ्चैवं मूलशिल्पानि, शंसति त्रिजगत्प्रभुः । एकैकस्य ततो भेदाः, प्रवर्त्तन्ते च विंशतिः ॥ १५ ॥ एवं प्रवर्त्तते शिल्पशतं गुरूपदेशजम् । कर्माणि तु प्रवर्त्तन्ते, कृष्यादीनि स्वयं ततः ॥ १६ ॥ एवं च—द्वासप्ततिं कलाः पुंसां, चतुष्षष्टिं च योषिताम् । तथा शिल्पशतं लोकहितायार्हन् समादिशेत् ॥ १७ ॥ शस्त्रे शास्त्रे वणिज्यायां, जनानां भोजनादिषु । चातुर्यं दर्शयत्येष, पितेव तनुजन्मनाम् ॥ १८ ॥ तादृक्कालानुभावाच्च, क्रमेण त्वधिकाधिकम् । कलाशिल्पेषु लोकानां, चातुर्यं परिवर्द्धते ॥ १९ ॥ ततो

भगवतस्तस्य, पाणिग्रहमहोत्सवम् । कुर्याद्राज्याभिषेकं च, स्वयमागत्य वासवः ॥ २९ ॥ नवयोजनविस्तीर्णां, द्वादशयोजनायताम् । शक्रः सुवर्णप्राकारां, माणिक्यकपिशीर्षकाम् ॥ २१ ॥ धनधान्यसमाकीर्णोत्तुङ्गप्रासादबन्धुराम् । निर्माय राजधानीं द्राक्, जगन्नाथाय ढौकयेत् ॥ २२ ॥ युग्मं ॥ ततोऽसौ प्रथमो राजा, राजनीतिं समर्थयेत् । तथा वर्णविभागांश्च, चतुरश्चतुराशयः ॥ २३ ॥ गोतुरङ्गगजादीनां, ग्रहं दमनशिक्षणे । युद्धशस्त्रप्रयोगादीन्, नीतीः सामादिका अपि ॥ २४ ॥ युग्मं ॥ काश्चित्पुनः समुत्पन्ने, प्रथमे चक्रवर्त्तिनि । निधेर्माणवकाद्दण्डनीतयः स्युः परिस्फुटाः ॥ २५ ॥ भगिनीपरिभोगादीन्, व्यवहारांश्च युग्मिनाम् । निवर्त्तयन्सोऽन्यगोत्रजातोद्वाहादि दर्शयेत् ॥ २६ ॥ दशानामपि वर्षाणां, याम्यस्यार्द्धस्य मध्यमे । खण्डे प्रथमतीर्थेशो, व्यवस्थामिति दर्शयेत् ॥ २७ ॥ पञ्चस्वन्येषु खण्डेषु, तां जातिस्मरणादिभाक् । क्षेत्राधिष्ठाता देवो वा, लोकनीतिं प्रवर्त्तयेत् ॥ २८ ॥ काश्चित्तु कालमाहात्म्यात्प्रवर्त्तन्ते स्वयं ततः । संप्रत्यपि युवा वेत्ति, यथा बह्वप्यशिक्षितम् ॥ २९ ॥ तथाहुरस्मद्गुरुपादसमुचिते श्रीहीरप्रश्नोत्तरे श्रीजगद्गुरवः—“अत्रोत्तरभरतार्द्धेऽपि जातिस्मरणादिभाक् क्षेत्राधिष्ठायकदेवो वा कश्चित्तत्र नीतिप्रणेता, कालानुभावतः स्वतो वा कियन्नैपुण्यं जायते” इति ॥ जायतेऽस्मिन्नवसरे, प्रथमश्चक्रवर्त्त्यपि । न्यायमार्गं दृढीकुर्यात्, स च षट्खण्डसाधकः ॥ ३० ॥ एवं कृत्वा स भगवान्, व्यवस्थासुस्थितं जगत् । वितीर्य वार्षिकं दानं, चारित्रं प्रतिपद्यते ॥ ३१ ॥ स प्राप्य केवलज्ञानं, देवमानवपर्षदि । दिशति द्विविधं धर्मं, यतिश्राद्धजनोचितम् ॥ ३२ ॥ ततो गणधरान् गच्छांस्तथा सङ्घं चतुर्विधम् । संस्थाप्य द्वादशाङ्गीं चार्थाप्य तीर्थं प्रवर्त्तयेत् ॥ ३३ ॥ एवं कृत्वा मोक्षमार्गं, वहमानं स सिद्ध्यति । एकोननवतिपक्षावशेषेऽरे तृतीयके ॥ ३४ ॥ एकोननवतिपक्षैः, समासेऽरे तृतीयके । दुष्षमसुषमाभिख्योऽरकस्तुर्यः प्रवर्त्तते ॥ ३५ ॥ एतस्मिंश्चारके भूमिर्नानावृक्षाद्यलङ्कृता । स्यात्कृत्रिमतृणाढ्याऽपि, कृष्यादीनां प्रवृत्तितः ॥ ३६ ॥ कल्पवृक्षादिरहितं, स्वरूपं पूर्ववर्णितम् । अत्रापि स्यादनन्तघ्नहीनवर्णादिपर्ययम् ॥ ३७ ॥ अत्र चादौ मनुष्याः स्युर्धनुःपञ्चशतोच्छ्रिताः । पूर्वकोट्यन्तर्मुहूर्त्तोत्कृष्टाल्पिष्ठायुषस्तथा ॥ ३८ ॥ अग्निसंपक्वनानान्नघृतदुग्धादिभोजनाः । नित्यमाहारार्थिनः स्युरेकत्राप्यह्नि चासकृत् ॥ ३९ ॥ पुत्रपौत्रदुहित्रादिपरिवारा महर्द्धयः । प्रमदापत्यमित्रादिस्नेहाक्ता जितशत्रवः ॥ ४० ॥ स्तन्यपानादिभिर्भूयःकालपालितबालकाः । वर्षक्रमाद्व्यक्तवाक्यगतिचातुर्ययौवनाः ॥ ४१ ॥ राजानो मन्त्रिसामन्तश्रेष्ठिसेनापतीश्वराः । केचित्केचिच्चाल्पधनाः, प्रेष्याः कर्मकृतोऽपि च ॥ ४२ ॥ एवं प्राक्कृतकर्मानुसारेण प्राप्तवैभवाः । केचिन्मिथ्यादृशः केचिद्भद्रका मिश्रदृष्टयः ॥४३॥ केचित्प्रपन्नसम्यक्त्वा, देशचारित्रिणः परे । केचिच्चारित्रिणो यान्ति, पञ्चस्वपि गतिष्वमी ॥ ४४ ॥ मेघाश्चतुर्विधास्ते च, पुष्करावर्त्तसंज्ञकः । तथा प्रद्युम्नजीमूतौ, झिमिकाख्यस्तुरीयकः ॥४५॥ तत्राद्यस्यैकया वृष्ट्या, सुस्निग्धा रसभाविता । भवत्यब्दायुतं भूमिर्धान्याद्युत्पादनक्षमा ॥४६॥ द्वितीयस्यैकवृष्ट्या भूर्भाव्यतेऽब्दसहस्रकम् । वृष्टेः स्नेहस्तृतीयस्य, दशाब्दानि भवेद्भुवि ॥ ४७ ॥ निरन्तरं प्रवृत्ताभिस्तुरीयस्य च वृष्टिभिः । भूयसीभिर्वर्षमेकं, स्नेहस्तिष्ठति वा न वा ॥ ४८ ॥ तत्र तुर्यारकाम्भोदा, उत्तमाः कालवर्षिणः । स्युः स्निग्धाः सरसा भूमिस्ततो

भूरिफलप्रदा ॥ ४९ ॥ प्रायो विड्वरदुर्भिक्षे, नेतयो न न तस्कराः । रोगशोकवियोगाधिदुःखदौःस्थ्यादि चाल्प-
कम् ॥ ५० ॥ न्यायानुल्लंघिनो लोकाः, पुरुषायुषजीविनः । राजानः श्रावकाः प्रायो, धार्मिका न्यायतत्पराः
॥ ५१ ॥ तस्मिन् कालेऽनुक्रमेण, स्युस्त्रयोविंशतिर्जिनाः । एकादश चक्रभृतः, शार्ङ्गिणः सीरिणो नव ॥ ५२ ॥
एवं च—एकस्यामवसर्पिण्यां, स्युश्चतुर्विंशतिर्जिनाः । चक्रभृतो ( चक्रिणो ) द्वादश नव, केशवा नव सीरिणः
॥ ५३ ॥ चतुष्पञ्चाशदित्येवं, भवन्ति पुरुषोत्तमाः । स्युस्त्रिषष्टिरमी युक्ता, नवभिः प्रतिविष्णुभिः ॥ ५४ ॥
नवभिर्नारदैर्युक्तास्ते भवन्ति द्विसप्ततिः । तथैकादशरुद्राढ्याः, स्युस्त्र्यशीतिः समुचिताः ॥ ५५ ॥ चतुर्धेति वा २०
पञ्चधा वाऽथ षोढाऽथवा सप्तधा विश्रुताः स्युः पुमांसः । जिनाश्चक्रिणः केशवाः सीरिणस्तद्विपक्षास्तथा नारदाः
किंच रुद्राः ॥५६॥ ( भुजङ्ग० ) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः
श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वाद्भुते त्रिंशतैकोनेन प्रमितः समाप्तिमगमत्सर्गो २४
निसर्गोज्ज्वलः ॥ ५७ ॥

॥ इति श्रीलोकप्रकाशे एकोनत्रिंशत्तमः सर्गः समाप्तः ॥

## ॥ अथ त्रिंशत्तमः सर्गः प्रारभ्यते ॥

तत्र तीर्थङ्करास्तु स्युरितस्तृतीयजन्मनि । विंशत्या सेवितैः स्थानैस्तीर्थकृन्नामहेतुभिः ॥ १ ॥ तानि चैवं—अर्हत्-
१ सिद्ध २ प्रवचन ३ गुरवः ४ स्थविरा ५ स्तथा । बहुश्रुत ६ स्तपस्वी ७ च, वात्सल्यान्येषु सप्तसु ॥ २ ॥
अर्हंश्चतुर्धा नामादिः १, सिद्धाः कर्ममलोज्झिताः २ । श्रुतं प्रवचनं सङ्घस्तदाधारतयाऽथवा ३ ॥ ३ ॥ गुरुर्धर्म-
स्योपदेष्टा ४, स्थविरो वृद्ध उच्यते । वयश्चारित्रपर्यायश्रुतैरेष त्रिधा भवेत् ॥ ४ ॥ षष्टिं वर्षाण्यतिक्रान्तो, ५
वयःस्थविर उच्यते । पर्यायस्थविरो जातविंशत्यब्दव्रतस्थितिः ॥ ५ ॥ सूत्रार्थज्ञश्चतुर्थाङ्गं, यावद्योऽसौ श्रुतेन
च । स्थविरः स्याद्युत्सर्गापवादादीनि वेत्त्यसौ ५ ॥ ६ ॥ तत्कालापेक्षया भूरिश्रुतोऽत्र स्याद्बहुश्रुतः ६ । तपस्वी
चानशनादिविचित्रोग्रतपःस्थितः ७ ॥ ७ ॥ भक्तिरागो यथाभूतगुणप्रख्यापनं जने । यथोचितोपचारश्च, तेषां
वात्सल्यमीरितम् ॥ ८ ॥ सदा ज्ञानोपयोगश्च, भवति स्थानमष्टमम् ८ । सम्यक्त्वे ९ विनये १० चावश्यके-
११ ऽतीचारवर्जनम् ॥ ९ ॥ एतानि नवमदशमैकादशानि स्थानानीति शेषः ॥ शीलव्रतेषु निरतीचारत्वं द्वादशं १०
पदम् । व्रतान्यत्रोत्तरगुणाः, शीलं मूलगुणाः स्मृताः १२ ॥ १० ॥ त्रयोदशं क्षणलवाभिधानं स्थानमीरितम् ।
तच्च प्रतिक्षणलवं, सदा वैराग्यभावनम् १३ ॥ ११ ॥ तपश्चतुर्दशं स्थानं, नानाविधतपःक्रिया १४ । त्यागः
पञ्चदशं साध्वाद्यर्हान्नादिसमर्पणम् १५ ॥ १२ ॥ बालादिवैयावृत्यं स्यात्षोडशं स्थानकं च तत् । शुद्धोपध्यन्ना- १३

दिदानमङ्गसंवाहनादि च ॥ १३ ॥ तथोक्तं प्रश्नव्याकरणाङ्गे—"केरिसए पुण आराहए वयमिणं ?, जे से उवहिभत्तपाणसंगहदाणकुसले, अच्चंतबालदुब्बलवुड्ढखवगपवत्तिआयरियउवज्झायसाहम्मियतवस्सीकुलगणसंघचेइयट्ठे य णिज्जरट्ठी वेयावच्चं अणिस्सियं दसविहं बहुविहं करेइ." अत्र श्रीजिनप्रतिमाया अन्नोपधिदानाङ्गसंवाहनाद्यसंभवाच्चैत्यस्य किं वैयावृत्त्यमिति यत्कश्चिच्चैत्यापलापी गुरुकर्मा शङ्कते तत्र 'जक्खा हु वेयावडियं करेंति, तम्हा उ एए निहया कुमारा' इत्युत्तराध्ययनोक्तहरिकेशिमहर्षिवचनात् अवज्ञानिवारणादेरपि वैयावृत्त्यत्वमित्यादि युक्त्या समाधेयं १६ ॥ समाधिः स्यात्ससदृशं, स्थानं दुर्ध्यानवर्जनम् । चित्तस्वास्थ्योत्पादनं वा, गुर्वादेर्विनयादिभिः ॥ १४ ॥ अत्राद्यः पक्ष आवश्यकवृत्तौ, द्वितीयस्तु ज्ञाताधर्मकथाङ्गमल्लयध्ययनवृत्तौ १७ अष्टादशमपूर्वस्य, ज्ञानस्य ग्रहणादरः १८ । एकोनविंशतितमं, श्रुतस्य बहुमाननम् १९ ॥ १५ ॥ स्थानमन्त्यं प्रवचनप्रभावनमिहोदितम् । तत्कुर्यात् श्रुतवान् धर्मकथादिगुणवांस्तथा ॥ १६ ॥ तथाहुः—"सम्मद्दंसणजुत्तो सइ सामत्थे पभावगो होइ । सो पुण इत्थ विसिट्ठो निद्दिट्ठो अट्ठहा सुत्ते ॥ १७ ॥ पावयणी १ धम्मकही २ वाई ३ नेमित्तिओ ४ तवस्सी य ५ । विज्जासिद्धो ७ य कई ८ अट्ठेव पभावगा भणिया ॥ १ ॥" एषु द्वित्र्यादिभिः स्थानैः, सर्वैर्वा सेवितैर्भृशम् । जिननामार्जयेन्मर्त्यः, पुमान् स्त्री वा नपुंसकम् ॥ १८ ॥ तथाहुः श्रीभद्रबाहुस्वामिपादाः—"नियमा मणुयगईए इत्थी पुरिसेयरो व सुहलेसो । आसेवियबहुलेहिं वीसाए अन्नयरएहिं ॥ १९ ॥" नियमान्मनुष्यगतौ बध्यते, कस्तस्यां बध्नातीत्याशङ्क्याह–स्त्री पुरुष इतरो वेति–नपुंसकम्

इत्यावश्यकहारिभद्र्यां, तृतीयकर्मग्रन्थे तु बन्धस्वामित्वनिरूपणे प्रथमनरकत्रयनारको वैमानिकदेवो गर्भजमनुष्यश्च सम्यक्त्वादिगुणस्थानवर्त्तिनस्तीर्थकृन्नामकर्म बध्नन्तीत्युक्तमिति ज्ञेयं, अत्र चैवमुत्पत्तिः—बद्धतीर्थकरनामा मनुष्यो मृत्वा नरकदेवगत्योरुत्पन्नस्तत्रापि तीर्थकरनामकर्म बध्नाति, जिननामकर्मणः सततबन्धकालस्योत्कृष्टतस्त्रयस्त्रिंशत्सागरोपममानस्यानुत्तरसुरानाश्रित्य शतके प्रोक्तत्वात् इति कार्मग्रन्थिकैर्गतित्रये जिननामबन्ध उक्तः, प्रथमतस्तु मनुष्य एव तद्बन्धमारभत इत्यावश्यके 'नियमा मणुअगईए' इति निरूपितमिति. यद्वा नरकस्वर्गत्योः सामान्येन जिननाम्नो बन्धः स्यात्, निकाचितबन्धस्तु तस्य मनुजगतावेवेत्यावश्यके 'नियमा मणुए' इत्याद्युक्तं भावीति संभाव्यते, एतत्संग्रहश्चैवमावश्यकषष्ठाङ्गादिषु—अरिहंत १ सिद्ध २ पवयण ३ गुरु ४ थेर ५ बहुस्सुए ६ तवस्सीसु ७ । वच्छल्लया य तेसिं अभिक्खनाणोवओगे य ८ ॥ १ ॥ दंसण ९ विणए १० आवस्सए ११ य सीलव्वए १२ निरइयारो । खणलव १३ तव १४ चियाए १५ वेयावच्चे १६ समाही य १७ ॥ २ ॥ अप्पुव्वनाणगहणे १८ सुअभत्ती १९ पवयणे पभावणया २० । एएहिं ठाणेहिं तित्थयरत्तं लहइ जीवो ॥ ३ ॥" एतत्तपोविधिसंप्रदायश्चैवं—चेत्करोत्युपवस्त्रेण, विंशतिस्थानकं तपः । तदा विंशत्योपवासैरेका पङ्क्तिः समाप्यते ॥ २० ॥ निरन्तरं कृत्यशक्तौ, सान्तरां तां करोति चेत् । पङ्क्तिरेका पूरणीया, तत्षण्मासान्तरे ध्रुवम् ॥ २१ ॥

१ तइयभवोसक्कइत्ताणमिति वचनात् युक्तं निकाचनापेक्षं, तद्बन्धं नृगतावारभ्यान्यगत्योर्व्रजति इति यद्यपि युक्तमेव, तयोरपर्याप्तावस्थायामपि जिननामबन्धोदितेः, नैवं नरगताविति, परं न तदपेक्षा आवश्यके ।

विंशत्या पङ्क्तिभिश्चैतत्तपो भवति पूरितम् । उपवासानां चत्वारि, शतानीह भवन्ति तत् ॥ २२ ॥ एवं शक्त्यनुसारेण, प्राज्ञैः षष्ठाष्टमादिभिः । मासक्षपणपर्यन्तैस्तप एतद्विधीयते ॥ २३ ॥ पञ्चशक्रस्तवपाठोत्कृष्टा या चैत्यवन्दना । साऽवश्यं विधिना कार्या, तपस्यत्रोपवैणवम् ॥ २४ ॥ एकैकस्यामत्र पङ्क्तावेकैकेन दिनेन च । क्रमेणाराधयेद्भक्त्या, स्थानकानीति विंशतिम् ॥ २५ ॥ आद्ये नमोऽर्हद्भ्य इति, द्विसहस्रीं जपेद्दिने । अर्हद्भक्तिं विशेषेण, कुर्वीत स्तवनादिभिः ॥ २६ ॥ रागद्वेषाद्यो दोषा, वर्जनीया विशेषतः । तपोदिने जपेन्मौनी, वक्ष्यमाणपदानि च ॥ २७ ॥ साम्प्रतीतानि जापपदानि चैवं–अरिहंत १ सिद्ध २ पवयण ३ आयरिया ४ थेर ५ वायगा ६ साहू ७ । नाणं ८ दंसण ९ विणया १० चारित्तं ११ बंभवयधारी १२ ॥ १ ॥ किरियाणं च १३ नमो तह तवस्स १४ सिरिगोयमस्स १५ य जिणाणं १६ । चारित्तं १७ नाण १८ सुआ १९ तित्थं २० इअ वीस जावपया ॥२॥" अत्र सर्वत्रापि नमो अरिहंताणं नमो सिद्धाणं नमो पवयणस्स इत्यादिपाठक्रमो ज्ञेयः॥केचिच्चैकैकया पङ्क्त्या, स्थानमेकैकमेव हि । आराधयन्ति विंशत्या, पङ्क्तिभिस्तानि विंशतिम्॥२८॥उद्यापनादिविधिस्तु संप्रदायादवसेयः॥ तपोऽशक्तः पुनः स्थानमेकं द्वे सकलानि वा । यथाशक्ति स्फुरद्भक्तिः, सेवेत श्रेणिकादिवत्॥२९॥ एवं साधुः श्रावको वा, साध्वी वा श्राविकापि वा । अमून्याराधयन् स्थानान्याप्नोति जिनसंपदम् ॥ ३० ॥ तीर्थकृन्नामकर्मैतद्वेद्यते जिनपुङ्गवैः । विश्वोपकारैरग्लान्या, धर्मार्थकथनादिभिः॥३१॥तथाहुरावश्यकनिर्युक्तिकृतः—"तं च कहं वेइज्जइ? अगिलाए धम्मदेसणाईहिं । बज्झइ तं तु भयवओ तइयभवोसक्कइत्ताणं ॥ ३२ ॥" अथार्जितार्हत्पदाः स्युस्ते

वैमानिकनाकिनः । प्राग्निबद्धायुषश्चाधः, शैलावध्येव नारकाः ॥ ३३ ॥ तथोक्तं संग्रहण्यां–"सुरनेरइएहिं चिअ हवंति हरिअरिहचक्किबलदेवा । चउविहसुर चक्किबला वेमाणिअ हुंति हरिअरिहा ॥ १ ॥" वसुदेवचरिते तु नागकुमारेभ्योऽप्युद्धृतोऽनन्तरमैरवतक्षेत्रेऽस्यामवसर्पिण्यां जिन उक्त इति ज्ञेयं॥ तेजोऽभिवर्द्धते तेषां, देवानां च्यवनावधि । न प्रादुष्ष्यन्ति चिह्नानि, च्यवनस्यान्यदेववत् ॥ ३४ ॥ अन्येषामपि विज्ञेयमेतदन्त्यशरीरिणाम् । तेऽन्यव्यपेक्षया स्वल्पपीडाः स्युर्नारका अपि ॥ ३५ ॥ ततश्च्युत्वा कर्मभूमौ, सज्जातिकुलशालिनः । क्षत्रियस्योच्चगोत्रस्य, प्राज्यराज्यर्द्धिराजिनः ॥ ३६ ॥ उत्कृष्टभागधेयस्य, गुणाढ्यस्य महीपतेः । पत्न्याः कुक्षौ सुशीलाया,गर्भत्वेनोद्भवन्ति ते ॥३७॥ युग्मम् ॥ स्वर्गाद्वा नरकाद्वा ये,यस्मादायान्ति तीर्थपाः। ज्ञानत्रयं ते तत्रत्यं, बिभ्रते गर्भगा अपि ॥ ३८॥ जानन्त्येष्यदतीतं च, च्यवनं तत्क्षणे तु न । गर्भोत्पत्तिक्षणेऽप्येषां, स्यादेवं महिमोदयः ॥ ३९ ॥ अशिवोपद्रवादीनां, भवत्युपशमः क्षितौ । नारका अपि मोदन्ते, क्षणं प्राप्तसुखोदयाः ॥ ४० ॥ उदयाभिमुखस्तीर्थङ्करार्कः समभूदिति । ज्ञात्वाऽऽसनप्रकम्पेन, मुदिता नाकिनायकाः ॥ ४१ ॥ सिंहासनात्समुत्थाय, विनयात्त्यक्तपादुकाः । पदान्यागत्य सप्ताष्टौ, श्रीजिनाभिमुखं रयात् ॥ ४२ ॥ पञ्चाङ्गप्रणिपातेन, प्रणम्य जगदीश्वरान् । घटिताञ्जलयः कुर्युः, स्तुतिं शक्रस्तवेन ते ॥ ४३ ॥ अत्र—"सक्कस्स आसणं चलिअं, सिग्घं आगमणं भणइ यावत् तव पुत्तो पढमधम्मचक्कवट्टी भविस्सति, केइ भणंति–बत्तीसंपि इंदा आगंतूण वागरिंति," इत्यावश्यकहारिभद्र्यां श्रीऋषभगर्भावताराधिकारे,"सक्कस्स य आसणकंपो यावत् वाणारसीमागंतूण भयवतो

जणणिं अहिनंदइ” इति केशीगौतमीयोत्तराध्ययनप्राकृतवृत्तौ, “इदं हि घटते यस्माद्गर्भवासदिने मुदा। वन्दितोऽयं समागत्य, सहाऽऽवाभ्यां सुरेश्वरैः ॥ १ ॥” इति श्रीशान्तिचरित्रे श्रीशान्तिनाथमातापितृवचनमित्यादि दृश्यते, ततो विस्तरतः प्रथमकल्याणकोत्सवपद्धतिर्बहुश्रुतेभ्योऽवसेया ॥ तस्मिन्नवसरे वासभवने स्वर्गृहोपमे । स्वःशय्योपमशय्यायां, शयिता सा मृगेक्षणा ॥ ४४ ॥ समधातुः सुप्रसन्नचित्ता स्वप्नांश्चतुर्दश । निशीथे गर्भमायाति, जिने साक्षादिवेक्षते ॥ ४५ ॥ गजं तत्र चतुर्दन्तं, शुभ्रमैरावणोपमम् । शुभ्रं दान्तं दीप्रदन्तं १, वृषं पिण्डमिव त्विषाम् २ ॥ ४६ ॥ तीक्ष्णदंष्ट्रं लोलनेत्रं, हर्यक्षं शूरमुज्ज्वलम् ३ । देव्याः श्रियोऽभिषेकं च, क्रियमाणं दिशां गजैः ४ ॥ ४७ ॥ सौरभाकृष्टमधुपां, नानापुष्पमयीं स्रजम् ५ । पूर्णं चन्द्रं नवनीतमिवोशीतं सुधाम्बुधेः ६ ॥ ४८ ॥ सहस्रकिरणं लोकलोचनालोकनौषधम् ७ । शुभ्रमभ्रंलिहं कम्प्रं, हर्यक्षाङ्कं महाध्वजम् ८ ॥ ४९ ॥ कलशं जलसंपूर्णं, रौप्यं पद्मप्रतिष्ठितम् ९ । पूर्णं पद्मसरः पद्मप्रकरालङ्कृतोदकम् १० ॥ ५० ॥ वियच्चुम्बिचलल्लोलकल्लोलं क्षीरसागरम् ११ । दीप्यमानं विमानं च, दिव्यतूर्यत्रिकाश्रितम् १२ ॥ ५१ ॥ अनर्घ्यनानारत्नानां, निकरं मन्दरोच्छ्रितम् १३ । निर्धूममुज्ज्वलज्वालं, घृतसिक्तं महानलम् १४ ॥ ५२ ॥ श्रेयस्करान् महास्वप्नान्, सुखदान् कीर्त्तनादपि । निरीक्ष्यैतान् मृगाक्षी सा, भृशं प्रमुदिताऽभवत् ॥ ५३ ॥ निर्गत्य नरकाद्यस्याः, कुक्षावेति जगत्पतिः । स्वभावात्सा विमानस्य, स्थाने भवनमीक्षते ॥ ५४ ॥ सार्वभौमस्य मातापि, स्वप्नानेतान्निरीक्षते । किंतु किंचिन्न्यूनकान्तीनर्हन्मातुरपेक्षया ॥ ५५ ॥ तथा चोक्तं—“चतुर्दशाप्यमून् स्वप्नान्, या पश्येत् किंचिदस्फुटान् । सा प्रभो ! प्रमदा सूते, नन्दनं चक्रवर्त्तिनम् ॥ १ ॥ इयं पुनर्जया देवी, स्फुटानेतानलोकत । तन्नाथ ! त्रिजगन्नाथं, जिनं सा जनयिष्यति ॥ २ ॥” इति श्रीवासुपूज्यचरित्रे, यस्याः पुत्रो भवेत्सार्वभौमोऽर्हंश्चेह जन्मनि । सा द्विः स्वप्नानिमान् पश्येत्तथोक्तं पूर्वसूरिभिः ॥ ५६ ॥ “अचिरा नाम तत्पत्नी, शीललीलासमुज्ज्वला । सा द्विश्चतुर्दश स्वप्नान्निशाशेषे व्यलोकयत् ॥ ५७ ॥” इति वृद्धशत्रुञ्जयमाहात्म्ये ॥ एषामन्यतरान् स्वप्नान्, लोकयेद्वासुदेवसूः । चतुरो बलदेवाम्बाऽथैकं माण्डलिकप्रसूः ॥ ५८ ॥ प्रतिकेशवमाता तु, त्रीन् स्वप्नानवलोकयेत् । मातैकं पश्यति स्वप्नं, मुनेरपि महात्मनः ॥ ५९ ॥ तथा चोक्तं सप्ततिशतस्थानके—“जिणचक्कीण य जणणी नियंति चउदस गयाइ वरसुविणे । सग चउ तिण्णि इगाई हरिबलपडिहरिमंडलियमाया ॥ १ ॥” श्रीहीरप्रश्नोत्तरेऽप्युक्तं—“प्रतिवासुदेवे गर्भावतीर्णे तन्माता कियतः स्वप्नान् पश्यतीत्यत्र त्रीन् स्वप्नान् पश्यतीति ज्ञायते सप्ततिशतस्थानकशान्तिचरित्राद्यनुसारेणे”ति । श्रीहैमरामचरित्रे तु रावणप्रतिवासुदेवे गर्भावतीर्णे तन्मात्रा कैकस्या एक एव स्वप्नो दृष्ट इत्युक्तमस्ति, तथा च तद्ग्रन्थः—“अन्यदा कैकसी स्वप्ने, विशन्तं स्वमुखे निशि । कुम्भिकुम्भस्थलीभेदप्रसक्तं सिंहमैक्षत ॥ १ ॥” मुनिमातुरेकस्वप्ननिरीक्षणं च मेघकुमारादिमातृवत् ॥ सोपेत्य कान्तं विनयात्प्रबोध्यैतान्निवेदयेत् । सोऽपि स्वप्नफलं ब्रूते, विश्वोत्कृष्टाङ्गजो-

१ नियमाभावः एकस्य त्रयाणां वा स्वप्नानां दर्शने इति न विरोधः, अत एव पर्युषणाकल्पज्ञातादौ न प्रतिकेशवगर्भावतरणस्वप्नाधिकारः, मुनेर्गर्भावतारेऽपि एवमेव, न हि नियतं सर्वमुनिजननीनां तद्गर्भोद्भवे स्वप्नदर्शनं

द्भवम् ॥ ६० ॥ आकार्य स्वप्नशास्त्रज्ञान्, प्रातरन्तःसभं ततः । नृपः स्वप्नफलं पृच्छेत्तेऽपि शास्त्रानुसारतः ॥ ६१ ॥ वदन्त्येवं महाराज !, सुतो भावी भवत्कुले । तीर्थंकरो वा चक्री वा, महास्वप्नानुभावतः ॥ ६२ ॥ स्वप्नशास्त्रे यतः प्रोक्ताः, सर्वे स्वप्ना द्विसप्ततिः । तत्र त्रिंशन्महास्वप्नास्तेषु चैते चतुर्दश ॥ ६३ ॥ इत्याकर्ण्य प्रमुदिता, पुत्रजन्ममनोरथान् । दधाना विविधान् राज्ञी, सा कुर्याद्गर्भपोषणम् ॥ ६४॥ गर्भानुभावोत्पन्नानां, दोहदानां शुभात्मनाम् । सा सेवनात्प्रपूर्णेच्छा, सश्रीका शोभतेऽधिकम् ॥ ६५ ॥ अथानुकूले मरुति, प्रसर्पति सुखावहे । भूमौ निष्पन्नशस्यायां, फलपूर्णेषु च द्रुषु ॥ ६६ ॥ ग्रहेषु सर्वेषूच्चेषु, निमित्तेषु शुभेषु च । छत्रादिजन्मयोगेषु, शुभे लग्ननवांशके ॥ ६७ ॥ जने प्रमुदिते श्रेष्ठे, निमित्ते शकुनादिके । अर्द्धरात्रे प्रसूते सा, जिनं निधिमिव क्षितिः ॥ ६८ ॥ उच्चग्रहास्त्वेवं—अर्काद्युच्चान्यजवृषमृगकन्याकर्कमीनवणिजोंऽशैः । दिग्दहनाष्टाविंशतितिथीषुनक्षत्रविंशतिभिः ॥ ६९ ॥ छत्रादियोगास्त्वेवं—द्वितीये द्वादशे मूर्त्तौ, सप्तमे भवने ग्रहाः । छत्रयोगस्तदा ज्ञेयः, पुत्रो जातो नृपो भवेत् ॥ ७० ॥ धने व्यये रिपुस्थाने, मृत्युस्थाने यदा ग्रहः । योगः सिंहासनो नाम, देवानामपि दुर्लभः ॥ ७१ ॥ तृतीये पञ्चमे स्थाने, नवमैकादशे ग्रहाः । बलयोगस्तदाख्यातः, सर्वसौख्यकरस्सदा ॥ ७२ ॥ चन्द्रात्सप्तमगो जीवोऽथवा स्याच्चन्द्रसंयुतः । जीवयोगं तमित्याहुश्चिरायुः सुखवान् भवेत् ॥ ७३ ॥ केन्द्रस्थानेषु सर्वेषु, यदि सौम्यग्रहास्तदा । चतुःसागरयोगोऽयं, देवानामपि दुर्लभः ॥ ७४ ॥” इत्यादि । तदा दिशः प्रसीदन्ति, सर्वाः प्रमुदिता



इव । भवेन्नित्यान्धकारेषु, प्रकाशो नरकेष्वपि ॥ ७५ ॥ तथोक्तं स्थानाङ्गेऽर्थतः—चतुर्भिः स्थानकैरेभिर्लोकोद्योतः प्रसर्पति । अर्हज्जन्मज्ञानदीक्षास्तेषां मोक्षोत्सवेऽपि च ॥ १ ॥ तत्रायान्ति तदा द्राक् षट्पञ्चाशद्दिक्कुमारिकाः । कम्प्रासनाः प्रभोर्जन्म, विज्ञायावधिचक्षुषा ॥ ७६ ॥ तथाहि—भोगङ्करा १ भोगवती २, सुभोगा ३ भोगमालिनी ४ । तोयधारा ५ विचित्रा च ६, पुष्पमाला ७ त्वनिन्दिता ८ ॥ ७७ ॥ अष्टाधोलोकवासिन्यः, किलैका दिक्कुमारिकाः । वदन्त्यन्योऽन्यमाकार्य, जातो भो जगदीश्वरः ॥ ७८ ॥ जीतं नो दिक्कुमारीणामित्यधोलोकवेश्मनाम् । त्रैकालिकीनां यज्जन्मोत्सवः कार्यो जिनेशितुः ॥ ७९ ॥ यामस्ततो वयमपि, कृत्वा श्रीजगदीशितुः । सूतिकर्मादिकं सेवां, कुर्महे सफलं जनुः ॥ ८० ॥ निश्चित्यान्योऽन्यमित्येताः, प्रत्येकं स्वाभियोगिकान् । आज्ञापयन्ति निर्मातुं, विमानं गमनोत्सुकाः ॥ ८१ ॥ तेऽपि योजनविस्तीर्णं, रत्नस्तम्भशताञ्चितम् । विचित्रचित्रं निर्माय, ढौकयन्ति तदद्भुतम् ॥ ८२ ॥ सामानिकानां देवानां, ताश्चतुर्भिः सहस्रकैः । महत्तराचतुष्केण, प्रत्येकं समुपासिताः ॥ ८३ ॥ अनीकैः सप्तभिः सेनाधिपैर्देवैश्च सप्तभिः । सहस्रैश्च षोडशभिर्देवानामात्मरक्षिणाम् ॥ ८४ ॥ देवदेवीसमुदायैरन्यैरप्यमितैर्वृताः । प्रपन्नदिव्यवादित्रगीतनाट्या महर्द्धिकाः ॥ ८५ ॥ तद्विमानं समारुह्य, गत्या सत्वरया रयात् । आगत्यार्हज्जन्मवेश्मन्युत्तरन्ति विमानतः ॥ ८६ ॥ तिस्रः प्रदक्षिणाः कृत्वा, जिनं च जिनमातरम् । स्तुवन्ति मधुरैर्वाक्यैर्विनयावनता इति ॥ ८७ ॥ नमोऽस्तु ते कुक्षिरत्नधारिके ! विश्वदीपिके !। लोकनाथस्य जननि !, स्वयंबुद्धस्य भास्वतः

॥ ८८ ॥ अधोलोकनिवासिन्यो, वयं स्मो दिक्कुमारिकाः । अर्हज्जन्मोत्सवं कुर्मो, भेतव्यं न त्वया ततः ॥८९॥ इत्युदीर्य समुद्घातं, कृत्वा वैक्रियमञ्जसा । संवर्त्तकं विकुर्वन्ति, वायुं भूमिविशोधकम् ॥ ९० ॥ चतुर्दिशं ततो जन्मगेहाद्योजनमात्रकम् । क्षेत्रं तेन प्रसरता, मारुतेन सुगन्धिना ॥ ९१ ॥ रजःकाष्ठतृणादीनां, दुष्टानां दूरमुज्झनात् । क्रियते निर्मलं राज्ञो, भृत्येनेव गृहाङ्गणं ॥ ९२ ॥ युग्मं ॥ प्रशमय्याथ तं वायुं, समागत्य जिनान्तिके । कृतस्वकार्या गायन्त्यस्तिष्ठन्ति मधुरस्वरम् ॥ ९३ ॥ अन्यासां दिक्कुमारीणामप्यागमनपद्धतिः । इयमेव विशेषस्तु, कर्त्तव्यः सोऽत्र वक्ष्यते ॥ ९४ ॥ मेघङ्करा १ मेघवती २, सुमेघा ३ मेघमालिनी ४ । सुवत्सा ५ वत्समित्रा च ६, वारिषेणा ७ बलाहका ८ ॥ ९५ ॥ अष्टोर्ध्वलोकवासिन्य, इत्येता दिक्कुमारिकाः । विकृत्य गगने मेघान्, सुगन्धिजलवर्षणैः ॥ ९६ ॥ पूर्वं प्रमार्जितं क्षेत्रं, भृत्या इव नृपाङ्गणम् । अपङ्किलं रजोमुक्तं, कुर्युः सुरभिशीतलम् ॥ ९७ ॥ युग्मं ॥ ततो विसृज्य तान् मेघान्, पुष्पमेघान् विकृत्य च । तद्योजनमितं क्षेत्रं, शक्रस्येव सभाङ्गणम् ॥ ९८ ॥ पञ्चवर्णप्रसूनानां, प्रकरेण सुगन्धिना । जानुमात्रोच्चेन वृन्तस्थायिना परिमण्डितम् ॥ ९९ ॥ कृष्णागुरुतुरुष्कादिसुगन्धिद्रव्यजन्मना । धूपेन धूपितं कुर्युः, क्रीडार्हं द्युसदामपि ॥ १०० ॥ त्रिभिर्विशेषकं ॥ नन्दोत्तरा १ तथा नन्दा २, आनन्दा ३ नन्दिवर्द्धना ४ । विजया ५ वैजयन्ती ६ च, जयन्ती ७ चापराजिता ८ ॥ १ ॥ पूर्वरुचकवास्तव्या, इत्येता दिक्कुमारिकाः । एत्य नत्वा जिनं साम्बं, गायन्त्यादर्शपाणयः ॥ २ ॥ समाहारा १ सुप्रदत्ता २, सुप्रबुद्धा ३ यशोधरा ४ । लक्ष्मीवती ५ शेषवती ६,



चित्रगुप्ता ७ वसुन्धरा ८ ॥ ३ ॥ याम्यदिग्रुचकादेता, एत्याष्टौ दिक्कुमारिकाः । गायन्ति पूर्णकलशकरा दक्षिणतः प्रभोः ॥ ४ ॥ इलादेवी १ सुरादेवी २, पृथ्वी ३ पद्मावतीति ४ च । एकनासा ५ नवमिका ६, भद्रा ७ शीतेति ८ नामतः ॥ ५ ॥ पाश्चात्यरुचकादेताः, समेता दिक्कुमारिकाः । गायन्त्यात्ततालवृन्ताः, प्रभोः पश्चिमतः स्थिताः ॥ ६ ॥ अलम्बुसा १ मिश्रकेशी २, पुण्डरीका च ३ वारुणी ४ । हासा ५ सर्वप्रभा ६ श्री ७ ह्रीं ८ रित्यष्टौ दिक्कुमारिकाः ॥ ७ ॥ उदीच्यरुचकादेत्य, प्रभोरुत्तरतः स्थिताः । वीजयन्त्यश्चामराणि, मुदा गायंति तद्गुणान् ॥ ८ ॥ चित्रा १ च चित्रकनका २, शतेरा ३ च ततः परा । सौदामिनी ४ चतस्रोऽमूर्विदिग्रुचकमन्दिराः ॥ ९ ॥ दिक्कुमार्योऽभ्येत्य नत्वा, विदिक्षु चतसृष्वपि । सुष्ठु तिष्ठन्ति गायन्त्यो, दीपिकाव्यग्रपाणयः ॥ १० ॥ रूपा १ रूपासिका २ चापि, सुरूपा ३ रूपकावती ४ । एता मध्यमरुचकवासिन्यो दिक्कुमारिकाः ॥ ११ ॥ वर्द्धयित्वा प्रभोर्नालं, चतुरङ्गुलवर्जितम् । भूमौ निधाय सद्रत्नैस्तत्खातं पूरयन्ति च ॥ १२ ॥ पीठं बद्ध्वा तदुपरि, दूर्वाङ्कुरान् वपन्ति च । अर्हदङ्गप्रतीकस्य, मा भूदाशातनेति ताः ॥ १३ ॥ दिक्त्रये पश्चिमावर्जे, कुर्वन्ति कदलीगृहान् । तेष्वेकैकं चतुःशालं, वेश्म सिंहासनान्वितम् ॥ १४ ॥ ततो गृहीत्वा तास्तीर्थकरं स्वकरसंपुटे । दत्तालम्बां जिनाम्बां च, पुरस्कृत्येश्वरीमिव ॥ १५ ॥ स्वामिनीत इत इति, नीत्वा दक्षिणदिग्गृहे । सिंहासने चोपवेश्य, मृदुविज्ञप्तिपूर्वकम् ॥ १६ ॥ शतपाकादिभिस्तैलैरभ्यञ्जन्ति सुगन्धिभिः । उद्वर्त्तयन्ति सुरभिद्रव्योद्वर्त्तनकैस्ततः ॥ १७ ॥ त्रिभिर्विशेषकं ॥ ततः प्राग्वत्समानीय, पौरस्त्यकदलीगृहे ।

सिंहासने स्थापयन्ति, सप्रभुं प्रभुमातरम् ॥ १८ ॥ गन्धोदकैस्तथा पुष्पोदकैः शुद्धोदकैरपि । मज्जयित्वा प्रकुर्वन्ति, सर्वालङ्कारभूषिताम् ॥ १९ ॥ समानीय ततः प्राग्वदुदीच्यकदलीगृहे । अध्यासयन्ति तां सिंहासनेऽङ्कन्यस्तनन्दनाम् ॥ २० ॥ गोशीर्षचन्दनैधांस्यानाययन्त्याभियोगिकैः । शरकारणिमाथेनोत्पादयन्त्यनलं नवम् ॥ २१ ॥ संधुक्ष्योद्दीपयन्त्यग्निं, शकलैश्चान्दनैः कृशैः । चन्दनानि ततो हुत्वा, रक्षां कुर्वन्ति पावनाम् ॥ २२ ॥ प्रभोश्च प्रभुमातुश्च, रक्षापोट्टलिकां तथा । बध्नन्ति ता दुष्टशाकिन्यादिदृग्दोषघातिनीम् ॥ २३ ॥ आस्फाल्य रत्नरचनाचित्रौ वृत्ताश्मगोलकौ । भूयाः शैलायुरित्याशीर्गिरं संगिरते प्रभोः ॥ २४ ॥ प्रभुं करतले धृत्वा, गृहीत्वाऽम्बां च बाहयोः । जन्मवेश्मनि शय्यायां, नीत्वा गायन्ति भक्तितः ॥ २५ ॥ एवं च दिक्कुमारीभिः, कृते जन्मोत्सवे प्रभोः । सिंहासनं सुरेन्द्रस्य, कम्पते युधि भीरुवत् ॥ २६ ॥ सोऽप्यर्हज्जन्म विज्ञाय, प्रयुक्तावधिचक्षुषा । उत्थाय विनयं प्राग्वत्, कुर्याच्छक्रस्तवावधि ॥ २७ ॥ ततः पूर्वामुखः शक्रः, शक्रसिंहासने स्थितः । चतुरश्चिन्तयत्येवं, जातोऽयं जगदीश्वरः ॥ २८ ॥ तज्जीतमेतदस्माकं, त्रैकालिकमरुत्वताम् । कार्यो यदर्हतां स्फीतो, जन्मकल्याणकोत्सवः ॥ २९ ॥ इति निश्चित्य पादात्यनायकं नैगमेषिणम् । आकार्य ज्ञापयत्येवं, स्वःपतिर्विनयानतम् ॥ ३० ॥ स्वर्गेऽस्मिन् सर्वदेवानां, घण्टावादनपूर्वकम् । प्रस्थानं ज्ञापयास्माकं, जिनजन्मोत्सवाय भोः ॥ ३१ ॥ शिरस्यारोप्य तामाज्ञां, स सुधर्मसभागताम् । घण्टां सुघोषां त्रिर्धीरो, वादयत्यन्विताभिधाम् ॥ ३२ ॥ एतस्यां वादितायां द्राग्, घण्टाः सर्वविमानगाः । युगपन्मुखरायन्ते, तादृग्दिव्या-

नुभावतः ॥ ३३ ॥ शब्दाद्वैतमयः सर्वः, स्वर्गः स्यान्नाकिनोऽपि च । त्यक्तान्यकृत्याः शक्राज्ञां, शुश्रूषन्त्यखिला अपि ॥ ३४ ॥ ततः शान्ते ध्वनौ तासामयमुद्घोषयत्यदः । देवाः शृण्वन्तु शक्राज्ञामत्रामुत्रहितप्रदाम् ॥ ३५ ॥ जिनजन्मोत्सवायेन्द्रो, मर्त्यलोके प्रतिष्ठते । ततस्तत्र भवन्तोऽपि, सज्जीभवत सत्वरम् ॥ ३६ ॥ मोदन्ते च तदाकर्ण्य, जिनभक्त्युत्सुकाः सुराः । इष्टं वैद्योपदिष्टं च, न स्यात्कस्य मनःप्रियम् ? ॥ ३७ ॥ ततो यानविमानाधिकारिणं पालकामरम् । सज्जीकर्त्तुं विमानं द्रागाज्ञापयति वासवः ॥ ३८ ॥ जम्बूद्वीपसमायामव्यासं पञ्चशतोच्छ्रितम् । पालकाख्यं विमानं स्राक्, सोऽपि निर्माय ढौकयेत् ॥ ३९ ॥ तत्रैकैकं त्रिसोपानं, प्रागुदग्याम्यदिक्त्रये । रत्नस्तम्भशतो मध्ये, स्यात्प्रेक्षागृहमण्डपः ॥ ४० ॥ तस्मिन् रत्नपीठिकायां, मध्ये सिंहासनं हरेः । सन्मौक्तिकेन विजयदूष्येणालङ्कृतं भवेत् ॥ ४१ ॥ वायुश्रीदेशदिक्षु स्युस्तस्माद्भद्रासनानि च । सामानिकानां चतुरशीतिः सहस्रका इह ॥ ४२ ॥ पूर्वस्यां मुख्यपत्नीनामष्टौ भद्रासनानि च । आग्नेय्यां द्वादश सहस्राण्यभ्यन्तरपर्षदाम् ॥ ४३ ॥ चतुर्दश सहस्राणि, याम्यां मध्यमपर्षदाम् । नैर्ऋत्यां षोडश सहस्राणि स्युर्बाह्यपर्षदाम् ॥ ४४ ॥ वारुण्यां सप्त सप्तानां, सैन्येशानां सुधाभुजाम् । द्वितीये च परिक्षेपे, आत्मरक्षकनाकिनाम् ॥ ४५ ॥ स्युः सहस्राणि चतुरशीतिः प्रत्याशमासनाः । सर्वे त्वेषां सषट्त्रिंशत्सहस्रं लक्षकत्रयम् ॥ ४६ ॥ एषामात्मरक्षकाणामिति ॥ ततस्तुष्टमनाः शक्रो, रूपमुत्तरवैक्रियम् । अर्हत्सेवार्हमुत्कृष्टं, कृत्वा सर्वाङ्गभूषितम् ॥ ४७ ॥ गन्धर्वनाट्यानीकाभ्यां, गीतसंगीतमोदितः । शच्यादिभिः प्रेयसीभिरष्टाभिः

परिषेवितः ॥ ४८ ॥ प्रदक्षिणीकृत्य पूर्वदिक्त्रिसोपानकाध्वना । प्रविश्य पूर्वाभिमुखो, निषीदति महासने ॥ ४९ ॥ त्रिभिर्विशेषकं ॥ उदीच्येन त्रिसोपानाध्वना सामानिकाः सुराः । प्रविश्यान्ये च याम्येन, यथास्थानकमासते ॥ ५० ॥ जङ्गमस्वर्गवत्तस्मिन्, विमाने प्रस्थिते पुरः । चलन्ति मङ्गलान्यष्टौ, संपूर्णः कलशस्ततः ॥ ५१ ॥ छत्रं पताकाश्चमरा, महेन्द्राख्यो ध्वजस्ततः । सहस्रयोजनोत्तुङ्गो, लघुध्वजसहस्रयुक् ॥ ५२ ॥ ततः सेनाः पञ्च सेनापतयोऽथाभियोगिकाः । यथाशक्तिप्रकटितवपुर्वस्त्रविभूषणाः ॥ ५३ ॥ पश्चात्केचित्पुरः केचित्केचिच्चोभयपार्श्वतः । परिवृत्य विमानं तत्, प्रतिष्ठन्ते सुधाभुजः ॥ ५४ ॥ देवेन्द्रशासनात्केचित्केचिन्मित्रानुवृत्तितः । पत्नीप्रेरणया केचित्, केचिच्छ्रीजिनभक्तितः ॥५५॥ केचिद्धर्मधिया केचिज्जीतबुद्ध्या सुराः परे । कुतूहलार्थिनो नानाभूषणाम्बरवाहनाः ॥ ५६ ॥ प्राच्यपुण्यानुसारेण, संप्राप्तैश्वर्यशालिनः । देवेन्द्रमनुगच्छन्ति, सर्वे सौधर्मवासिनः ॥ ५७ ॥ त्रिभिर्विशेषकं ॥ सौधर्मस्वर्गमध्येन, समृद्ध्यैवं सुरेश्वरः । वीक्षितो देवदेवीभिराश्चर्यस्मेरदृष्टिभिः ॥ ५८ ॥ पञ्चानीकपरिक्षिप्तमहेन्द्रध्वजभाक् पुरः । उद्दण्डशुण्डद्विपवद्, द्विषां चेतांसि कम्पयन् ॥ ५९ ॥ दिव्यदुन्दुभिनिःस्वानध्वानव्याप्तनभोऽन्तरः । उत्तराहेण निर्याणमार्गेणोत्तरति द्रुतम् ॥ ६० ॥ त्रिभिर्विशेषकं ॥ यथा वरयिता लोके, राजमार्गेण गच्छति । स्वसमृद्धिं दर्शयितुं, जनानां स्वं प्रशंसताम् ॥ ६१ ॥ तथेन्द्रोऽपि पथाऽनेन, जिनजन्मोत्सवादिषु । निर्याति भूयसां बोधिलब्धये तत्प्रशंसिनाम् ॥ ६२ ॥

१ घटनामात्रमेतत्, निर्याणमार्गेण देवानां तिर्यग्लोकागमाय देवलोकात् निर्गमात्, हरिणैगमैषिणो गर्भपरावर्त्तनेऽपि तेनैव पथा निर्गमात्।

अथासङ्ख्यद्वीपवार्द्धिमध्येन द्रुतमापतन् । नन्दीश्वरे रतिकरपर्वतेऽग्निविदिग्गते ॥ ६३ ॥ कृत्वा विमानसंक्षेपं, जिनजन्मपवित्रिते । नगरे शीघ्रमागत्य, मन्दिरं जिनजन्मनः ॥ ६४ ॥ द्राक् त्रिप्रदक्षिणीकृत्य, विमानेन सुरेश्वरः । विमुञ्चति तदैशान्यां, चतुर्भिरङ्गुलैर्भुवः ॥ ६५ ॥ विशेत्ततो गृहं स्वाम्यालोकने घटिताञ्जलिः । पुलकैर्जलदासिक्तकदम्बकुसुमायितः ॥ ६६ ॥ जिनं समातृकं नत्वा, दत्त्वा च त्रिः प्रदक्षिणाम् । सुरेश्वरो वदत्येवं, जगत्पूज्ये ! नमोऽस्तु ते ॥ ६७ ॥ धन्याऽसि कृतपुण्याऽसि, सफलं तव जीवितम् । जगच्चिन्तामणिर्यत्ते, कुक्षौ जातो जिनेश्वरः ॥ ६८ ॥ विभासि मातस्त्वं विश्वचक्षुषा शिशुनाऽमुना । लोकम्पृणेन शुचिना, प्रातःसन्ध्येव भानुना ॥ ६९ ॥ जनयन्त्या जगन्नाथं, मुक्तिमार्गोपदेशकम् । सर्वेषामप्युपकृतं, जनानां जननि ! त्वया ॥ ७० ॥ विमोहतिमिरोद्रेककलुषविज्ञानचक्षुषाम् । प्रददत्याऽमुमगदं, किं नो नोपकृतं त्वया ? ॥ ७१ ॥ अहं शक्रोऽस्मि देवेन्द्रः, सौधर्मस्वर्गनायकः । त्वन्नन्दनगुणाकृष्ट, इहायातोऽस्मि पावने ! ॥ ७२ ॥ मातस्ततोऽनुजानीहि, न भेतव्यं मनागपि । त्वत्सुतस्य करिष्यामो, जन्मकल्याणकोत्सवम् ॥ ७३ ॥ इत्युदित्वा प्रभोर्मातुर्दत्तेऽवस्वापिनीं हरिः । पार्श्वे च स्थापयत्यस्याः, कृत्वा प्रतिकृतिं प्रभोः ॥ ७४ ॥ केनचिद्दुष्टदेवेन, हतनिद्रेह मा स्म भूत् । इयं पुत्रमनालोक्य, पिञ्जलेत्ययमुद्यमः ॥ ७५ ॥ यद्वा परिजनस्तस्या, जातमात्रं तदङ्गजम् । अनालोक्य विषादं मा, यासीदित्ययमुद्यमः ॥ ७६ ॥ ततश्चार्हन्तमादत्ते, पञ्चमूर्त्तिः सुरेश्वरः । मूर्त्यैकया धौतपूतधूपिते करसंपुटे ॥ ७७ ॥ एकया छत्रमाधत्ते, धत्ते द्वाभ्यां च चामरौ । पञ्चम्या वज्रमादाय, पुरो

गच्छति भृत्यवत् ॥ ७८ ॥ तत्पालकविमानं च, रिक्तमेवानुगच्छति । स्वामिनः पादचारित्वान्नृपानुगगजादिवत् ॥ ७९ ॥ तुष्टैः परिवृतो देवैः, सानन्दः स पुरन्दरः । ययौ मन्दरमौलिस्थे, कानने पाण्डुकाह्वये ॥ ८० ॥ एवं च—ज्ञातार्हज्जन्मनेशानस्वामिना शूलपाणिना । आदिष्टः पूर्ववत्पत्तिप्रष्ठो लघुपराक्रमः ॥ ८१ ॥ सोऽपि घण्टां महाघोषां, वादयत्यन्विताह्वयाम् । उद्घोषणां च कुरुते, जिनजन्मोत्सवोचिताम् ॥ ८२॥ विमानं पुष्पकं नाम, पुष्पकामरसज्जितम् । आरुह्योत्तरलोकार्द्धपतिर्गच्छति शक्रवत् ॥ ८३ ॥ दाक्षिणात्येन निर्याणमार्गेणोत्तीर्य सत्वरम् । नन्दीश्वरे रतिकरगिरावीशानदिग्गते ॥ ८४ ॥ संक्षिप्य पुष्पकं स्वर्णमहीधरमुपागतः । शक्रवत्प्रणिपत्यानुशीलति त्रिजगद्गुरुम् ॥ ८५ ॥ एवं शेषा अपि समे, देवराजा जिनेश्वरम् । सभक्ति मन्दरमुपागम्य सम्यगुपासते ॥ ८६ ॥ दश वैमानिका इन्द्रा, भवनेशाश्च विंशतिः । द्वात्रिंशद्व्यन्तरेन्द्रा द्वौ, सूर्याचन्द्रमसाविति ॥ ८७ ॥ सङ्ख्यातीताः समायान्ति, यद्यप्यर्कहिमांशवः । विवक्ष्येते तथापि द्वावत्र जातिव्यपेक्षया ॥८८॥ तथोक्तं श्रीमुनिदेवसूरिकृते श्रीशान्तिचरित्रे—"ज्योतिष्कनायकौ पुष्पदन्तौ संख्यातिगाविति । हेमाद्रिमाद्रियन्ते स्म, चतुःषष्टिः सुरेश्वराः ॥ ८९ ॥" उत्तराध्ययनप्राकृतवृत्तौ केशीगौतमीयाध्ययने आवश्यकहारिभद्र्यां च श्रीऋषभदेवजन्मोत्सवाधिकारे श्रीसमवायाङ्गे द्वात्रिंशे समवाये च व्यन्तराणामिन्द्रत्वाविवक्षया द्वात्रिंशदेवेन्द्रा उक्ताः सन्तीति[1] । सर्वेऽप्यागच्छन्ति मेरुपर्वतं सपरिच्छदाः । विशेषो योऽत्र

१ षोडशानां व्यन्तरेन्द्राणां तावतामेव च वानमन्तराणां चेन्द्राणामल्पर्धिकत्वादितोऽविवक्षा तत्र, सार्धद्विशत्या अभिषेकाणामन्यथा क्षतेः ।

घण्टादिनाम्नां सोऽथ निरूप्यते ॥ ९० ॥ तृतीये पञ्चमे स्वर्गे, सप्तमे दशमेऽपि च । घण्टा सुघोषाऽथ हरिनैगमेषी पदातिराट् ॥ ९१ ॥ निर्याणमार्गश्चोदीच्यो, गिरी रतिकरोऽपि च । भवेद्विमानसंक्षेपस्थानं सौधर्मराजवत् ॥ ९२॥ तुर्ये षष्ठेऽष्टमेऽथ द्वादशे स्वर्गे बिडौजसाम् । घण्टापत्तीशनामादि, पूर्वोक्तं शूलपाणिवत् ॥ ९३ ॥ पालकः १ पुष्पकः २ सौमनसः ३ श्रीवत्ससंज्ञकः ४ । नन्द्यावर्त्तः ५ कामगम ६ स्तथा प्रीतिगमोऽपि ७ च ॥ ९४ ॥ मनोरमश्च ८ विमलः ९, सर्वतोभद्र १० इत्यमी । क्रमाद्दशानामिन्द्राणां, प्रोक्ता यानविमानकाः ॥ ९५ ॥ तत्तन्नाम्ना तदध्यक्षाः, प्रोक्ता देवा अपि श्रुते । सामानिकादयस्त्वेषां, विज्ञेयाः क्षेत्रलोकतः ॥ ९६ ॥ भवत्योघस्वरा घण्टा, द्रुमः पादात्यनायकः । विमानं चमरेन्द्रस्य, पालकार्द्धप्रमाणयुक् ॥ ९७॥ योजनानां शतान् पञ्चोत्तुङ्ग इन्द्रध्वजोऽस्य च । शेषमुक्तस्वरूपं तु, शक्रवत्परिभाव्यताम् ॥९८॥ बलीन्द्रस्यापि विज्ञेयं, सर्वं चमरवत्परम् ॥ घण्टा महौघस्वरा स्यात्, पादात्येशो महाद्रुमः ॥ ९९ ॥ न स्युर्यानविमानोपकल्पिनोऽधिकृताः सुराः । भवनव्यन्तरज्योतिष्काणां किन्त्वाभियोगिकाः ॥ २०० ॥ शेषाणां दाक्षिणात्यानां, भद्रसेनः पदातिराट् । उदीच्यानां च विज्ञेयः, पत्तीशो दक्षसंज्ञकः ॥ १ ॥ विमानं चार्द्धमानं स्याच्चमरेन्द्रविमानतः । इन्द्रध्वजश्च सर्वेषां, तद्ध्वजार्द्धमितो मतः ॥ २ ॥ तथा मेघस्वरा १ हंसस्वरा २ क्रौञ्चस्वराऽपि ३ च । मञ्जुस्वरा ४ मञ्जुघोषा ५, सुस्वरा ६ मधुरस्वरा ७ ॥ ३ ॥ नन्दिस्वरा ८ नन्दिघोषा ९, घण्टासंज्ञाः क्रमादिमाः । नागादिषु निकायेषु, देवेन्द्राणां निरूपिताः ॥ ४ ॥ याम्यानां व्यन्तरेन्द्राणां, घण्टा मञ्जुस्वराभिधा । उदी-

॥४३१॥

च्यानां च सर्वेषां, मञ्जुघोषाभिधा भवेत् ॥ ५ ॥ सहस्रयोजनव्यासायामं यानविमानकम् । तेषां शतं सपादं च, योजनान्युच्छ्रितो ध्वजः ॥ ६ ॥ ज्योतिष्केषु च चन्द्राणां, घण्टा स्यात्सुस्वराभिधा । तथा सुस्वरनिर्घोषा, भास्वतां शेषमुक्तवत् ॥ ७ ॥ घण्टावादनमेतेषां, प्राग्वदुद्घोषणादि च । प्राप्तानुशिष्टयस्तुष्टा, विदधत्याभियोगिकाः ॥ ८ ॥ वज्रपाणिः परिवृतो, देवैरेवं चतुर्विधैः । मन्दराचलमौलिस्थे, कानने पाण्डकाह्वये ॥ ९ ॥ अभिषेकशिलायां च, तस्मिन् सिंहासनोत्तमे । निधायार्हन्तमुत्सङ्गे, तुष्टचित्तो निषीदति ॥ १० ॥ ततश्चाच्युतदेवेन्द्रो, वदति स्वाभियोगिकान् । अर्हज्जन्माभिषेकार्हां, सामग्रीं सज्जयन्तु भोः ॥ ११ ॥ सौवर्णान् राजतान् रात्नान्, स्वर्णरत्नमयानपि । रूप्यरत्नमयान् रूप्यरैजान् रैरूप्यरत्नजान् ॥ १२ ॥ मृत्स्नामयांश्च प्रत्येकं, सहस्रमष्टकाधिकम् । एवं चङ्गेर्यात्मदर्शस्थालपात्रीकरण्डकान् ॥ १३ ॥ सिंहासनच्छत्रतालवृन्ततैलसमुद्गकान् । चामरादीन् विकुर्वन्ति, तेऽष्टाधिकसहस्रकान् ॥ १४ ॥ त्रिभिर्विशेषकं ॥ कृत्रिमाकृत्रिमान् कुम्भादीनादाधाभियोगिकाः । क्षीरोदादिपयोधीनां, गङ्गादिसरितामपि ॥ १५ ॥ तीर्थानां मागधादीनां, ह्रदानामपि भूयसाम् । पवित्रमुदकं मृत्स्नां, विविधान्यम्बुजानि च ॥ १६ ॥ तथा हिमवदादिभ्यो, गिरिभ्यः सकलर्तुजान् । नन्दनादिवनेभ्यश्च, पुष्पौघान् विविधान् शुभान् ॥ १७ ॥ गोशीर्षचन्दनागुर्वादिकान् गन्धाननेकशः । कषायांश्चामलकादीन्, सिद्धार्थान् विविधौषधीः ॥ १८ ॥ गृहीत्वाऽऽगत्य संभूय, ढौकयन्त्यखिलं च तत् । स्वस्वामिनेऽच्युतेन्द्राय, विनयेन प्रणम्य ते ॥ १९ ॥ पञ्चभिः कुलकम् । ततोऽच्युतसुरेन्द्रस्तैः, कलशैश्चन्दना-

र्चितैः । पुष्पस्रक्शोभितगलैः, पद्मोत्पलपिधानकैः ॥ २० ॥ सर्वाग्रेण चतुःषष्ट्याधिकैः किल सहस्रकैः । अष्टभिर्भवपाथोधिपाराय स्वीकृतैरिव ॥ २१ ॥ सामानिकादिनिःशेषपरिवारसमन्वितः । प्रागुक्तोदकपुष्पाद्यैरर्हन्तमभिषिञ्चति ॥ २२ ॥ त्रिभिर्विशेषकं ॥ अच्युतेन्द्राभिषेकेऽस्मिन्नीशानेन्द्रादयः परे । ऊर्द्ध्वंदमा निषेवन्ते, विविधायुधपाणयः ॥ २३ ॥ चामरांश्चालयन्त्येके, केचिच्छत्राणि बिभ्रति । केचिद्धूपानुत्क्षिपन्ति, परे नृत्यानि कुर्वते ॥ २४ ॥ वादयन्त्यथ वाद्यानि, केचिद्गायन्ति केचन । केचिद्गर्जन्ति वर्षन्ति, केचित्तन्वन्ति विद्युतः ॥ २५ ॥ पुष्पाभरणवस्त्राणां, वृष्टिं कुर्वन्ति केचन । बालविस्मयदाश्चेष्टाः, केचित्कुर्युः प्रभोः पुरः ॥ २६ ॥ अभिषिच्यैवमर्हन्तं, नत्वा कृतजयध्वनिः । गन्धकाषायिकेणाङ्गं, रूक्षयत्यच्युतेश्वरः ॥ २७ ॥ ततोऽलङ्कारसंभारभासुरं स्वर्द्रुमोपमम् । प्रभुं विधाय पुरतो, दर्शयेन्नृत्यकौशलम् ॥ २८ ॥ आलिख्य मङ्गलान्यष्टौ, ढौकयेत्पुरतः प्रभोः । वितत्य पुष्पप्रकरमुत्क्षिपेद्धूपमुत्तमम् ॥ २९ ॥ ततो वृत्तशतेनाष्टाधिकेनार्थगुणस्पृशा । स्तुत्वा कृताञ्जलिर्ब्रूते, भूयः स्तुतिपदावलीम् ॥ ३० ॥ सा चैवं जम्बूद्वीपप्रज्ञप्तिसूत्रे—“णमोऽत्थु ते सिद्ध बुद्ध णीरय समण समाहिअ समत्त समजोगि सल्लगत्तण णिब्भय णीरागदोस णिम्मम णिस्संग णीसल्ल माणमूरण गुणरयण सीलसागरमणंतमप्पमेय भवियधम्मवरचाउरंतचक्कवट्टी णमोऽत्थु ते”इत्यादि ॥ एवं समापिताशेषजन्मस्नात्रविधिः प्रभोः । नातिदूरान्तिकस्थोऽसौ, विनयेन निषेवते ॥ ३१ ॥ त्रिषष्टिरपि देवेन्द्राः, सौधर्मेन्द्रविवर्जिताः । अभिषिञ्चन्त्यनेनैकविधिनाऽनुक्रमेण च ॥ ३२ ॥ ततश्चेशानदेवेन्द्रः, पञ्च मूर्त्तीर्विकुर्वते । जिनं

धृत्वैकयोत्सङ्गे, शक्रस्थाने निषीदति ॥ ३३ ॥ एकया छत्रमाधत्ते, धत्ते द्वाभ्यां च चामरौ। एकया पुरतः शूलं, धृत्वा तिष्ठति भृत्यवत् ॥ ३४ ॥ अथ सौधर्मराजोऽपि, सामग्रीमखिलामपि। प्राग्वद्विधाय कुरुते, विशेषं चैकमद्भुतम् ॥ ३५ ॥ कृत्वा चत्वारि शुक्लोक्षस्वरूपाणि चतुर्दिशम्। तेषां शृङ्गाष्टकान्नीरधाराभिर्गगनावधि ॥ ३६ ॥ ऊर्द्ध्वमुत्पत्य संभूय, पतन्तीभिः प्रभूपरि। छत्राकारं बिभ्रतीभिर्जिनं शक्रोऽभिषिञ्चति ॥ ३७ ॥ युग्मम् ॥ स एवं विहिताशेषजन्मस्नात्रविधिस्ततः। प्राग्वदर्हन्तमादाय, पञ्चमूर्त्तिर्निवर्त्तते ॥ ३८ ॥ युक्तश्चतुर्विधैर्देवैः, कृतप्रौढमहोत्सवैः। जिनं जन्मगृहे नीत्वा, स्थापयेन्मातुरन्तिके ॥ ३९ ॥ हृत्वाऽवस्वापिनीं मातुः, प्रतिबिम्बं प्रभोश्च तत्। न्यस्यत्युच्छीर्षके क्षौमयुग्मं कुण्डलयुग्मयुक् ॥ ४० ॥ विचित्ररत्नमालाभिः, कृतं श्रीदामकुण्डलम्। लम्बयत्यर्हदुल्लोचे, स्फुरज्झुम्बनकाकृति ॥ ४१ ॥ उत्तानशायिनस्तच, पश्यन्तः परमेश्वराः। रमन्ते विकसन्नेत्रा, अनुत्तरसुरा इव ॥ ४२ ॥ स्वाम्यङ्गुष्ठे क्षुधः शान्त्यै, स्थापयत्यमृतं हरिः। मुखे यत्क्षेपतोऽर्हन्तस्तृप्यन्त्यस्तन्यपा अपि ॥ ४३ ॥ ततः शक्राज्ञया श्रीदाज्ञापिता जृम्भकामराः। कोटीर्द्वात्रिंशतं स्वर्णहिरण्यानां जिनालये ॥ ४४ ॥ निदधत्यन्यदप्येवं, भूरि भद्रासनादिकम्। उद्घोषणां ततः शक्रः, कारयत्याभियोगिकैः ॥ ४५ ॥ कुर्वन्ति भगवज्जन्मनगर्यां तेऽपि हर्षिताः। विष्वक्त्रिकचतुष्कादौ, बाढमुद्घोषणामिति ॥ ४६ ॥ भो भोश्चतुर्विधा देवाः!, शृण्वन्तु वचनं हरेः। यः प्रभोः प्रभुमातुर्वा, विरूपं चिन्तयिष्यति ॥ ४७ ॥ आर्यकस्य मञ्जरीवत्, मूर्द्धा तस्य स्फुटिष्यति। आराध्येन विरोधो हि, नचिरादेव नाशयेत् ॥ ४८ ॥ ततश्चतुर्विधा

देवा, इन्द्राः शक्रादयोऽखिलाः। गत्वा नन्दीश्वरद्वीपे, कुर्युरष्टाहिकोत्सवम् ॥ ४९ ॥ यदा च युगपज्जन्म, यावतामर्हतां भवेत्। तदा तावन्ति रूपाणि, कृत्वोक्तं सकलं विधिम् ॥ ५० ॥ कुर्वन्ति दिक्कुमार्याद्याः, सर्वेऽर्हद्भक्तिनिर्भराः। मनःसंकल्पसिद्धीनां, किमशक्यं हि नाकिनाम्? ॥ ५१ ॥ युग्मम् ॥

विज्ञातसुतजन्मार्हत्पिताऽथ नगरं निजम्। कारयेद्बहिरन्तश्च, दूरिताशेषकश्मलम् ॥ ५२ ॥ सुगन्धिजलसंसिक्तापणवीथ्यादिभूमिकम्। तथा त्रिकचतुष्कादौ, लिप्तं पुष्पाद्यलङ्कृतम् ॥ ५३ ॥ स्थाने स्थाने दह्यमानकाकतुण्डादिधूपितम्। अलङ्कृताशेषगेहं, तोरणस्वस्तिकादिभिः ॥ ५४ ॥ ध्वजैर्नानाविधैर्वस्त्रैर्विराजन्निखिलापणम्। पदे पदे भवद्गीतनटनर्त्तककौतुकम् ॥ ५५ ॥ क्वचिद्भवन्मल्लयुद्धं, क्वचिदारब्धरासकम्। क्वचिद्विदूषकव्यासकलाविस्मितमानवम् ॥ ५६ ॥ वरत्राक्रीडिभिः कीर्णं, व्याप्तं वंशाग्रखेलकैः। कथकैश्च कथावीथीव्याक्षिप्तमनुजव्रजम् ॥ ५७ ॥ निरन्तरं वाद्यमानभम्भाभेरीमृदङ्गकम्। झल्लरीवेणुवीणादिवाद्यैः शब्दमयीकृतम् ॥ ५८ ॥ रिक्तकारागृहं मुक्तैस्तस्करद्विड्नृपादिभिः। ऋणानि दत्त्वा लोकानां, निःशेषमनृणीकृतम् ॥ ५९ ॥ विवृद्धमानोन्मानादिसानन्दनिखिलप्रजम्। उद्गीयमानधवलमङ्गलं प्रतिमन्दिरम् ॥ ६० ॥ प्रतीष्टेष्टानीयमानरत्नाद्युत्सवढौकनम्। नानासत्कारसंतुष्टज्ञातिस्वजनबान्धवम् ॥ ६१ ॥ अनेकैः स्वर्णरजतरत्नाम्बरविभूषणैः। अनर्गलं दीयमानैः, पूरितार्थिमनोरथम् ॥ ६२ ॥ आदित एकादशभिः कुलकम् ॥ अतुच्छोत्सवसच्छायेष्वहस्स्वेकादशस्विति। अतिक्रान्तेष्वथामन्त्र्य, स्वजनान् भोजनादिभिः ॥ ६३ ॥ सन्तोष्याथो तत्समक्षं, गुण-

स्वमात्रपेक्षया । अर्हतां स्थापयेन्नाम, पिता भद्रङ्कराक्षरम् ॥ ६४ ॥ पाल्यमानाश्च वर्द्धन्ते, धात्रीभिस्तेऽथ पञ्चभिः । अङ्कादङ्कं संचरन्तः, सह पित्रोर्मनोरथैः ॥ ६५ ॥ कलाहेतोरनारब्धकलाचार्यान्तिका अपि । स्वत एवात्तसकलकलाः संपूर्णचन्द्रवत् ॥ ६६ ॥ विद्यानां पारदृश्वानो, विनाऽभ्यासं वचस्विनः । बाल्येऽपि दक्षस्थविरा, इव प्रोद्बुद्धबुद्धयः ॥ ६७ ॥ प्राच्याद्भवादनुगतैः, स्नेहवश्यैरिवोत्तमैः । मतिश्रुतावधिज्ञानैरमात्यैरिव सेविताः ॥ ६८ ॥ क्रीडापराङ्मुखाः प्रायो, बालचेष्टाविवर्जिताः । जगदुत्कृष्टसौन्दर्यभाग्यसौभाग्यशोभनाः ॥ ६९ ॥ स्वजनानां जनानां च, नयनानन्ददायिनः । प्रियङ्कराः प्रियालापाः, प्रियाश्च द्विषतामपि ॥ ७० ॥ जितेन्द्रियाः स्थिरात्मानो, यौवनोद्योतिता अपि । अचला अचला एव, महावाताहता अपि ॥ ७१ ॥ स्त्रीपरिग्रहजयानि, चेत्प्राक्कर्माणि जानते । तदा वीवाहमप्यङ्गीकुर्वते ते यथाविधि ॥ ७२ ॥ सह पाणिगृहीतीभिर्विषयानपि भुञ्जते । क्षेप्तुं कर्माणि यन्नीचोपायेनापि रिपुं जयेत् ॥ ७३ ॥ बही रागं दर्शयन्तोऽप्यन्तः शुद्धाः प्रवालवत् । प्राप्तेऽपि चक्रभृद्राज्ये, न व्यासक्ता भवन्ति ते ॥ ७४ ॥ प्रव्रज्यावसरं स्वस्य, ते ज्ञानेन विदन्त्यथ । तस्मिंश्च समयेऽभ्येत्य, देवा लोकान्तिका अपि ॥ ७५ ॥ नत्वा विज्ञपयन्त्येवं, जय नंद जगद्गुरो ! । त्रैलोक्यस्योपकाराय, धर्मतीर्थं प्रवर्त्तय ॥ ७६ ॥ लौकान्तिकस्वरूपं तु क्षेत्रलोकतो ज्ञेयं ॥ अत्र कल्पसूत्रे श्रीवीरजिनाधिकारे प्रथमं लौकान्तिकदेवागमनं ततो वार्षिकदानमिति क्रमो दृश्यते, षष्ठाङ्गे तु श्रीमल्लिजिनाधिकारे पूर्वं सांवत्सरिकदानं ततो लोकान्तिकदेवागमनमिति क्रमो दृश्यते, श्रीआवश्यके तु श्रीऋषभजिनाधिकारे कल्पसूत्र-

वत् श्रीमहावीराधिकारे तु षष्ठाङ्गवत्, तथा चोक्तं श्रीज्ञानसागरसूरिभिः स्वकृतावचूर्णौ "आह—ऋषभाधिकारे संबोधनोत्तरकालं परित्यागद्वारमुक्तमिह तु कस्माद्विपर्ययः ?, उच्यते, न सर्वार्हतामयं नियमः, यदुत संबोधनोत्तरकालभाविनी महादानप्रवृत्ति"रिति । ततो दीक्षादिनादर्वाग्, वर्षे शेषे जिनेश्वराः । दानस्य धर्मेष्वग्र्यत्वाद्दानं ददति वार्षिकम् ॥ ७७ ॥ कोटिमेकां सुवर्णानां, लक्षैरष्टभिरन्विताम् । आप्रातराशसमयान्नित्यं ददति तीर्थपाः ॥७८॥ पुरे त्रिकचतुष्कादौ, कारयेद् घोषणामिति । ईप्सितं यस्य यद्वस्त्रविभूषावाहनादिकम्॥७९॥ तद्यथेच्छमिहागत्य, स गृह्णात्वविशङ्कितः । सर्वाशाः पूरयत्येवं, दानैः कीर्त्त्या च तीर्थकृत् ॥ ८० ॥ युग्मम् । धर्मप्रभावनाबुद्ध्या, लोकानां चानुकम्पया । जिना ददति तद्दानं, न तु कीर्त्त्यादिकाङ्क्षिणः ॥ ८१ ॥ दानं यथा यथा दद्युः, स्वापतेयं तथा तथा । शक्रवैश्रमणादिष्टा, देवाः पिप्रति जृम्भकाः ॥ ८२ ॥ त्रीणि कोटिशतान्यष्टाशीतिश्चोपरि कोटयः । लक्षाण्यशीतिः स्वर्णानां, दद्युर्वर्षेण तीर्थपाः ॥ ८३ ॥ एतावद्वार्षिके दाने, जृम्भकामरढौकितम् । जिनेश्वराणां सर्वेषां, नियतं परिकीर्त्तितम् ॥ ८४ ॥ तच्चैवं—दातुं यदाऽऽब्दिकं दानमध्यवस्यन्ति तीर्थपाः । तदाऽऽसनप्रकम्पेन, जानात्यवधिना हरिः ॥८५॥ जीतमेवेदमस्माकं, त्रिकालोद्भववज्रिणाम् । यद्वार्षिकाय दानाय, प्रव्रज्यावसरेऽर्हताम् ॥ ८६ ॥ ढौकनीयं स्वापतेयं, स्वर्णकोटीशतात्रयः । अष्टाशीतिः कोटयश्चाशीतिलक्षसमन्विताः ॥८७॥ युग्मम् । एवं निश्चित्य धनदमाज्ञापयति वज्रभृत् । स जृम्भकामरांस्ते स्वं, निक्षिपन्ति गृहेऽर्हताम् ॥८८॥ अन्यदप्यश्वहस्त्यादिभूषावस्त्रादि मन्दिरात् । यच्छन्त्यभीष्टं लोकानां, दानवीरा जिनेश्वराः ॥ ८९ ॥ महानसा-

तीर्थकृतो दानं दीक्षा च

न्यनेकानि, कारयित्वा स्वसेवकैः। दापयन्त्यन्नपानादि, दीनादीनामनर्गलम् ॥ ९० ॥ तथोक्तं षष्ठाङ्गे—'तए णं कुंभए मिहिलाए रायहाणीए तत्थ तत्थ तहिं तहिं देसे बहुईओ महाणससालाओ करेइ' इत्यादि मल्लयध्ययने॥ पित्रादेः स्वजनस्याथ, प्राप्यानुज्ञां कथञ्चन। यस्मिन् दिने यतन्ते ते, चारित्राय महाशयाः ॥ ९१ ॥ तस्मिन् दिने तन्नगरं, ध्वजश्रेण्याद्यलङ्कृतम्। स्वजनाः कारयन्त्येषां, विष्वक् पूर्वोक्तया दिशा ॥ ९२ ॥ युग्मम्। तस्मिन्नवसरे प्राग्वच्चतुःषष्टिः सुरेश्वराः। आयान्त्यासनकम्पेन, ज्ञात्वा दीक्षाक्षणं प्रभोः ॥९३॥ देवानां समुदायेनागच्छता त्रिदिवात्तदा। द्यावाभूम्योर्मध्यमुद्यत्कोट्यर्कमिव दीप्यते ॥ ९४ ॥ कलशांस्तेऽष्टजातीयान्, पूजोपकरणानि च। पृथक् सहस्रमष्टानां, कारयन्त्याभियोगिकैः ॥ ९५ ॥ इन्द्रवत्कलशानष्टप्रकारान् स्वजना अपि। शिल्पिभिः कारयन्त्यन्यान्यर्चोपकरणान्यपि ॥ ९६ ॥ कलशास्ते मनुष्याणां, दिव्येषु कलशेष्वथ। अनुप्रविष्टेषु भृशं, शोभन्ते दिव्यशक्तितः ॥ ९७ ॥ ततः सुराहृतैस्तीर्थनीरौषधिमृदादिभिः। वासवाः स्वजनाश्चासमभिषिञ्चंति सोत्सवम् ॥ ९८ ॥ तदा दर्पणभृङ्गाराद्यलङ्कृतकराः सुराः। इन्द्राद्याः परिषेवन्ते, प्रोच्चारितजयारवाः ॥ ९९ ॥ ततश्च गन्धकाषाय्या, रूक्षिताङ्गो जगत्प्रभुः। यथास्थानं परिहितसर्वालङ्कारभासुरः ॥ ३०० ॥ कल्पद्रुमप्रसूनस्रग्विराजिगलकन्दलः। लक्षार्घं सदृशं श्वेतं, परिधत्तेऽम्बरं वरम् ॥ १ ॥ युग्मं ॥ स्वजनाः कारयन्त्येकां, शिबिकां शिल्पिपुङ्गवैः। विचित्ररचनां भूरिरत्नस्तम्भशताश्रिताम् ॥ २ ॥ तादृश्या स्वर्गिकृतया, मिश्रा शिबिकया च सा। भृशं विभाति मेधेव, संगता शास्त्रसंविदा ॥ ३ ॥ षष्ठादिना विशिष्टेन, तपसाऽलङ्कृतस्ततः।



उत्तरोत्तरमुत्कृष्टवर्द्धमानशुभाशयः ॥ ४ ॥ तत्र सिंहासने पूर्वामुखः स्वामी निषीदति। प्रभोर्दक्षिणतश्चोपविशेत् कुलमहत्तरा ॥ ५ ॥ पटशाटकमेकं सा, बिभृते हंसलक्षणम्। अम्बधात्री वामतश्च, चारुवेषा निषीदति ॥ ६ ॥ पृष्ठेऽवतिष्ठते चैका, तरुणी चारुभूषणा। प्रभूपरि सितच्छत्रं, दधाना स्वर्वधूपमा ॥ ७ ॥ एका च कृतशृङ्गारा, चकोराक्षी निषीदति। ऐशान्यां दधती हस्ते, कलशं जलसंभृतम् ॥८॥ एका निषीदत्याग्नेय्यां, रम्यालङ्कारबन्धुरा। हस्ते धृत्वा मणिमयं, तालवृन्तं मृगेक्षणा ॥ ९ ॥ ततश्च स्वजनादिष्टाः, सहस्रं पुरुषर्षभाः। समोच्छ्रायोत्साहरूपवेषभूषणशालिनः ॥ १० ॥ वहन्ति शिबिकां यावत्तावत्सौधर्मनायकः। तस्य बाहां दाक्षिणात्यामूर्ध्वगां वहति स्वयम् ॥ ११ ॥ उदीच्यामूर्ध्वगां बाहां, वहतीशाननायकः। अधस्तनां दाक्षिणात्यां, चमरेन्द्रः स्वयं वहेत् ॥ १२॥ अधस्तनीमौत्तराहां, बलीन्द्रस्तामुदस्यति। चत्वार उद्वहन्त्येवमिन्द्रा बाहाचतुष्टयम् ॥ १३ ॥ शेषाः सुराः सुरेन्द्राश्च, चलत्कुण्डलभूषणाः। प्रौढप्रेमप्रकटितपुलकाङ्कुरदन्तुराः ॥ १४ ॥ पञ्चवर्णानि पुष्पाणि, वर्षन्तो देवदुन्दुभीन्। वादयन्तः स्वमात्मानं, धन्यम्मन्याः स्फुरन्मुदः ॥१५॥ अहं पूर्वमहं पूर्वमिति सत्वरचेतसः। शेषेष्वशेषदेशेषु, वहन्ति शिबिकां प्रभोः ॥१६॥ त्रिभिर्विशेषकं ॥ तथाहुः श्रीभद्रबाहुस्वामिनः—'पुव्वं उक्खित्ता माणुसेहिं साहट्टुरोमकूवेहिं। पच्छा वहंति सीअं असुरिंदसुरिंदनागिंदा ॥१७॥"[1]ईदृग्नियमश्चात्र चतुर्थाङ्गे—"पुरतो

१ पुरओ सुरा वहंति असुरा पुण दाहिणंमि पासंमि। अवरे वहंति गरुला नागा पुण उत्तरे पासे ॥ १ ॥ (८.१२४) इति वचनादनियमोऽयं. अयं वीरमहोत्सवे क्रमः, पूर्वोक्तस्तु नाभेयजिनदीक्षोत्सवे

वहंति देवा नागा पुण दाहिणंमि पासंमि। पचच्छिमेण असुरा गरुला पुण उत्तरे पासे ॥ १८ ॥" शक्रेशानौ ततस्तां तां, त्यक्त्वा बाहां सुरेश्वरौ। चामराणि वीजयतः, प्रभोरुभयतः स्थितौ ॥ १९ ॥ तदा नभोऽङ्गणं देवैः, स्फुरद्वसनभूषणैः। भूमण्डलं च मनुजैर्भवेद्विष्वगलङ्कृतम् ॥ २० ॥ निरन्तरं वाद्यमानैरातोद्यैर्विविधैस्तदा। जयारवैश्च लोकानां, भवेच्छब्दमयं जगत् ॥ २१ ॥ नागराणां नागरीणां, समुदायैः पदे पदे। वीक्ष्यमाणः स्तूयमानः, प्रार्थ्यमानो मनोरथैः ॥ २२ ॥ भवनाट्टसहस्राणि, व्यतिक्रामन् जगद्गुरुः। जनाञ्जलिसहस्राणि, गृह्णन् शृण्वंश्च तत्स्तुतीः ॥ २३ ॥ वनाय पुर्या निर्याति, राजमार्गेण मार्गवित्। सौधर्मेन्द्र इव स्वर्गात्पूर्वोक्ताभिः समृद्धिभिः ॥ २४ ॥ प्रथमं मङ्गलान्यष्टौ, संपूर्णः कलशस्ततः। भृङ्गारचामरच्छत्रवैजयन्त्यस्ततः क्रमात् ॥ २५ ॥ पादपीठान्विते रत्नस्वर्णसिंहासने ततः। ततः पृथक् साष्टशतमनारोहेभवाजिनाम् ॥ २६ ॥ रथानामस्त्रपूर्णानां, ध्वजघण्टावलीस्पृशाम्। प्रधानपुरुषाणां च, प्रत्येकं शतमष्टयुक् ॥ २७ ॥ गजाश्वरथपादात्यसैन्यानि च ततस्ततः। सहस्रयोजनोत्तुङ्गो, ध्वजो ध्वजसहस्रयुक् ॥ २८ ॥ खड्गग्राहाः कुन्तपीठफलकग्राहिणस्ततः। हास्यादिकारकाः कान्दर्पिकाश्च सजयारवाः ॥ २९ ॥ उग्रा भोगाश्च राजन्याः, क्षत्रियाद्यास्ततः क्रमात्। संचरन्ति ततो देवा, देव्यश्च स्वामिनः पुरः ॥ ३० ॥ वदन्ति सर्वे तत्रैवं, जय जीव जगद्गुरो! ज्ञानाद्यैर्निरतीचारैर्जहि कर्मरिपून् द्रुतम् ॥ ३१ ॥ जयाजितानीन्द्रियाणि, जीतं धर्मं च पालय। विघ्नान् जित्वा त्रिभुवनैश्वर्यमासादय द्रुतम् ॥ ३२ ॥ रागद्वेषमहामल्लौ, हत्वा मल्ल इवोद्भटः। आराधनापताकां द्राग्, जगद्रङ्गे समाहर ॥ ३३ ॥ विशुद्धं केवलज्ञानं, प्रभो! शीघ्रमवाप्नुहि। सन्मार्गं दर्शयास्माकं, धर्मे निर्विघ्नमस्तु ते ॥ ३४ ॥ एवं महैः प्राप्य वनमशोकादितरोस्तले। संस्थाप्य शिबिकां तस्याः, समुत्तरति तीर्थकृत् ॥ ३५ ॥ यथोचितं भूषणानि, विमुञ्चति ततः प्रभुः। तान्यादाय हितं शास्तीत्येवं कुलमहत्तरा ॥ ३६ ॥ उच्चोच्चगोत्रस्त्वं वत्स!, त्वमसि क्षत्रियोत्तमः। प्रसिद्धमातापितृको, व्याप्तकीर्त्तिर्जगत्त्रये ॥ ३७ ॥ दुराराधं दुश्चरं च, व्रतमंगीकृतं त्वया। यद्वालुकानां कवल, इवास्वादलवोज्झितम् ॥ ३८ ॥ दुर्वहं मेरुवत्खड्गधाराग्रमिव दुश्चरम्। दुस्तरं वार्द्धिवद्भीष्मं, क्लीबानां श्रवणादपि ॥ ३९ ॥ ततः प्रमादं मा कार्षीर्वत्सोऽसि त्वं सुखोचितः। तथा यतेथास्त्वं धर्मे, यथा सिद्ध्येत्तवेप्सितम् ॥ ४० ॥ इत्युदित्वा नमस्कृत्य, शाटकं हंसलक्षणम्। आदाय भूषणैः पूर्णमेकतः साऽपसर्पति ॥ ४१ ॥ ततो मुष्ट्यैकया कूर्चं, तच्चतुष्केण मूर्द्धजान्। उद्धरन् कुरुते लोचं, भगवान् पञ्चमौष्टिकम् ॥ ४२ ॥ तदा च प्राप्तवैराग्यैर्जिनाः केचिन्नृपादिभिः। प्रव्रजन्ति परिवृताः, केचिदेकाकिनोऽपि च ॥ ४३ ॥ केशांस्त्वादाय शक्रस्तान्, सुरभीन् श्यामलान् मृदून्। अनुज्ञाप्य जगन्नाथमुत्सृजेत्क्षीरनीरधौ ॥ ४४ ॥ वस्त्रं च स्थापयत्येकं, प्रभोः स्कन्धे हरिस्तदा। देवदूष्याभिधं स्वर्णलक्षमूल्यमनुत्तरम् ॥ ४५ ॥ देवमानवशब्दौघो, नानातूर्यरवोऽपि च। क्षिप्रमेवेन्द्रवाक्येन, निखिलोऽप्युपशाम्यति ॥ ४६ ॥ नमो सिद्धाणमित्युक्त्वा, स्वामी सामायिकं ततः। निषिद्धसर्वसावद्ययोगं संप्रतिपद्यते ॥ ४७ ॥ अत्र सामायिकपाठे भंते इति जिना न कथयन्तीति कल्पवृत्त्यादिषु, करोमि भदन्त! सामायिकं सर्वान् सावद्यान् योगान् प्रत्याचक्षे, न चास्यान्यो भदन्तः अन्यत्र सिद्धेभ्यः, आचारार्थं त्वनेन सिद्धान् वा प्रत्युक्तमिति तु तत्त्वार्थवृत्तौ। ततस्तस्य

च चारित्रप्रतिपत्त्युत्तरक्षणे । उत्पद्यते महाज्ञानं, मनःपर्यायसंज्ञकम् ॥ ४८॥ एवं गृहीतचारित्रास्तेऽर्हन्तः परमेश्वराः । आपृच्छ्य स्वजनांस्तस्मिन्नेवाह्नि विहरन्त्यपि ॥ ४९ ॥ वसन्त्येकमहोरात्रं, ग्रामे द्रङ्गे च पञ्च तान् । चन्दनाभ्यर्चने वास्या, तक्षणे च समाशयाः ॥ ५० ॥ मणौ मृदि रिपौ मित्रे, समाश्च स्तुतिनिन्दयोः । द्रव्यक्षेत्रकालभावप्रतिबन्धविवर्जिताः ॥ ५१ ॥ तत्र द्रव्यं सचित्तादि, क्षेत्रं ग्रामगृहादिकम् । कालः स्यान्मासवर्षादिर्भावो रागादिरुच्यते ॥५२॥ एकान्ते च सभायां च, पुरेऽरण्ये समक्रियाः । समाहिताः समितिभिर्गुप्तिभिश्च निराश्रवाः ॥ ५३ ॥ व्योमवत्ते निरालम्बा, आत्मेवास्खलितास्पदाः । सौम्याः शीतांशुवद्दीप्राः, सहस्रकरबिम्बवत् ॥ ५४ ॥ अप्रमत्ताश्च भारण्डखगवद्गजराजवत् । शौण्डीराः सिंहवच्छूरात्मानो भुवि चरन्ति ते ॥ ५५॥ चतुर्भिः कलापकं ॥ शङ्खो विविधरागेण, कांस्यपात्रं यथाऽम्भसा । रज्यते लिप्यते नैव, तथा तेऽपि जिनेश्वराः ॥ ५६ ॥ तपसः पारणां ते च, कुर्वते यस्य वेश्मनि । तद्गृहे पञ्च दिव्यानि, स्युर्देवैर्विहितानि वै ॥ ५७ ॥ सुगन्धिजलवृष्टिः स्यात् १, पुष्पवृष्टिस्तथा भवेत् २। स्यात्[1] स्वर्णवृष्टि ३ र्ध्वनति, गगने दिव्यदुन्दुभिः ४ ॥ ५८॥ अहो दानमहो दानमित्युद्घोषणपूर्वकम् । नृत्यन्ति मुदिता देवा, नरजन्मानुमोदिनः ५ ॥ ५९ ॥ स्वर्णवृष्टौ गरिष्ठायां, सार्द्धा द्वादश कोटयः । कनिष्ठायां तु तस्यां स्युर्लक्षास्तावत्य एव च ॥ ६० ॥ त्रैलो- ॥४३७॥
क्यस्थामविक्षोभप्रभविष्णुभुजा अपि । परीषहोपसर्गांस्ते, सहन्ते निर्जरार्थिनः ॥ ६१ ॥ क्षुत् १ पिपासा २ च

१ यत्र चेलोत्क्षेपो दिव्यतया तत्र जलपुष्पवृष्ट्योरेकत्वं, यद्वोद्घोषणाया दिव्यव्यतिरिक्तत्वं

शीतोष्णे ३ ४, दंशा ५ ऽचेला ६ ऽरति ७ स्त्रियः ८ । चर्या ९ नैषेधिकी १० शय्या ११ ऽऽक्रोशश्च १२ वध १३-याचने १४ ॥ ६२ ॥ रोगा १५ ऽलाभ १६ तृणस्पर्शाः १७, सत्कारो १८ मलिनाङ्गता १९ । प्रज्ञा २०-ऽज्ञानं २१ च सम्यक्त्वं २२, द्वाविंशतिः परीषहाः ॥ ६३ ॥ अरत्याख्यान्मोहनीयादरतिः स्यात्परीषहः । जुगुप्सामोहनीयाचाचेलत्वं स्यात्त्रपावहम् ॥ ६४ ॥ पुंवेदमोहनीयाच, स्यात्पुंसां स्त्रीपरीषहः । स्त्रीवेदमोहनीयाच, स्त्रीणां स्यात्पुंपरीषहः ॥ ६५ ॥ भयमोहाद्भवेद्भीष्मो, नैषेधिक्याः परीषहः । याञ्चापरीषहो मानभङ्गकृन्मानमोहतः ॥ ६६ ॥ क्रोधहेतुः क्रोधमोहभूराक्रोशपरीषहः । मानहेतुर्मानमोहभूः सत्कारपरीषहः ॥ ६७ ॥ चारित्रमोहमाश्रित्य, स्युः सप्तामी परीषहाः । प्रज्ञाऽज्ञानद्वयं ज्ञानावरणीयसमाश्रितम् ॥ ६८ ॥ सम्यक्त्वं दर्शनमोहमलाभो विघ्नकर्म च । आश्रित्य, वेदनीयं तु भवन्त्येकादशापरे ॥ ६९ ॥ तत्राद्याः क्रमतः पञ्च, चर्या शय्या वधो रुजा । तृणस्पर्शश्च मालिन्यमित्येते वेदनीयजाः ॥ ७० ॥ एवं च ज्ञानावरणे, मोहनीयान्तराययोः । वेदनीये चेति कर्मचतुष्केऽन्तर्भवन्त्यमी ॥ ७१ ॥ स्युर्द्वाविंशतिरप्येते, सप्ताष्टकर्मबन्धिनाम् । युगपद्विंशतिं चामून्, वेदयन्त्यपि जातु ते ॥ ७२ ॥ चर्यानैषेधिकीयुग्मं, युग्मं शीतोष्णयोरपि । न भवेद्युगपत्तेनानुभवो विंशतेः स्मृतः ॥ ७३ ॥ ननु चात्यन्तिके शीते, पतति ज्वलितेऽनले । मध्यस्थस्यैकतः शीतं, तुदत्येवोष्णमन्यतः ॥ ७४ ॥ अत्रोच्यते—शीतोष्णकालोत्थे शीतोष्णे एवात्र विवक्षिते । व्यभिचारो न तत्पूर्वोक्तैः शीतज्वरिभिस्तथा ॥ ७५ ॥ एवंविधो व्यतिकरो, न भवेद्वा तपस्विनाम् । तस्माच्छीतोष्णयोर्नैककाले संभव

इष्यते[1] ॥ ७६ ॥ ननु शय्या च चर्या च, न स्यातां युगपत्ततः । एकोनविंशतेरेव, कथं नोक्तः सहोद्भवः? ॥७७॥ अत्रोच्यते—कंचिद् ग्रामं समुद्दिश्य, गच्छन्नुत्सुकमानसः । मार्गे यदीत्वरां शय्यां, तादृशीं प्रतिपद्यते ॥७८॥ गमनेच्छानिवृत्तत्वात्तदा चर्यापरीषहः । किंचित्कालं च शय्याऽपि, यौगपद्यं द्वयोरिति[2] ॥ ७९ ॥ मोहायुर्वर्जषट्कर्मबन्धिनां तु चतुर्दश । छद्मस्थानां स्युरष्टाभिर्वर्जिता मोहनीयजैः ॥ ८० ॥ चर्याशय्ये वोष्णशीते, स्यातामेषां समं न यत् । द्वादशानुभवन्त्येते, सूक्ष्ममोहास्ततः समम् ॥८१॥ ननु पूर्वोक्तया युक्त्या, न शय्याचर्ययोः कथम् । सहोद्भवो भवत्येषामिति चेत् श्रूयतामिह ॥ ८२॥ तद्धेतुमोहानुदयान्नैषामौत्सुक्यसंभवः । ततो नेत्वरशय्यायामेषां चर्यापरीषहः ॥ ८३ ॥ छद्मस्थवीतरागाणामथैकं कर्म बध्नताम् । सयोगानां केवलिनां, भवस्थायोगिनामपि ॥ ८४ ॥ एकादशोपसर्गाः स्युर्वेदयन्ति समं नव । न चर्याशय्ययोः शीतोष्णयोर्यत्समसुद्भवः ॥ ८५ ॥ मोहकर्मोदयाभावादेषामौत्सुक्यसंभवः । न जातु स्यात्ततश्चर्याशय्ययोर्न सहोद्भवः ॥ ८६ ॥ अमी च सम्यक् सह्यन्ते, दक्षैर्मोक्षाभिकाङ्क्षिभिः । रागद्वेषाकरणतस्तस्मादुक्ताः परीषहाः ॥८७॥ प्रज्ञाप्रकर्षे नोत्कर्षं, न चाल्पज्ञपराभवम् । विदधीतेति सोढव्यो, बुधैः प्रज्ञापरीषहः ॥ ८८ ॥ सत्कारेऽपि कृते भक्तैर्भोज्यवस्त्रोत्स-

१ यद्यपि वेदनापेक्षया समाधातुं शक्यमेव, परं तथा समाधाने विंशतेरपि युगपद्भावो दुश्शकः, तत्त्वतस्तु अग्निसेवास्नानाभिलाषजनकयोः शीतोष्णयोः स्वीकारे परीषहत्वेन नैककालभावितोभयोः । २ शय्याप्रतिबन्धेनाविहारे विहारभीत्या शय्याप्रतिबन्धे च सति द्वयोर्भावो यद्वा मार्गारतेः शय्योद्वेगस्य चापि युगपद्भावात्



वादिभिः । न माद्यतीति सोढः स्यात्सत्काराख्यः परीषहः ॥८९॥ अभ्यासेऽपि श्रुतानाप्तौ, ज्ञानद्विष्टो विषण्णधीः । न स्यात्सोढव्य इत्येवमज्ञानाख्यः परीषहः ॥ ९० ॥ तपश्चारित्रकष्टानां, सोढानामिह जन्मनि । फलासंदेहतः सह्यः, सम्यक्त्वाख्यः परीषहः ॥ ९१ ॥ शीतोष्णप्रभृतीनां तु, वपुश्चेतस्तुदां स्वयम् । परीषहत्वं विज्ञेयं, स्पष्टत्वान्नेह वर्णितम् ॥ ९२ ॥ स्त्रीप्रज्ञालोकसत्कारा, अनुकूला अमी त्रयः । प्रतिकूलाश्च विज्ञेयाः, शेषा एकोनविंशतिः ॥ ९३ ॥ अत्रानुकूलशीतलयोर्विशेषोऽन्वेषणीय इति । परीषहौ स्त्रीसत्कारौ, द्वौ स्यातां भावशीतलौ । उष्णाश्च भावतः शेषा, विंशतिः स्युः परीषहाः ॥ ९४ ॥ तथाहुः—"इत्थी सक्कारपरीसहो य दो भावसीअला एए' (आचा.-२०२नि.) इत्यादि । इति परीषहाः । उपसृज्यत एभिर्यत्, धर्मात्प्रच्याव्यतेऽसुमान् । बाधाविशेषास्ते प्रोक्ता, उपसर्गा इति श्रुते ॥९५॥ दिव्य १ मानुष २ तैरश्चाः ३, स्वसंवेद्या ४ स्तथैव च । एकैकश्च चतुर्भेद, इति ते षोडश स्मृताः ॥९६॥ हास्यात्प्रद्वेषतो वापि, तृतीयः स्यात्परीक्षणात् । तुर्यः पृथग्विमात्राख्यो, हास्यद्वेषादिसंकरात् ॥९७॥ स च हास्यात्समारब्धो, द्वेषो यत्तत्परीक्षणे । निष्ठां यायात् क्रुधारब्धोऽप्येवं हास्यपरीक्षयोः ॥ ९८ ॥ यद्वाऽऽरब्धः परीक्षाया, निष्ठां हास्यक्रुधोर्व्रजेत् । एतेषां त्रिकसंयोगोऽप्येवं भाव्यो मनीषिभिः ॥ ९९ ॥ मानुषा अप्येत एव, भवन्त्याद्यास्त्रयस्ततः । कुशीलप्रतिसेवाख्यस्तुर्यो भोगार्चनादिजः ॥ ४०० ॥ भयाद् द्वेषाद्रक्ष्यहेतोरपत्यपालनाय च । इति तिर्यक्कृता ज्ञेया, उपसर्गाश्चतुर्विधाः ॥ १ ॥ प्रद्वेषात्क्रुद्धसर्पाद्यास्तुदन्ति श्वादयो भयात् । आहारहेतोर्व्याघ्राद्या, धेन्वाद्यास्त्रातुमात्मजान् ॥ २ ॥ घट्टनाच्च प्रपतनात्,

स्तम्भनात् श्लेषणादिति । आत्मसंवेदनीयाः स्युरुपसर्गाश्चतुर्विधाः ॥ ३ ॥ यथाऽक्षिण पतिते रेणौ, तस्मिन् हस्तेन मर्दिते । मांसाङ्कुरैर्वा कण्ठादौ, कष्टं स्याद् घट्टनोद्भवम् ॥ ४ ॥ गमनादावयत्नेन, दुःखं स्यात्पतनोद्भवम् । सुप्तस्य चोपविष्टस्य, पादादौ प्रसृते चिरम् ॥ ५ ॥ स्थिते स्तब्धे स्तम्भनोत्थमेवं संकुचिते चिरम् । स्थिते तस्मिन् विलग्ने च, दुःखं स्यात् श्लेषणोद्भवम् ॥ ६ ॥ इदमर्थतः स्थानाङ्गसूत्रवृत्त्यादौ ॥ एतांश्च सहमानानां, क्षीयते कर्मसंततिः । तेषामनुत्तरज्ञानतपःक्षान्त्यादिशालिनाम् ॥ ७ ॥ त्यक्तार्त्तरौद्रध्यानास्ते, धर्मध्यानसमाहिताः । ध्यानं ध्यातुं प्रवर्त्तन्ते, शुक्लं कर्मेन्धनानलम् ॥ ८ ॥ ध्यानं नाम मनःस्थैर्यं, यावदन्तर्मुहूर्त्तकम् । आर्त्तं रौद्रं तथा धर्म्यं, शुक्लं चेति चतुर्विधम् ॥ ९ ॥ तथोक्तं स्थानाङ्गवृत्तौ—"अंतोमुहुत्तमेत्तं चित्तावत्थाणमेगवत्थुंमि । छउमत्थाणं झाणं जोगनिरोहो जिणाणं तु ॥ १० ॥" योगास्तत्रौदारिकादिदेहसंयोगसंभवाः । आत्मवीर्यपरीणामविशेषाः कथितास्त्रिधा ॥ ११ ॥ इत्यावश्यकहारिभद्र्यां ध्यानशतकवृत्तौ ॥ मुहूर्त्तात्परं चित्तावस्थानमेकवस्तुनि । साचिन्तेत्युच्यते प्राज्ञैर्यद्वा ध्यानान्तरं भवेत् ॥ १२ ॥ तथोक्तं—"अंतोमुहुत्त परओ चिंता झाणंतरं व होज्जाहि । सुचिरंपि होज्ज बहुवत्थुसंकमे झाणसंताणो ॥ १३ ॥" तत्रेह न ध्यानादन्यद्ध्यानान्तरं गृह्यते, किं तर्हि?, भावनानुप्रेक्षात्मकं चेत इति, बहूनि च तानि वस्तूनि च बहुवस्तूनि–आत्मगतपरगतानि मनःप्रभृतीनि तेषु संक्रमः-संचरणमिति हारिभद्र्यां ॥ गाढमालम्बने लग्नं, चित्तं ध्यानं निरेजनम् । यत्तु चित्तं चलं मूढमव्यक्तं तन्मनो मतम् ॥ १४ ॥ अव्यक्तानां मूर्च्छितानां, मत्तानां स्वापमीयुषाम् । सद्योजातार्भकानां चा-



व्यक्तं मूढं भवेन्मनः ॥ १५ ॥ एवं ध्यानं ध्रुवं चित्तं, चित्तं ध्यानं न निश्चयात् । खदिरो वृक्ष एव स्यात्, स चान्यो वा तरुः पुनः ॥ १६ ॥ यन्मानसः परीणामः, केवलो ध्यानमिष्यते । तन्मिथ्या यज्जिनैस्त्रैधेष्वपि योगेषु तत्स्मृतम् ॥ १७ ॥ तन्वङ्गमनसोः स्थैर्यापादनात्संभवेद् द्विधा । ध्यानं कथं तृतीयं तु, वाचिकं संभवेदिह? ॥ १८ ॥ अत्रोच्यते—यथा मानसिकं ध्यानमेकाग्रं निश्चलं मनः । यथा च कायिकं ध्यानं, स्थिरः कायो निरेजनः ॥ १९ ॥ तथा यतनया भाषां, भाषमाणस्य शोभनाम् । दुष्टां वर्जयतो ध्यानं, वाचिकं कथितं जिनैः ॥ २० ॥ तथाहुः—"एवंविहा गिरा मे वत्तव्वा एरिसा न वत्तव्वा । इय वेयालिअवक्कस्स भासओ वाइगं झाणं ॥ २१ ॥" मनोवचःकाययोगान्नयन्नेकाग्रतां मुनिः । वर्त्तते त्रिविधे ध्याने, गणयन् भङ्गिकश्रुतम् ॥ २२ ॥ त्रैधेष्वपीति योगेषु, ध्यानत्वे किल निश्चिते । मुख्यैनैकतमेनैव, व्यपदेशः स्फुटो भवेत् ॥ २३ ॥ यथा सत्स्वपि दोषेषु, वातपित्तकफात्मसु । यदा भवेदुत्कटो यः, कुपितः स तदोच्यते ॥ २४ ॥ यथा गच्छन् राजमार्गे, नृपतिस्सपरिच्छदः । गच्छत्ययं नृप इति, मुख्यत्वाद्व्यपदिश्यते ॥ २५ ॥ तथा चित्तस्य मुख्यत्वाद्ध्यानं चित्तोत्थमुच्यते । वाक्काययोस्त्वमुख्यत्वात्तद्ध्याने नोच्यते पृथक् ॥ २६ ॥ ज्ञातविश्वस्वभावस्य, निस्सङ्गस्य महात्मनः । निर्ममस्य विरक्तस्य, भवेद्ध्याने स्थिरं मनः ॥ २७ ॥ नित्यं यतीनां युवतीपशुक्लीबादिवर्जितम् । विजनं शस्यते स्थानं, ध्यानकाले विशेषतः ॥ २८ ॥ महात्मनां हि शमिनां, ध्याननिश्चलचेतसाम् । न विशेषो जनाकीर्णे, पुरे वा निर्जने वने

१ ठाणेणं मोणंणं झाणेणमित्यत्र वाक्कायव्यापारनिषेधाय पदद्वयं पृथगुक्त्वा केवलमनोव्यापाराय ध्यानशब्दस्य प्रयोगात्.

॥ २९ ॥ ततो वाक्कायमनसां, समाधिर्यत्र जायते । भूतोपघातहीनोऽसौ, देशः स्याद् ध्यायतो मुनेः ॥ ३० ॥ यत्र योगसमाधानमुत्तमं लभते मुनिः । स ध्यानकालो दिवसनिशादिनियमस्तु न ॥ ३१ ॥ ध्यानस्थैर्यं प्रजायेतासनाद्यवस्थया यया । स्थितो निषण्णः सुप्तो वा, ध्यायेत्तस्यामवस्थितः ॥ ३२ ॥ यद्देशकालचेष्टास्ववस्थासु निखिलासु च । मुनीश्वराः शिवं प्राप्ता, क्षपिताशेषकल्मषाः ॥ ३३ ॥ तद्देशकालचेष्टानां, ध्याने कोऽपि न निश्चयः । यथा योगसमाधिः स्याद्यतितव्यं तथा बुधैः ॥ ३४ ॥ अत्रार्त्तरौद्रे दुर्ध्याने, स्मृते दुर्गतिदायिनी । शुभध्याने पुनर्धर्म्यशुक्ले स्वःशिवदायिनी ॥ ३५ ॥ एषां स्वरूपं यथा–तत्रार्त्तस्य पीडितस्य, रोगाकिञ्चनतादिभिः । लोभादिभिर्वा यद्ध्यानं, तदार्त्तं स्याच्चतुर्विधम् ॥ ३६ ॥ शब्दादीनामनिष्टानां, संबन्धे सति देहिनः । ध्यानं यत्तद्वियोगस्य, तदार्त्तं प्रथमं भवेत् ॥ ३७ ॥ अभीष्टानां च लब्धानां, शब्दादीनां निरन्तरम् । अविच्छेदस्य या चिन्ता, तद् द्वितीयं प्रकीर्त्तितम् ॥ ३८ ॥ आतङ्के सति तस्योपशान्तेश्चिन्ता तृतीयकम् । भुक्तानां कामभोगानां, स्मरणे स्यात्तुरीयकम् ॥ ३९ ॥ अन्ये त्वाहुश्चक्रिविष्णुसुरशक्रादिसंपदाम् । आशंसया निदानस्य, चिन्तने तत्तुरीयकम् ॥ ४० ॥ तथाहुः—"देविंदचक्कवट्टित्तणाइं गुणरिद्धिपत्थणामइयं । अहमं नियाणचिंतणमन्नाणाणुगयमचंतं ॥४१॥" ति ॥ क्रन्दनं शोचनं चाश्रुमोचनं परिदेवनम् । आर्त्तध्यानस्य चत्वारि, लक्षणान्याहुरार्हताः ॥ ४२ ॥ तत्र—क्रन्दनं स्याद्विरवणं, शोचनं दीनता मता । स्पष्टं तृतीयं तत् क्लिष्टवाक्याढ्यं परिदे-

१ भुक्तान् स्मृत्वा तल्लाभमिच्छुः भवान्तरेऽपि तत्राशां बध्नीयादिति.

वनम् ॥ ४३ ॥ आत्मवर्त्तित्वादलक्ष्यमप्येभिर्लक्षणैरदः । लक्ष्यते इत्यमून्याहुर्लक्षणान्यस्य धीधनाः ॥४४॥१॥ हिंसामृषाद्यतिक्रूराध्यवसायात्मकं भवेत् । परप्रद्वेषजं रौद्रध्यानं तच्च चतुर्विधम् ॥ ४५ ॥ हिंसा १ मृषा २ स्तैन्य ३ संरक्षणा ४ नुबन्धिभेदतः । तत्राद्यं प्राणिनां दाहवधबन्धादिचिन्तनम् ॥ ४६ ॥ पैशुन्यासभ्यवितथवचसां परिचिन्तनम् । अन्येषां द्रोहबुद्ध्या यन्मृषावादानुबन्धि तत् ॥ ४७ ॥ तथाहुः—"पिसुणासब्भासब्भूअभूयघायाइवयणपणिहाणं । मायाविणोऽभिसंधणपरस्स पच्छन्नपावस्स ॥ ४८ ॥" परद्रव्यापहरणचिन्तनं तीव्ररोषतः । तन्नायकोपघाताद्यैर्भवेत्स्तैन्यानुबन्धि तत् ॥४९॥ स्वीयस्वरक्षणार्थं यच्छङ्कमानस्य सर्वतः । परोपघाताभिप्रायः, संरक्षणानुबन्धि तत् ॥ ५० ॥ तथोक्तं—"सद्दाइविसयसाहणधणसंरक्खणपरायणमणिट्ठं । सव्वाभिसंकणपरोवघायकलुसाउलं चित्तं ॥ ५१ ॥" हिंसादिषु चतुष्केषु, यदेकासेवनं मुहुः । रौद्रध्यानस्य तद् ज्ञेयं, प्रथमं लक्षणं बुधैः ॥ ५२ ॥ चतुर्ष्वेषु प्रवृत्तिस्तु, द्वितीयं तस्य लक्षणम् । तथा कुशास्त्रसंस्कारात्मकादज्ञानदोषतः ॥ ५३ ॥ हिंसादिकेष्वधर्मेषु, धर्मबुद्ध्या प्रवर्त्तनम् । तृतीयं लक्षणं ज्ञेयं, चतुर्थं तु भवेदिदम् ॥ ५४ ॥ मरणान्तेऽपि संप्राप्ते, हिंसादेरनिवर्त्तनम् । महासंक्लिष्टमनसः, कालशौकरिकादिवत् ॥५५॥२॥ श्रुतचारित्रधर्माभ्यामनपेतं तु यद्भवेत् । तद्धर्म्यं ध्यानमुक्तं तच्चतुर्भेदं जिनोत्तमैः ॥ ५६ ॥ आज्ञाविचयसंज्ञं स्यात्, श्रुतार्थचिन्तनात्मकम् । अपायविचयं त्वाश्रवादिभ्योऽपायचिन्तनम् ॥ ५७ ॥ पुण्यपापफलचिन्ताविपाकविचयाभिधम् । संस्थानविचयं तु स्याल्लोकाकृत्यादिचिन्तनम् ॥ ५८ ॥ तथाहुः—"आप्तवचनं हि प्रवचनमाज्ञाविचयस्तदर्थनिर्ण-

यनम् १। आश्रवविकथागौरवपरीषहाद्यैरपायस्तु २ ॥ ५९ ॥ अशुभशुभकर्मपाकानुचिन्तनार्थो विपाकविचयः स्यात् ३। द्रव्यक्षेत्राकृत्यनुगमनं संस्थानविचयस्तु ४ ॥ ६० ॥" (प्रशमरतौ) रुची आज्ञानिसर्गाभ्यां, सूत्रविस्तारयो रुची। चतुर्द्धा रुचयो धर्मध्यानचिह्नचतुष्टयम् ॥ ६१ ॥ सूत्रव्याख्यानमाज्ञा स्यान्निर्युक्त्यादीह तत्र या। रुचिः श्रद्धानमेषाऽऽज्ञारुचिरुक्ता महर्षिभिः ॥ ६२ ॥ विनोपदेशं या तत्त्वश्रद्धा सा स्यान्निसर्गजा। सूत्रे श्रद्धा सूत्ररुचिस्तद्विस्तारेऽन्तिमा रुचिः ॥ ६३ ॥ तथोक्तं-"आगमउवएसाणा निसग्गओ जं जिणप्पणीयाणं। भावाणं सद्दहणं धम्मज्झाणस्स तं लिंगं ॥ ६४ ॥" धर्मध्यानस्य चत्वारि, भवन्त्यालम्बनान्यथ। सौधाद्यारोहणे रज्ज्वादिवद्यानि जिना जगुः ॥ ६५ ॥ वाचना च पृच्छना च, तथैव परिवर्त्तना। अनुप्रेक्षाऽथेत्यमूषां, स्वरूपमपि कीर्त्यते ॥ ६६ ॥ निर्जरार्थं विनेयानां, सूत्रदानादि वाचना। सूत्रादौ शङ्किते प्रश्नो, गुरूणां पृच्छना मता ॥ ६७ ॥ पूर्वाधीतस्य सूत्रादेरविस्मरणहेतवे। निर्जरार्थं च योऽभ्यासः, स भवेत्परिवर्त्तना ॥ ६८ ॥ सूत्रार्थानुस्मरणं चानुप्रेक्षेत्यभिधीयते। धर्मध्याने चतस्रोऽनुप्रेक्षाः प्रोक्ता इमाः पराः ॥ ६९ ॥ अन्विति ध्यानतः पश्चात्, प्रेक्षा त्वालोचनं हृदि। अनुप्रेक्षा स्यादसौ चाश्रयभेदात् चतुर्विधाः ॥ ७० ॥ एकत्वानित्यत्वाशरणत्वानां भवस्वरूपस्य। चिन्ता धर्मध्यानानुप्रेक्षाः स्युः क्रमादेताः ॥ ७१ ॥ (आर्या) एकोऽहं नास्ति मे कश्चिन्नाहमन्यस्य कस्यचित्। न तं पश्यामि यस्याहं, नासौ भवति यो मम ॥ ७२ ॥ इत्येकत्वानुप्रेक्षा। कायः सन्निहितापायः, संपदः पदमापदाम्। समागमाः स्वप्नसमाः, सर्वमुत्पादिभङ्गुरम् ॥ ७३ ॥ इत्यनित्यत्वानुप्रेक्षा। माता भूत्वा

दुहिता भगिनी भार्या च भवति संसारे। व्रजति सुतः पितृतां भ्रातृतां पुनः शत्रुतां चैव ॥ ७४ ॥ जन्मजरामरणभयैरभिद्रुते व्याधिवेदनाग्रस्ते। जिनवरवचनादन्यत्र चास्ति शरणं क्वचिल्लोके ॥ ७५ ॥ (आर्ये) गर्भोत्पत्तौ महादुःखं, महादुःखं च जन्मनि। मरणे च महादुःखमिति दुःखमयो भवः ॥ ७६ ॥ इति संसारानुप्रेक्षा ॥३॥ शोधयत्यष्टधा कर्ममलं शुक्लमिति स तत्। शुचं वा क्लमयतीति, शुक्लं तच्च चतुर्विधम् ॥७७॥ सविचारं स्यात्पृथक्त्ववितर्काख्यमिहादिमम्। तथैकत्ववितर्काख्यमविचारं द्वितीयकम् ॥ ७८ ॥ सूक्ष्मक्रियं चानिवृत्ति, शुक्लध्यानं तृतीयकम्। समुच्छिन्नक्रियं चैवाप्रतिपाति चतुर्थकम् ॥ ७९ ॥ उत्पादादिपर्यवाणामेकद्रव्यविवर्त्तिनाम्। विस्तारेण पृथग्भेदैर्वितर्को यद्विकल्पनम् ॥८०॥ नानानयानुसरणात्मकात्पूर्वगतश्रुतात्। तत्र ध्याने तत्पृथक्त्ववितर्कमिति वर्णितम् ॥ ८१ ॥ युग्मम्। अत्र च व्यञ्जनादर्थे, तथाऽर्थाद्व्यञ्जनेऽसकृत्। विचारोऽस्ति विचरणं, सविचारं तदीरितम् ॥ ८२ ॥ मनःप्रभृतियोगानामेकस्मादपरत्र च। विचारोऽस्ति विचरणं, सविचारं ततोऽप्यदः ॥८३॥ एवं च-यत्पृथक्त्ववितर्काढ्यं, सविचारं भवेदिह। तत्स्यादुभयधर्माढ्यं, शुक्लध्यानं किलादिमम् ॥ ८४ ॥ उक्तं च—"उप्पायट्ठिइभंगाइं पज्जयाणं जमेगदव्वंमि। नाणानयाणुसरणं पुव्वगयसुयाणुसारेण ॥ ८५ ॥ सवियारमत्थवंजणजोगंतरओ तयं पढमसुक्कं। होइ पुहुत्तवियक्कं सवियारमरागभावस्स ॥ ८६ ॥" अनेकेषां पर्यवाणामेकद्रव्यावलम्बिनाम्। एकस्यैव वितर्को यः, पूर्वगतश्रुताश्रयः ॥ ८७ ॥ स च व्यञ्जनरूपोऽर्थरूपो वैकतमो भवेत्। यत्रैकत्ववितर्काख्यं, तद्ध्यानमिह वर्णितम् ॥ ८८ ॥ न च स्याद्व्यञ्जनादर्थे, तथाऽर्था-

द्व्यञ्जनेऽपि च। विचारोऽत्र तदेकत्ववितर्कमविचारि च ॥ ८९ ॥ मनःप्रभृतियोगानामप्येकस्मात्परत्र नो। विचारोऽत्र तदेकत्ववितर्कमविचारि च ॥ ९० ॥ इदं ह्येकत्र पर्याये, योगचाञ्चल्यवर्जितम् । चिरमुज्जृम्भते दीप्रं, निर्वातगृहदीपवत् ॥ ९१ ॥ तथाहुः—"जं पुण सुनिप्पकंपं निवायसरणप्पईवमिव चित्तं। उप्पायट्ठिइभंगाइयाणमेगंमि पज्जाए ॥ ९२ ॥ अवियारमत्थवंजणजोगंतरओ तयं बिइयसुक्कं। पुव्वगयसुयालंबणमेगत्तवियारमवियक्कं ॥ ९३ ॥" क्रियोच्छ्वासादिका सूक्ष्मा, ध्याने यत्रास्ति कायिकी। निवर्त्तते न यत्सूक्ष्मक्रियं चैवानिवर्त्ति तत् ॥ ९४ ॥ स्याद्वर्द्धमान एवात्र, परिणामः क्षणे क्षणे। न हीयमानस्तदिदमनिवर्त्ति प्रकीर्त्तितम् ॥ ९५ ॥ तच्च निर्वाणगमनकाले केवलिनो भवेत्। रुद्धवाक्चित्तयोगस्य, वपुर्योगार्द्धरोधिनः ॥ ९६ ॥ उक्तं च—"निव्वाणगमणकाले केवलिणो दरनिरुद्धजोगस्स। सुहुमकिरियाऽनियट्टी तइयं तणुकायकिरियस्स ॥९७॥" समुच्छिन्नाः क्रियाः कायिक्याद्या योगनिरोधतः। यस्मिन् यच्चाप्रतिपाति, तच्छुक्लध्यानमन्तिमम् ॥ ९८ ॥ इदं त्ववस्थां शैलेशीं, प्राप्तस्याखिलवेदिनः। निरुद्धाशेषयोगस्य, शुक्लं परममीरितम् ॥९९॥ [अवश्यप्रतिपातवत्]। सिद्धत्वेऽपि हि संप्राप्ते, भवत्येतदवस्थितम्। न तु न्यूनाधिकं तेनाप्रतिपातीदमुच्यते ॥ ५०० ॥ इयं हि परमा कोटिः, शुक्लध्यानस्य निश्चिता। अतःपरं तन्नास्तीति, परमं शुक्लमुच्यते ॥ १ ॥ तथोक्तं—"तस्सेव य सेलेसीं गयस्स सेलव्व निप्पकंपस्स। वोच्छिन्नकिरियमप्पडिवाइ झाणं परमसुक्कं ॥ २ ॥" योगनिरोधपद्धतिस्तु द्रव्य-

१ आभवक्षयान्न प्रतिपततीत्येवार्थः अप्रतिपातिनः, न च सिद्धत्वे ध्यानं, कर्मक्षयाकरणात् चारित्राभावात् अयोगित्वान्ते श्रेण्यन्ताच्च।

लोकतो ज्ञेयेति। अव्यथं चाप्यसंमोहो, विवेकः स्यात्तथा परः। व्युत्सर्गश्च भवेच्छुक्लध्यानचिह्नचतुष्टयम् ॥३॥ यद्देवाद्युपसर्गेभ्यो, भयं तत्कथ्यते व्यथा। तदभावोऽव्यथं शुक्लध्यानलक्षणमादिमम् ॥ ४ ॥ देवादिमायाकृतस्य, सूक्ष्मार्थजनितस्य वा। संमोहस्येह मौढ्यस्याभावोऽसंमोह इष्यते ॥ ५ ॥ जीवस्य देहात्सर्वेभ्यः, संयोगेभ्यश्च शुद्धया। भिन्नत्वभावनं बुद्ध्या, स विवेको विवेचनात् ॥ ६ ॥ यन्निःसङ्गतयाऽङ्गस्य, परित्यागस्तथोपधेः। स व्युत्सर्गश्चतुर्थं स्याच्छुक्लध्यानस्य लक्षणम् ॥ ७ ॥ यदाहुः—"चालिज्जइ बीहेइ व धीरो न परीसहोवसग्गेहिं १। सुहुमेसु न संमुज्झइ भावेसु न देवमायासु २ ॥ ८ ॥ देहविवित्तं पिच्छइ अप्पाणं तहय सव्वसंजोगा ३। देहोवहिवुस्सग्गं निस्संगो सव्वहा कुणइ ४ ॥ ९ ॥" चत्वार्यालम्बनानि स्युः, शुक्लध्यानस्य च क्रमात्। कषायाणां क्षयात् क्षान्तिमार्दवार्जवमुक्तयः ॥ १० ॥ आत्मनोऽनन्तवर्त्तित्वानुप्रेक्षा प्रथमा भवेत् १। तथा विपरिणामानुप्रेक्षा प्रोक्ता द्वितीयिका २ ॥११॥ अनुप्रेक्षाऽशुभत्वस्या ३ पायानां ४ चेति नामतः। शुक्लध्याने चतस्रोऽनुप्रेक्षाः प्रेक्षाश्रयैः स्मृताः ॥१२॥ अनन्तकालं भ्रमतो, जीवस्य भवसागरे। भावनाऽनन्तवर्त्तित्वानुप्रेक्षा परिकीर्त्तिता ॥ १३ ॥ सा चैवं—"एसो अणाइनिहणे संसारे सागरुव्व दुत्तारे। नारयतिरिअनरामरभवेसु परिहिंडए जीवो ॥ १४ ॥" विविधा ये परीणामाः, वस्तूनां तद्विभावना। भवेद्विपरिणामानुप्रेक्षा प्रेक्षावतां प्रिया ॥ १५ ॥ तथाहि—"सव्वट्ठाणाइं असासयाइं इह चेव देवलोगे य। सुरअसुरनराईणं रिद्धिविसेसा सुहाइं च ॥ १६ ॥" क्षणभङ्गुरसंपत्तेर्विरूपस्य भवस्य यत्। विभावनाऽशुभत्वानुप्रेक्षा सा परिकीर्त्तिता ॥ १७ ॥ तथा-

हि—"धि द्धी संसारो जंमि जुआणो परमरूवगवियओ । मरिऊण जायइ किमी तत्थेव कलेवरे नियए ॥ १८ ॥" कषायेभ्योऽथाश्रवेभ्यः, प्रमादविषयादितः । अपायभावनाऽपायानुप्रेक्षा सा प्रकीर्त्तिता ॥ १९ ॥ यथा—"कोहो य माणो य अणिग्गहीया, माया य लोहो य पवड्ढमाणा । चत्तारि एए कसिणा कसाया, सिंचंति मूलाइं पुणब्भवस्स ॥ २० ॥" इत्यादि, इदं चार्थतः प्रायस्तृतीयाङ्गगतं । आद्येऽथ शुक्लध्यानस्य, ध्याते भेदद्वयेऽर्हताम् । घातिकर्मक्षयादाविर्भवेत्केवलमुज्ज्वलम् ॥ २१ ॥ ततो जानन्त्यनन्तानि, द्रव्याणि विविधानि ते । त्रैकालिकांश्च पर्यायान्, प्रतिद्रव्यमनन्तकान् ॥ २२ ॥ सर्वेषामपि जानन्ति, जीवानामागतिं गतिम् । स्थितिं चेतश्चिन्तितं च, कृतं भुक्तं निषेवितम् ॥ २३ ॥ न जानन्ति न पश्यन्ति, यत्तन्नास्ति जगत्त्रये । भवन्त्यतस्तेऽरहसोऽर्हन्तश्च जगदर्चिताः ॥ २४ ॥

यत्तृतीयभवे बद्धं, तीर्थकृन्नामकर्म तत् । प्राप्तोदयं विपाकेन, जिनानां जायते तदा ॥ २५ ॥ तस्मिन्नेव क्षणे देवेश्वरा आसनकम्पतः । केवलज्ञानमुत्पन्नं, सर्वे जानीयुरर्हताम् ॥ २६ ॥ ततः पूर्वोक्तया रीत्या, चतुष्षष्टिः सुरेश्वराः । आगच्छन्ति प्रमुदिता, ज्ञानोत्पादास्पदेऽर्हताम् ॥ २७ ॥ तत्र वायुकुमारा द्राग्, योजनप्रमितां महीम् । शोधयेयुः कचवरतृणाद्युत्सृज्य दूरतः ॥ २८ ॥ ततो मेघकुमारास्तां, सिञ्चन्त्यद्भिः सुगन्धिभिः । पञ्चवर्णैः पूजयन्ति, पुष्पैर्ऋत्वधिदेवताः ॥ २९ ॥ रचयन्ति ततः पीठं, व्यन्तरास्तत्र भूतले । भूमेः सपादक्रोशोच्चं, स्वर्णरत्नमणीमयम् ॥ ३० ॥ तत्र रूप्यमयं वप्रं, कुर्वते भवनाधिपाः । सहस्रैर्दशभिः प्राप्यं, सोपानानां भुवस्तलात् ॥ ३१ ॥ तच्च सोपानमेकैकमेकहस्तपृथूच्छ्रितम् । भूमेर्द्धनुःसहस्रे द्वे, सार्द्धे तेषां समुच्छ्रयः ॥ ३२ ॥ तस्य वप्रस्य भित्तिः स्यात्पञ्चचापशतोच्छ्रिता । द्वात्रिंशदङ्गुलोपेतत्रयस्त्रिंशद्धनुःपृथुः ॥ ३३ ॥ शोभन्ते कपिशीर्षाणि, तस्या भित्तेरुपर्यथ । निधौतस्वर्णसारेण, रचितानि स्फुरद्रुचा ॥ ३४ ॥ तस्मिन् वप्रे च चत्वारि, द्वाराणि रचयन्ति ते । नानारत्नमयान्युच्चैर्द्वारशाखादिमन्ति च ॥ ३५ ॥ प्रतिद्वारं तोरणानां, त्रयं मणिमयं सुराः । पाञ्चालिकामणिच्छत्रमकरध्वजमञ्जुलम् ॥ ३६ ॥ ध्वजांश्च मङ्गलान्यष्टौ, पुष्पदाम्नां तथाऽऽवलीः । रचयन्ति प्रतिद्वारं, कलशान् वेदिकां तथा ॥ ३७ ॥ युग्मं ॥ कृष्णागुरुतुरुष्कादिधूपान् दिव्यान् समन्ततः । वितन्वतीर्धूपघटीस्तन्वते निर्जरा बहूः ॥ ३८ ॥ कोणे कोणे च वप्रस्य, तस्य स्वादूदकाश्रिता । एकैका क्रियते वापी, मणिसोपानभृत् सुरैः ॥ ३९ ॥ प्राच्ये द्वारे द्वारपालः, सुरः स्यात्तस्य तुम्बरुः । दाक्षिणात्ये च खट्वाङ्गी, स्यात्कपाली च पश्चिमे ॥ ४० ॥ जटामुकुटधारी स्यादुदीच्यद्वारपालकः । तुम्बुरुर्नाम देवश्च, प्रतीहारोऽर्हतां भवेत् ॥ ४१ ॥ अथ तस्याद्यवप्रस्य, भवेन्मध्ये समन्ततः । प्रतरः समभूम्यात्मा, पञ्चाशच्चापविस्तृतः ॥ ४२ ॥ तिष्ठन्त्यत्र च यानानि, देवतिर्यग्नरा अपि । स्युः प्रत्येकं विमिश्रास्ते, प्रवेशनिर्गमोन्मुखाः ॥ ४३ ॥ ततः प्रतरसंपूर्त्तौ, सोपानानामुपक्रमः । भवेद् द्वितीयवप्रस्य, हस्तोच्चत्वायतिस्पृशाम् ॥ ४४ ॥ पञ्चानामिति सोपानसहस्राणामतिक्रमे । प्राकारः सुन्दराकारो, द्वितीयः प्राप्यते जनैः ॥ ४५ ॥ जात्यस्वर्णमयं तं च, कुर्युर्ज्योतिष्कनाकिनः । नानारत्नमयैर्दीप्रैः, कपिशीर्षैरलङ्कृतम् ॥ ४६ ॥ भित्त्युच्चत्वपृथुत्वादि, ज्ञेयमस्याद्यवप्रवत् । ज्ञेया चतुर्णां द्वाराणां, रचना-

ऽप्यखिला तथा ॥ ४७ ॥ जयाभिधाने देव्यौ द्वे, पूर्वस्यां द्वारपालिके । श्वेतवर्णे अभयया, राजमानकराम्बुजे ॥ ४८ ॥ मा भैषीरिति हस्तेन, प्रसृतेन प्रदर्शनम् । अभयानाम मुद्रेयं, श्रुता वृद्धानुवादतः ॥ ४९ ॥ याम्यद्वारे विजयाख्यौ, देव्यौ रक्ततनुद्युती । हस्तन्यस्ताङ्कुशे शोभां, बिभृतो द्वारपालिके ॥ ५० ॥ अजिते पश्चिमायां च, पीते पाशोल्लसत्करे । मकराङ्कयकरे नीले, उदीच्यामपराजिते ॥ ५१ ॥ तथोक्तं समवसरणस्तोत्रे—"जयविजयाऽजियअवराजियत्ति सिअअरुणपीअनीलाभा । बीए देवीजुअला अभयंकुसपासमगरकरा ॥ ५२ ॥" पञ्चाशतं धनूंषि स्यात्, प्रतरोऽत्रापि पूर्ववत् । तिष्ठन्त्यत्र च तिर्यञ्चः, सिंहव्याघ्रमृगादयः ॥५३॥ ऐशान्यां च भवत्यत्र, देवच्छन्दो मनोरमः । क्षणोत्तरक्षणेऽध्यास्ते, प्रभुर्यं सुरसेवितः ॥ ५४ ॥ अथोर्ध्वं पञ्चसोपानसहस्रातिक्रमे ततः । तृतीयः प्राप्यते वप्रो, जनैर्भाविमहोदयैः ॥ ५५ ॥ एनं रत्नमयं वप्रं, कुर्युर्वैमानिकाः सुराः । नानामणिमयैर्दीप्रैः, शालितं कपिशीर्षकैः ॥५६॥ भित्त्युच्चत्वपृथुत्वादि, द्वाराणां रचनापि च । अत्रापि पूर्ववद् ज्ञेया, विशेषस्त्वेष कथ्यते ॥ ५७ ॥ पूर्वस्यां द्वारपालोऽत्र, सोमो वैमानिकः सुरः । जात्यचामीकरज्योतिर्दधानः पाणिना धनुः ॥५८॥ दण्डपाणिर्यमो याम्यां, गौराङ्गो व्यन्तरामरः ।प्रतीच्यां पाशभृद्रक्तो, ज्योतिष्को वरुणः सुरः ॥ ५९ ॥ उत्तरस्यां च धनदो, भवनाधिपनिर्जरः । गदाहस्तः श्यामकान्तिर्भवति द्वारपालकः ॥ ६० ॥ तथोक्तं—"पिअसिअरत्ता सामा सुरवणजोइभवणा रयणवप्पे । धणुदंडपासगयहत्थ सोमजमवरुणधणयक्खा ॥६१॥" तस्य वप्रस्य मध्ये च, पीठं स्यात्समभूतलम् । धनुःशतानि षट् क्रोशमेकं च विस्तृतायतम्

॥ ६२ ॥ एतावदेव विस्तारमानमाद्यद्वितीययोः । वप्रयोरन्तरे किंतु, तत्पार्श्वद्वयमीलनात् ॥६३॥ तथाहि—स्याद्रूप्यवप्रात्पञ्चाशद्धनूंषि प्रतरोऽग्रतः । शताश्च द्वादशाध्यर्द्धाः, सोपानधनुषां ततः ॥ ६४ ॥ त्रयोदश शतान्येवं, धनुषामेकतोऽन्तरम् । रूप्यस्वर्णवप्रयोः स्यात्, परतोऽपि तथैव च ॥६५॥ पार्श्वयोरुभयोश्चैवं, स्याद्विस्तारे समुचिते । एकः क्रोशः षट् च चापशतमानं यथोदितम् ॥ ६६ ॥ मानमेवं स्वर्णरत्नवप्रान्तरेऽपि विस्तृतेः । एकः क्रोशः षट् शतानि, धनुषां भाव्यतां स्वयम् ॥ ६७ ॥ एवं त्रयाणां वप्राणां, व्यासमाने समुच्चिते । क्रोशत्रयं स्याद्धनुषामष्टादश शतानि च ॥ ६८ ॥ षट् वप्रभित्तयोऽत्र स्युरेकैकस्याश्च विस्तृतौ । स्युर्धनूंषि त्रयस्त्रिंशद्, द्वात्रिंशदङ्गुलानि च ॥ ६९ ॥ धनूंषि षड्गुणानि स्युरष्टानवतियुक् शतम् । अङ्गुलान्यपि षड्घ्नानि, स्युर्द्वानवतियुक् शतं ॥ ७० ॥ एषा चापद्वये तस्मिंश्चापराशौ नियोजिते । स्याच्चापद्विशती प्राच्यचापौघे सा नियोज्यते ॥ ७१ ॥ जातः क्रोशोऽस्मिंश्च पूर्वोदितैः क्रोशैस्त्रिभिर्युते । वृत्तं समवसरणं, जातं योजनसंमितम् ॥ ७२ ॥ अस्मिंश्च वृत्तसमवसरणे ये चतुर्दिशम् । सोपानानां सहस्राः स्युर्दश ते योजनाद्बहिः ॥ ७३ ॥ अयं भावः—अर्हत्सिंहासनाधःस्थभूभागादेकतो भुवि । क्रोशद्वयेन स्याद्बाह्यवप्रपर्यन्तभूतलम् ॥ ७४ ॥ चतसृष्वपि दिक्ष्वेवं, योगे च पार्श्वयोर्द्वयोः । आयामतो व्यासतश्च, पूर्णं स्यादेकयोजनम् ॥ ७५ ॥ बाह्यसोपानपर्यन्तभूतलं तु भवेत्ततः । पादाधिकैस्त्रिभिः क्रोशैर्जिनाधःस्थमहीतलात् ॥ ७६ ॥ सोपानानां सहस्रैर्यद्दशभिर्जायते किल । क्रोशः सपादस्तद्योगे, भवेन्मानं यथोदितम् ॥ ७७ ॥ भूमावलग्नं समवसरणं च भवेदिदम् । तथोर्ध्वमूर्ध्वं

सोपानरचनाभिस्समन्ततः ॥ ७८ ॥ रत्नवप्रस्य परिधिरेकं योजनमीरितम् । न्यूनत्रयस्त्रिंशदाढ्या, चापानां च चतुःशती ॥ ७९ ॥ द्वे योजने पञ्चषष्टियुक् चापाष्टशती तथा । द्विहस्ती त्र्यङ्गुलोना रैवप्रस्य परिधिर्भवेत् ॥ ८० ॥ त्रियोजनी चापशतास्त्रयस्त्रिंशास्त्रयोदश । हस्त एकोऽङ्गुलान्यष्टौ, परिधी रौप्यवप्रगः ॥ ८१ ॥ चतुरस्रेऽथ समवसरणे विस्तृतिर्भवेत् । सर्वासां वप्रभित्तीनामेकं चापशतं किल ॥ ८२ ॥ कोदण्डानां शताः पञ्चदशात्रान्तरमीरितम् । रूप्यस्वर्णवप्रभित्त्योः, प्रत्येकं पार्श्वयोर्द्वयोः ॥ ८३ ॥ अत्र पूर्वोक्तसोपानरुद्धक्षेत्रे पृथक्कृते । धनुःशतद्वयी सार्द्धा, शेषा प्रतर उह्यते ॥ ८४ ॥ एवं च—स्यात्सार्द्धक्रोशविस्तारान्तरो वप्रोऽत्र राजतः । विस्तारमीलने प्राग्वदुभयोरपि पार्श्वयोः ॥ ८५ ॥ स्वर्णवप्रान्तरव्यास, एकक्रोशमितो मतः । यतः क्रोशार्द्धमेकैकपार्श्वे व्यासो भवेदिह ॥ ८६ ॥ यदुक्तं समवसरणस्तोत्रे—"चउरंसे इगधणुसयपिहु वप्पा सड्ढकोसअंतरया । पढमबिया बिअतइआ कोसंतर पुव्वमिव सेसं ॥ ८७ ॥" यद्यप्यस्यावचूर्णावित्युक्तं दृश्यते–अत्र चान्तरं पूर्ववत्प्रतरसोपानापेक्षया न गण्यते, किंतु आद्याद् द्वितीयस्यैकतः १५०० धनूंषि, परतोऽप्येवं, द्वितीयात्तृतीयस्यैकतः १००० धनूंषि, द्वितीयपार्श्वेऽप्येवं सन्तीत्येवमेव ज्ञेयं, एवमेव पूर्वाचार्याम्नायादिति, तथाप्यत्र सुवर्णवप्रे एकस्मिन् पार्श्वे एकधनुःसहस्रान्तरे सार्द्धद्वादशधनुःशतक्षेत्रसंमातव्यानि एकैकहस्तपृथुलानां सोपानानां पञ्चसहस्राणि कथं संमान्तीति बहुश्रुतेभ्यो भावनीयमिति । रत्नप्राकारविस्तारो, भवेत्तत्रापि पूर्ववत् । क्रोशेनैकेन धनुषां,

१ सोपानानामूर्ध्वा पट्टिका स्यात् चेत् न विरोधः, यद्वोपर्यारुह्य किंचिदुत्तरणीयं स्यात् ।

शतैः षड्भिश्च संमितः ॥ ८८ ॥ वप्रत्रयान्तरव्यासे, पूर्वोक्त इति मीलिते । सार्द्धं क्रोशत्रयं स्यात् षट्शती च धनुषामिह ॥ ८९ ॥ सुवर्णरत्नप्राकारभित्तीनां च चतसृणाम् । चतुर्धनुःशतव्यासयोगे भवति योजनम् ॥ ९० ॥ रूप्यवप्रस्य भित्तेस्तु, विस्तृतिर्या धनुःशतम् । सा न गण्या योजनेऽस्मिन्, बाह्यसोपानकान्यपि ॥ ९१ ॥ त्रयाणामपि वप्राणां, परिधिस्तु स्वयं बुधैः । चतुरस्रतया भाव्यो, व्यासमानाच्चतुर्गुणः ॥ ९२ ॥ कोणे कोणे च भवतो, द्वे द्वे वाप्याविहोत्तमे । उक्तं च वक्ष्यमाणं च, शेषमत्रापि पूर्ववत् ॥ ९३ ॥ अथो तृतीयवप्रे यत्, प्रागुक्तं समभूतलम् । तस्य मध्ये पीठमेकं, मणिरत्नमयं भवेत् ॥ ९४ ॥ तत्स्याज्जिनतनूच्छ्रायपरिमाणसमोच्छ्रयम् । चतुर्द्वारं त्रिसोपानरमणीयं चतुर्दिशम् ॥ ९५ ॥ विष्कम्भायामतस्तच्च, कोदण्डानां शतद्वयम् । क्रोशद्वयेन सार्द्धेन, भवत्युच्चैर्महीतलात् ॥ ९६ ॥ यदेकहस्तोत्तुङ्गानां, सोपानानां सहस्रकैः । विंशत्या क्रोशयोर्युग्मं, सार्द्धमेवोच्छ्रयो भवेत् ॥ ९७ ॥ तच्च सिंहासनाधःस्थधरायाः पीठिकावधि । उच्छ्रयस्य भवेन्मानं, समश्रेणिविवक्षया ॥ ९८ ॥ कर्णभूमिस्तु भगवत्सिंहासनस्य मूलतः । बाह्यसोपानमूलान्तं, रज्जुर्विस्तार्यते यदि ॥ ९९ ॥ अष्टौ चापसहस्राणि, द्विशताभ्यधिकानि तत् । भवन्त्येकस्तथा हस्तोऽङ्गुलानि च दशोपरि ॥ ६०० ॥ जिनासनाद्बाह्यवप्रशीर्षावधि तु कर्णभूः । धनुषां षट् सहस्राणि, त्र्यधिका च चतुःशती ॥ १ ॥ एकादशाङ्गुलान्येवं, सर्वतोऽपि विभाव्यताम् । लीलावत्युक्तरीत्या च, कार्या गणितभावना ॥ २ ॥ मध्यदेशेऽस्य पीठस्य, स्यादशोकस्तरूत्तमः । विस्तीर्णशाखो नीरन्ध्रच्छायो योजनविस्तृतः ॥ ३ ॥ तत्तज्जिनवपुर्मानात्, स द्वादशगुणोन्नतः । शश्वत्पुष्पच्छत्रकेतुपताका-

तोरणादियुक् ॥ ४ ॥ अत्र समवसरणस्तोत्रावचूर्णिः—"अस्य च जिनतनुद्वादशगुणोचस्य वप्रभित्तितो बहिर्निर्गमाभावेन योजनपृथुत्वं दुर्घटं, परमेतदुपरिस्थायितुङ्गतरसालवृक्षेण कृत्वाऽस्य योजनपृथुत्वं संभाव्यते, उक्तं च समवायाङ्गे—"चउवीसाए तित्थयराणं चउवीसं चेइयरुक्खा होत्था, तंजहा—निग्गोह १ सत्तवण्णे २ साले ३ पिअय ४ प्पिअंगु ५ छत्ताहे ६ । सरिसे ७ अ नागरुक्खे ८ माली य ९ पिलक्खुरुक्खे १० य ॥ ५॥ सिंदुग ११ पाडल १२ जंबू १३ आसोत्थे १४ खलु तहेव दहिवन्ने १५। नंदीरुक्खे १६ तिलए १७ अंबयरुक्खे १८ असोगे १९ य ॥ ६ ॥ चंपय २० बउले य २१ तहा वेडसरुक्खे २२ तहेव धवरुक्खे २३। साले य २४ वद्धमाणस्स चेइयरुक्खा जिणवराणं॥ ७॥ बत्तीसं धणुयाइं चेइयरुक्खे य वद्धमाणस्स। निचोउगो असोओ उच्छन्नो सालरुक्खेण ॥ ८॥ तिन्नेव गाउआइं चेइयरुक्खो जिणस्स उसभस्स। सेसाण जिणाणं पुण सरिराओ बारसगुणो उ ॥ ९ ॥ सच्छत्ता सपडागा सवेइया तोरणेहिं उववेया। असुरसुरगरुलमहिया चेइयरुक्खा जिणवराणं ॥ १० ॥ 'चेइअरुक्खत्ति' चैत्यवृक्षा ज्ञानोत्पत्तिवृक्षाः, चतुर्थगाथायां 'बत्तीसं धणुआइं'ति 'असोगवरपायवं जिणउच्चत्ताओ बारसगुणं विउव्वइ' इत्यावश्यकचूर्णिवचनात्सप्तहस्तमानाद्वीरस्वामिदेहाद् द्वादशगुणीकृतः सन् २१ धनूंषि भवत्यशोकः, तदुपरि ११ धनुर्मानः सालवृक्षश्च स्यात्, उभयोर्मीलने ३२ धनूंषि चैत्यद्रुमो वीरस्येति संप्रदायः, तथा 'निचोउगो' नित्यं ऋतुरेव पुष्पादिकालोऽस्येति नित्यर्तुक इति समवसरणस्तवावचूर्णौ। अत्र श्रीवीरचैत्यवृक्षाशोकवृक्षयोः समुदितयोर्द्वात्रिंशद्धनुर्मानत्वमुक्तं, शेषाणामप्यर्हतां स्वस्वशरीरमानाद् द्वादशगुणत्वं चैत्यतरूणामूचे तथापि पूर्वोक्तानुपपत्तिस्तदवस्थैव, पञ्चधनुःशतोच्चाया वप्रभित्तेरुपरि भूत्वा तच्छाखानां बहिः प्रसरणस्य दुरुपपादत्वात्, जिनाङ्गानि हि उत्सेधाङ्गुलेन पञ्चधनुःशतादिमानानि स्युः, वप्रभित्तिस्तु वर्त्तमानजिनात्माङ्गुलेन पञ्चधनुःशतमानेत्यादि सम्यक् चिन्तनीयं, तेन यदि दिव्यानुभावाद्वप्रभित्तिमध्यभागेनाशोकचैत्यवृक्षाणां शाखाः प्रथमवप्राद्बहिः प्रसर्पेयुस्तदा किमनुपपन्नं स्यादित्यवधार्यं, अन्यथा वा यथाऽऽगमं परिभावनीयमिदमिति ॥ न्यग्रोधाद्या अमी ज्ञानोत्पत्तिवृक्षा यथायथम्। सर्वेषामर्हतां भाव्या, अशोकोपरिवर्त्तिनः ॥ ११ ॥ तस्याशोकस्य मूले च, देवच्छन्दोऽर्हतां भवेत्। सिंहासनानि चत्वारि, तत्र च स्युश्चतुर्दिशम् ॥ १२॥ तानि स्वर्णमयान्युद्यद्रत्नालीखचितानि च। जिनं द्रष्टुं कृतलक्षाक्षाणीवानेकहीरकैः ॥ १३ ॥ पुरश्चैकैकमुद्योतिरत्नज्योतिर्भरैर्लसत्। पादपीठं धृतोल्लासमिवार्हत्पदसंगमे ॥१४॥ प्रतिसिंहासनं प्रौढच्छत्राणां स्यात्त्रयं त्रयम्। उपर्युपरिसंस्थायिमौक्तिकश्रेण्यलङ्कृतम् ॥ १५॥ तथाऽऽहुः—तवोर्ध्वमूर्ध्वं पुण्यर्द्धिक्रमसब्रह्मचारिणी। छत्रत्रयी त्रिभुवनप्रभुत्वप्रौढिशंसिनी॥ १६॥" प्रतिसिंहासनं चन्द्रचारुचामरधारिणौ। सुरौ द्वौ द्वावुभयतः, सर्वालङ्कारभासुरौ ॥ १७॥ सिंहासनस्य पुरतः, सुवर्णकमलस्थितम्। चतुर्दिशं धर्मचक्रमेकैकं भानुजित्वरम्॥ १८ ॥ तच्चार्हतां त्रिभुवनधर्मचक्रित्वसूचकम्। स्फुरज्ज्योतिः स्मृतमपि, प्रतिपक्षमदापहम् ॥ १९ ॥ सिंहासनं धर्मचक्रं, ध्वजश्छत्रं च चामराः। चरन्त्याकाशमार्गेण, क्षितौ विहरति प्रभौ ॥ २० ॥ तथाहुः—"आगासगएणं

१ शाखानिर्गमो न भवति यावत् तावत एवात्र विवक्षितत्वं, तेन योजनप्रमाणत्वे वप्रभित्तिबहिर्गमने च स्याद् घटना।



॥ ४४६ ॥

चक्केणं आगासगएणं छत्तेणं आगासगएणं सपायपीढेणं सिंहासणेणं आगासगयाहिं सेअवरचामराहिं" इत्यादि । चतुर्दिशं च चत्वारः, सहस्रयोजनोच्छ्रिताः । घण्टालघुपताकादिमण्डिताः स्युर्महाध्वजाः ॥ २१ ॥ तत्र धर्मध्वजः प्राच्यां, याम्यां मानध्वजो भवेत् । गजध्वजः पश्चिमायामुदक् सिंहध्वजो महान् ॥ २२ ॥ यदत्र चापक्रोशादि, मानमुक्तं यथाऽऽस्पदम् । भवेदत्राधिकृतजिनात्माङ्गुलमानतः ॥ २३ ॥ तदुक्तं—"सव्वं माणमिणं नियनियकरेणे"ति । पीठं च चैत्यवृक्षं चासनं च छत्रचामरान् । सदेवच्छन्दकादीनि, कुर्वन्ति व्यन्तरामराः ॥ २४ ॥ साधारणोऽयं समवसरणे कथितो विधिः । सर्वमेकोऽप्यदः कुर्यात्, कश्चिद्भक्त्या सुरो महान् ॥ २५ ॥ हर्षोत्कर्षात्सिंहनादं, तत्र कुर्वन्ति नाकिनः । समापतन्तः स्वर्गेभ्यो, वादयन्ति च दुन्दुभिम् ॥ २६ ॥ तत्र सूर्योदये स्वामी, द्वयोः कनकपद्मयोः । क्रमेण स्थापयन् पादौ, सुरसंचार्यमाणयोः ॥ २७ ॥ अन्वीयमानः शेषैश्च, सप्तभिः स्वर्णपङ्कजैः । एवं निजपदन्यासकृतार्थितनवाम्बुजः ॥ २८ ॥ पूर्वद्वारेण समवसरणे प्रविशत्यथ । प्रदक्षिणीकृत्य पूर्वसिंहासने निषीदति ॥ २९ ॥ त्रिभिर्विशेषकम् ।

पादपीठन्यस्तपादः, कृततीर्थनमस्कृतिः । विधत्ते देशनां स्वामी, गम्भीरमधुरध्वनिः ॥ ३० ॥ तीर्थं नाम श्रुतज्ञानं, यद्वा सङ्घश्चतुर्विधः । आद्यो वा गणभृत्तेन, तीर्यते यद्भवाम्बुधिः ॥ ३१ ॥ तथोक्तं—"तित्थं भंते ! तित्थं तित्थयरे तित्थं ?, गो० ! अरहा ताव नियमा तित्थयरे, तित्थं पुण चाउव्वण्णो संघो, पढमगणहरो वे"ति भगवतीसूत्रे । अर्हंश्चैतत्पूर्विका यत्तथा पूजितपूजकः । लोकोऽप्यर्हत्पूजितत्वात्पूजयेत्तीर्थमादरात् ॥ ३२ ॥

॥४४७॥

ततस्तीर्थं नमस्यर्हन्, कृतकृत्योऽपि वा यथा । धर्मं कथयति स्वामी, तथा तीर्थं नमस्यति ॥ ३३ ॥ तथाहुः श्रीभद्रबाहुस्वामिपादाः—"तप्पुव्विया अरहया पूइयपूआ य विणयकम्मं च । कयकिच्चोऽवि जह कहं कहए णमए तहा तित्थं ॥ १ ॥" अस्य वृत्तौ—"तीर्थं–श्रुतज्ञानं तत्पूर्विकाऽर्हत्ता, तदभ्यासप्राप्ते"रिति । वक्ष्यमाणैर्गुणैः पञ्चत्रिंशताऽलङ्कृता सदा । व्याप्नोत्यायोजनं वाणी, सर्वभाषानुगा प्रभोः ॥ ३४ ॥ तथाहुः श्रीहेमसूरयः काव्यानुशासने—"अकृत्रिमस्वादुपदां, परमार्थाभिधायिनीम् । सर्वभाषापरिणतां, जैनीं वाचमुपास्महे ॥ ३५ ॥" तथा—"देवा दैवीं नरा नारीं, शबराश्चापि शाबरीम् । तिर्यञ्चोऽपि च तैरश्चीं, मेनिरे भगवद्गिरम् ॥ ३६ ॥" यथा जलधरस्याम्भ, आश्रयाणां विशेषतः । नानारसं भवत्येवं, वाणी भगवतामपि ॥ ३७ ॥ स्यात्प्रभोर्मूलभाषा च, स्वभावादर्द्धमागधी । स्यातां द्वे लक्षणे ह्यस्यां, मागध्याः प्राकृतस्य च ॥ ३८ ॥ येनैकेनैव वचसा, भूयसामपि संशयाः । छिद्यन्ते वक्ति तत्सार्वो, ज्ञाताशेषवचोविधिः ॥ ३९ ॥ क्रमच्छेदे संशयानामसंख्यत्वाद्वपुष्मताम् । असंख्येनापि कालेन, भवेत्कथमनुग्रहः? ॥ ४० ॥ शब्दशक्तेर्विचित्रत्वात्, संतीदृंशि वचांसि च । प्रयुक्तैरुत्तरं यत्स्याद्युगपद्भूयसामपि ॥ ४१ ॥ सरःशरस्वरार्थेन, भिल्लेन युगपद्यथा । सरो नत्थित्तिवाक्येन, प्रियास्तिस्रोऽपि बोधिताः ॥ ४२ ॥ तथोक्तं—"भिल्लस्स तिन्नि भज्जा एगा मग्गेइ पाणियं पाहि । बीया मग्गइ हरिणं तइया गवरावए गीयं ॥ ४३ ॥" प्रष्टुमाकाङ्क्षितो योऽर्थः, प्राक् संदिग्धश्च यो भवेत् । येन वा यस्य वैराग्यं, यो वा यस्यावबोधकृत् ॥ ४४ ॥ सर्वोऽपि लोकः प्रत्येकं, तमर्थमवबुध्यते । अर्हदुचारितादेकवाक्यादप्यति-

शायिनः ॥४५॥ युग्मम् । अविच्छेदेन भगवान्, विधत्ते देशनां यदि । तदा नोद्विजते श्रोता, यावज्जीवमहर्निशम् ॥ ४६ ॥ न क्षुत्तृष्णा न च व्याधिः, काचिदाधिश्च न स्पृशेत् । शृण्वतो भगवद्वाणीं, सकलानपि देहिनः ॥४७॥ माधुर्यं भगवद्वाण्या, वाचां यद्यप्यगोचरम् । तथापि सौख्यवन्मुक्तेरौपम्येन निरूप्यते ॥ ४८ ॥ यथाऽऽसीद्वणिजः कोऽपि, मितंपचशिरोमणिः । आतृप्ति नात्मनाऽप्याद, योऽन्नं लोभ इवाङ्गभृत् ॥ ४९ ॥ अन्नं नाजीर्यदन्येषां, यस्मिन् पश्यति भक्षितम् । यः सिक्थाशङ्कया पश्यन्, स्थालीक्षालनवार्यपि ॥५०॥ लिहति स्म स्वयं स्थालीं, योऽसकृत्पाणिना भृशम् । काका वराकाः श्वानो वा, किं लिहेयुस्तदङ्गणे? ॥५१॥ युग्मम् । जना नोच्चारयन्ति स्मावश्यकेऽपि प्रयोजने । यन्नाम जातूक्ते त्विष्टदेवान् श्रेयोऽर्थमस्मरन् ॥५२॥ भार्या तस्यानुरूपाऽऽसीद्या शुनीव वनीपकम् । दूरादपि क्षोभयति, दुर्वाक् तृष्णेव जङ्गमा ॥५३ ॥ आसीद्दासी च तस्यैका, जरती गरतीव्ररुक् । क्षुज्जराजर्जरा दीना, कृशा मूर्तेव दुर्दशा ॥ ५४ ॥ प्रातः स्माह वणिक्पत्नी, तां रण्डे ! याहि काननम् । एधांस्याहर भूयांसि, न दास्याम्यन्यथाऽशनम् ॥५५॥ प्रतिपद्य वचस्तस्याः, क्षीणोपायाश्रयाऽगमत् । वनं शनैः शनैर्यष्टिमवष्टभ्य सुतामिव ॥ ५६ ॥ तत्रान्यच्छिन्नकाष्ठानां, शिलोञ्छं छेदनाक्षमा । संगृह्य श्रेष्ठिनी तुष्ट्यै, सामर्थ्याधिकवीवधम् ॥ ५७ ॥ कृत्वा शिरसि तृट्तापक्षुत्खेदखेदविह्वला । पुरस्तस्या ढौकयित्वा, दैन्यादन्नं ययाचताम् ॥ ५८ ॥ युग्मं ॥ निस्त्रिंशा निस्त्रपा सैवं, तामभाषिष्ट दुष्टधीः । अल्पीयांसि किमेधांसि, रे रे रण्डे ! त्वमाहरः ? ॥ ५९ ॥ काष्ठैः प्रज्वाल्यते क्षुद्रैर्नैतावद्भिर्भवल्यपि । गृहं मे भक्षितं सर्वं, रेऽकिञ्चित्करया त्वया

॥ ६० ॥ जरत्युवाच हे मातर्दीनायां मयि मा कुपः । भक्ष्यमुद्धरितं किञ्चिद्यच्छ क्षुत्पीडिताऽस्म्यहम् ॥ ६१ ॥ पुनरप्याहरिष्यामि, स्वस्थीभूय क्षणान्तरे । शरणं निःशरण्यायास्त्वमेवासि ममाम्बिके ! ॥ ६२ ॥ सा प्रोचे जनकास्थीनि, खाद प्रश्रवणं पिब । मृत्वा स्वस्था भवाद्यापि, म्रियसे किं न दुर्मरे ? ॥ ६३ ॥ आनीतेभ्यश्चतुर्गुणेषु, पुनरप्याहृतेषु रे । काष्ठेषु तुभ्यं दास्यामि, भक्ष्यं तद्गच्छ सत्वरम् ॥६४॥ तथैव गत्वा साऽरण्ये, काष्ठभारं चतुर्गुणम् । कष्टेन महतोच्चित्य, निदधौ मूर्ध्नि दुर्वहम् ॥ ६५ ॥ प्रस्फुटद्धृदया श्वासैरारोहतीव भूधरम् । उत्फुल्लगल्लप्रसरत्फूत्कारा भुजगीव च ॥६६॥ स्नातेव क्लिन्नसर्वाङ्गचीवरा स्वेदनिर्झरैः । पीतमद्येव निश्चेष्टा, प्रपतन्ती पदे पदे ॥६७॥ पतन्तमप्यादधती, भारं मूर्ध्नि पुनःपुनः । रुष्टाऽभीष्टमिवानिष्टमपि वेश्येव गर्द्धना ॥६८॥ प्राप्तपाताऽप्यवष्टब्धा, यष्ट्या जीर्णकुटीव सा । प्रकम्पमानसर्वाङ्गोत्पन्नशीतज्वरेव च ॥६९॥ विविक्षुरिव भूम्यन्तर्न्यग्भूता भूरिभारतः । मृत्युं संभाषमाणेव, हृदि न्यस्तकरा मुहुः ॥ ७० ॥ क्षुत्क्षीणजठरास्थित्वक्शेषाशेषाऽसुखाश्रिता । समन्ताद्विश्लथा शुष्कशमीवाऽऽततकोटरा ॥७१॥ असकृद्रसनालीढसृक्का शुष्कगलाधरा । दन्तशून्याऽऽस्यविगलल्लालाक्षिक्षरदश्रुका ॥ ७२ ॥ क्षणे क्षणे स्मरन्ती तं, वणिक्पत्न्याः पराभवम् । भक्ष्यं दास्यति सा नो वेत्येवं चिन्ताऽग्निचुम्बिता ॥७३॥ अनन्यगतिकत्वेनागच्छन्ती मन्दिरं प्रति । यावत्साऽऽयाति समवसरणस्यान्तिके प्रभोः ॥७४॥ तावत्कण्टकमुद्धर्तुं, सोच्चिक्षेप निजं क्रमम् । न्यास्थत् पाणिं च तत्र स्वं, तदा तत्कर्णकोटरे ॥७५॥ प्रविवेशार्हतां वाणी, पीयूषद्रवपेशला । शुश्राव सैकचित्ता तां, विस्मृताखिलवेदना ॥७६॥ एकादशभिः कुलकम् । द्विशत्यब्दसहस्राणि,

भगवान् देशनां यदि । तस्याश्च तावदायुश्चेत्तर्हि साऽवस्थिता तथा ॥ ७७ ॥ शृणोत्येवोदूढभारा, पादं न्यस्यति न क्षितौ । न स्मरेत् क्षुत्तृडाद्यार्तिं, नाप्युद्धरति कण्टकम् ॥७८॥ युग्मम् । ईदृग्रसाया भगवद्वाण्याः स्वाभाविकानिह । पञ्चत्रिंशतमित्याहुर्गुणान् श्रीहेमसूरयः ॥७९॥ "संस्कारवत्त्व १ मौदात्त्य २मुपचारपरीतता ३। मेघगम्भीरघोषत्वं ४, प्रतिनादविधायिता ५ ॥ ८० ॥ दक्षिणत्व ६ मुपनीतरागत्वं च ७ महार्थता ८। अव्याहतत्वं ९ शिष्टत्वं १०, संशयानामसंभवः ११ ॥ ८१ ॥ निराकृतान्योत्तरत्वं १२, हृदयङ्गमताऽपि च १३ । मिथः साकाङ्क्षता १४ प्रस्तावौचित्यं १५ तत्त्वनिष्ठता १६ ॥ ८२ ॥ अप्रकीर्णप्रसृतत्व १७ मस्वश्लाघान्यनिन्दिता १८ । अभिजात्य १९ मतिस्निग्धमधुरत्वं २० प्रशस्यता २१ ॥ ८३ ॥ अमर्मवेदितौ २२ दार्यं २३, धर्मार्थप्रतिबद्धता २४ । कारकाद्यविपर्यासो २५, विभ्रमादिवियुक्तता २६ ॥ ८४ ॥ चित्रकृत्त्व २७ मद्भुतत्वं २८, तथानतिविलम्बिता २९ । अनेकजातिवैचित्र्य ३०मारोपितविशेषता ३१ ॥ ८५ ॥ सत्त्वप्रधानता ३२ वर्णपदवाक्यविविक्तता ३३ । अव्युच्छित्ति ३४ रखेदित्वं ३५, पञ्चत्रिंशच्च वाग्गुणाः ॥ ८६ ॥"

अथार्हन्नीदृशा वाण्या, धर्मं पञ्चमहाव्रतम् । साधूनां श्रावकाणां च, दिशति द्वादशव्रतम् ॥ ८७ ॥ अहिंसासुनृतास्तेयब्रह्मचर्यापरिग्रहाः । महाव्रतानि पञ्चेति, निर्ग्रन्थानां महात्मनाम् ॥ ८८ ॥ केचित्कालविशेषेण, चत्वार्येवादिशन्ति च । महाव्रतानि स्त्रीत्यागसंग्रहो ह्यपरिग्रहे ॥ ८९ ॥ अणुव्रतानि पञ्चादौ, त्रीणि गुणव्रतानि च । शिक्षाव्रतानि चत्वारि, व्रतानि गृहिणामिति ॥ ९० ॥ संकल्प्य त्रसजीवानां, निरपेक्षान्निरागसाम् । प्राणघातान्निवृत्तिर्या, प्रथमं तदणुव्रतम् ॥ ९१ ॥ कन्यागोभूम्यलीकेभ्यो, न्यासापहरणाच्च या । निवृत्तिः कूटसाक्ष्याच्च, द्वितीयं तदणुव्रतम् ॥ ९२ ॥ सन्धिग्रन्थ्यादिभेदाद्यैः, राजनिग्रहकारि यत् । चौर्यं तस्मान्निवृत्तिर्या, तृतीयं तदणुव्रतम् ॥ ९३ ॥ स्वदारैरेव संतुष्टिः, स्वीकृतैर्जनसाक्षिकम् । निवृत्तिर्वाऽन्यदारेभ्यश्चतुर्थं तदणुव्रतम् ॥ ९४ ॥ परिग्रहस्य सत्तेच्छापरिमाणान्नियन्त्रणा । परिग्रहपरीमाणं, पञ्चमं तदणुव्रतम् ॥ ९५ ॥ सीमा नोल्लङ्घ्यते यत्र, कृता दिक्षु दशस्वपि । ख्यातं दिक्परिमाणाख्यं, प्रथमं तद्गुणव्रतम् ॥ ९६ ॥ भोगोपभोगद्रव्याणां, मानमाजन्म चान्वहम् । क्रियते यत्र तद्भोगोपभोगविरतिर्व्रतम् ॥ ९७ ॥ तत्र च—सकृदेव भुज्यते यः, स भोगोऽन्नस्रगादिकः । पुनः पुनः पुनर्भोग्य, उपभोगोऽङ्गनादिकः ॥ ९८ ॥ द्वाविंशतेरभक्ष्याणामनन्तकायिनामपि । यावज्जीवं परीहारः, कीर्त्यतेऽस्मिन् व्रते जिनैः ॥ ९९ ॥ तथाहुः—"पंचुंबरि ५ चउ विगई ९ हिम १० विस ११ करगा १२ य सव्वमट्टी य १३ । रयणीभोअणगं चिय १४ बहुबीअ १५ अणंत १६ संधाणं १७ ॥ ७०० ॥ घोलवडां १८ वायंगण १९ अमुणियनामाणि फुल्लफलयाणि २० । तुच्छफलं २१ चलिअरसं २२ वज्जेह अभक्ख बावीसं ॥ १ ॥" उदुम्बरवटप्लक्षकाकोदुम्बरशाखिनाम् । पिप्पलस्य चेत्यभक्ष्यमार्याणां फलपञ्चकम् ॥ २ ॥ मद्यं १ मांसं २ नवनीतं ३, क्षौद्रं चेति ४ चतुष्टयम् । विकृतीनामभक्ष्यं स्याच्छ्रद्धालूनां शुभात्मनाम् ॥३॥ द्विदलान्नं पर्युषितं, शाकपूपादिकं च यत् । दध्यहर्द्वितयातीतं, कथितान्नफलादिकम् ॥ ४ ॥ वर्षासु पक्षात्परतः, शीतर्त्तौ मासतः परम् । पक्वान्नं विंशतिदिनातिक्रमे ग्रीष्म एव च ॥ ५ ॥ इत्याद्यभक्ष्यं चलितरसमुक्तं जिनेश्वरैः । द्वीन्द्रि-

यत्रसजीवानां, यदुत्पत्तिर्भवेदिह ॥ ६ ॥ शेषाण्यभक्ष्याणि प्रतीतानि। अनन्तकायनामानि प्रागुक्तान्येव। पापोपदेशो विविधः १, पापोपकरणार्पणम् २। आर्त्तरौद्राभिधे ध्याने ३, प्रमादाचरणं ४ तथा ॥ ७ ॥ चतुर्भेदादित्यनर्थदण्डाद्विनिवर्त्तनम्। श्रावकाणां तदाख्यातं, तार्त्तीयीकं गुणव्रतम् ॥ ८ ॥ विषयाश्च कषायाश्च, निद्रा च विकथापि च। मद्यं चेति परित्याज्याः, प्रमादाः पञ्च सात्त्विकैः ॥ ९ ॥ राज्ञां स्त्रीणां च देशानां, भक्तानां विविधाः कथाः। संग्राम १ रूप २ सद्वस्तु ३ स्वादा ४ द्या विकथाः स्मृताः ॥ १० ॥ मुहूर्त्तावधि सावद्यव्यापारपरिवर्जनम्। आद्यं शिक्षाव्रतं सामायिकं स्यात्समताजुषाम् ॥ ११ ॥ देशावकाशिकं नाम, दिक्संक्षेपो दिनं प्रति। चतुर्दशानां संक्षेपो, नियमानामुतान्वहम् ॥ १२ ॥ ते चामी—सचित्त १ दव्व २ विगई ३ वाणह ४ तंबोल ५ वत्थ ६ कुसुमेसु ७। वाहण ८ सयण ९ विलेवण १० बंभ ११ दिसि १२ ण्हाण १३-भत्तेसु १४ ॥ १३ ॥” पौषं धर्मस्य धत्ते यत्, तद्भवेत्पौषधव्रतम्। आहार १ देहसत्कारा २ ब्रह्म ३ व्यापार ४-वर्जनम् ॥ १४ ॥ चतुर्विधः स्यादाहारोऽशनं तत्रौदनादिकम्। पानं सुराऽखिलं चाम्बु, सौवीरप्रभृतीन्यपि ॥ १५ ॥ खादिमं भृष्टधान्यानि, द्राक्षादीनि फलान्यपि। स्वादिमं तु लवङ्गैलापूगजातीफलादिकम् ॥ १६ ॥ कृते चतुर्विधाहारत्याग आहारपौषधः। सर्वतः स्यान्निर्विकृत्याचामाम्लादौ तु देशतः ॥ १७ ॥ एवमन्येऽपि त्रयः स्युर्देशसर्वत्वयोर्द्विधा। आद्य एव हि भेदे तद्व्यवहारस्तु साम्प्रतम् ॥ १८ ॥ सदा क्वचिद्वा दिवसे, साधूनां दानपूर्वकम्। भुज्यते यत्तदतिथिसंविभागाभिधं व्रतम् ॥ १९ ॥ महाव्रतापेक्षयाऽऽद्यपञ्चव्रत्यां मताऽणुता। तद्गुणाधायकत्वेन, गुणता चोत्तरत्रये ॥२०॥ मुहुर्गुर्वादिशिक्षावन्निषेव्यानि यथोचितम्। शिक्षाव्रतत्वमन्त्येषु, चतुर्ष्विति मतं जिनैः ॥ २१ ॥ अन्यत्र तु अन्त्यानि सप्तापि शिक्षाव्रतान्युच्यन्ते, तथोक्तं–'पंचाणुव्वइयं सत्तसिक्खावइयं दुवालसविहं' इत्यादि विपाकसूत्रे सुबाह्वधिकारे। तथा—तत्त्वानि सप्त नव वा, धर्माद्यर्थांश्च षड् ध्रुवान्। दानादिकं चतुर्द्धा च, धर्ममादिशति प्रभुः ॥ २२ ॥ तथोक्तं—“दानशीलतपोभावभेदाद्धर्मं चतुर्विधम्। मन्ये युगपदाख्यातुं, चतुर्वक्रोऽभवद्भवान् ॥ २३ ॥” यथाऽसुमन्तो बध्यन्ते, मुच्यंतेऽपि च कर्मभिः। यथा च यान्ति निर्वाणं, स्वामी सर्वं तथाऽऽदिशेत् ॥२४॥ यथाऽऽदिशति पूर्णस्य, तुच्छस्यापि तथैव सः। निःस्पृहः समचित्तश्च, चक्रवर्त्तिदरिद्रयोः ॥ २५ ॥ पूर्णतुच्छस्वरूपं चैवमाचाराङ्गवृत्तौ–ज्ञानैश्वर्यधनोपेतो, जात्यन्वयबलान्वितः। तेजस्वी मतिमान् ख्यातः, पूर्णस्तुच्छो विपर्ययात् ॥ २६ ॥ स्वयं कृतार्थोऽप्यन्येषां, हितार्थं धर्ममादिशन्। लोकेषु षड्विधेष्वेष, उत्तमोत्तम उच्यते ॥ २७ ॥ तथाहुः श्रीउमास्वातिवाचकपादाः—“कर्माहितमिह चामुत्र चाधमतमो नरः समारभते। इहफलमेव त्वधमो विमध्यमस्तूभयफलार्थम् ॥ २८ ॥ परलोकहितायैव प्रवर्त्तते मध्यमः क्रियासु सदा। मोक्षायैव तु घटते विशिष्टमतिरुत्तमः पुरुषः ॥ २९ ॥ यस्तु कृतार्थोऽप्युत्तममवाप्य धर्मं परेभ्य उपदिशति। नित्यं स उत्तमेभ्योऽप्युत्तम इति पूज्यतम एव ॥ ३० ॥ तस्मादर्हति पूजामर्हन्नेवोत्तमोत्तमो लोके। देवर्षिनरेन्द्रेभ्यः पूज्येभ्योऽप्यन्यसत्त्वानां ॥ ३१ ॥ कदापि निष्फला नैषां, देशना जायतेऽर्हताम्। लाभाभावेऽसूढलक्ष्याः, प्रवर्त्तेरन्न ते यतः ॥ ३२ ॥ सामायिकं स्यात्सम्यक्त्वं, श्रुतसामायिकं तथा। सामायिके द्वे विरती,

पुरुषषट्कं सामायिकं समितयः

देशतः सर्वतोऽपि ये ॥ ३३ ॥ सामायिकस्वरूपं चैवमाहुः—“सावज्जजोगविरओ, तिगुत्तो छसु संजओ । उवउत्तो जयमाणो, आया सामाइयं होइ ॥ ३४॥ जो समो सव्वभूएसु, तसेसुं थावरेसु य । तस्स सामाइयं होइ, इइ केवलिभासिअं ॥ ३५ ॥” सामायिकानि चत्वारि, त्रीणि द्वे एकमेव च । निश्चयात्प्रतिपद्यन्ते, नरतिर्यक्सुधाशिषु ॥ ३६ ॥ चत्वारि प्रतिपद्यन्ते, नरा एवादितस्त्रयम् । तिर्यञ्चस्त्वमराश्च द्वे, अन्तिमासंभवात्क्रमात् ॥ ३७ ॥ पूर्वं प्रपन्नसम्यक्त्वो, देशतः सर्वतोऽथवा । विरतिं चेल्लभेत स्यात्तदा ह्येकासिसंभवः ॥ ३८ ॥ सामायिकस्य कस्यापि, प्रतिपत्ता भवेन्न चेत् । नृषु तिर्यक्षु वा कश्चित्तदाऽवश्यं सुधाशिषु ॥३९॥ कश्चित्प्रक्षीणसम्यक्त्वः, सम्यक्त्वं प्रतिपद्यते । अर्हद्गिरामवन्ध्यत्वादसंख्यत्वाच्च नाकिनाम् ॥ ४० ॥ युग्मम् । तत्र ये सर्वविरतिं, प्रपद्यन्ते नराः स्त्रियः । प्रव्राजयति तान्नाथः, शिक्षयन् सकलं विधिम् ॥ ४१ ॥ गन्तव्यमेवं स्थातव्यं, भोक्तव्यं विधिनाऽमुना । वक्तव्यं भाषयैवं च, यथा धर्मो न सीदति ॥ ४२ ॥ याश्च चारित्रपुत्रस्य, मातरोऽष्टौ भवन्त्यमूः । सम्यगाराधनीयास्ता, मोक्षाकाङ्क्षिमुमुक्षुभिः ॥ ४३ ॥ युगमात्रावलोकिन्या, दृष्ट्या सूर्यांशुभासितम् । विलोक्य मार्गं गन्तव्यमितीर्यासमितिर्भवेत् ॥ ४४ ॥ हितं यत्सर्वजीवानां, निरवद्यं मितं वचः । तद्धर्महेतोर्वक्तव्यं, भाषासमितिरित्यसौ ॥ ४५ ॥ तदुक्तं—“सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियं च नानृतं ब्रूयात्, सा भाषासमितिर्भवेत् ॥४६॥” ग्राह्यं मोच्यं च धर्मोपकरणं प्रत्युपेक्ष्य यत् । प्रमार्ज्य चेयमादाननिक्षेपसमितिः स्मृता ॥ ४७ ॥ निर्जीवेऽशुषिरे देशे, प्रत्युपेक्ष्य प्रमार्ज्य च ।



यत्त्यागो मलमूत्रादेः सोत्सर्गसमितिः स्मृता ॥ ४८ ॥ कल्पनाजालनिर्मुक्तं, समभावेन पावनम् । मुनीनां यन्मनःस्थैर्यं, मनोगुप्तिर्भवत्यसौ ॥ ४९ ॥ मौनावलम्बनं साधोः, संज्ञादिपरिहारतः । वाग्वृत्तेर्वा निरोधो यः, सा वाग्गुप्तिरिहोदिता ॥ ५० ॥ स्थितस्य कायोत्सर्गादावुपसर्गजुषोऽपि यत् । स्थैर्यं धैर्येण कायस्य, कायगुप्तिरियं मता ॥ ५१ ॥ शय्यासनोर्ध्वस्थानादौ, कायचेष्टा नियम्यते । साधुभिर्धर्मबुद्ध्या यत्कायगुप्तिस्तु सा परा ॥५२॥ एता एव द्वादशाङ्ग्याः, सारो धर्मस्य साधनम् । ततो युष्माभिरेतासु, यत्नः कार्यो मुहुर्मुहुः ॥ ५३ ॥ आदिश्यैवं साधुसाध्वीश्रावकश्राविका इति । प्रभुश्चतुर्विधं सङ्घं, स्थापयेत्तीर्थमद्भुतम् ॥५४॥ तत्र च—साधवः स्युः पात्रगुच्छरजोहरणधारिणः । येऽष्टादश सहस्राणि, शीलाङ्गानां च बिभ्रते ॥५५॥ तानि चैवमाहुः—“जे नो करिंति मणसा निज्जिअआहारसन्नसोइंदी । पुढविक्कायारंभं खंतिजुआ ते मुणी वंदे ॥५६॥” करणं कारणं चानुमतियोगत्रयं तथा । आहाराद्याश्चतस्रश्च, संज्ञाः पञ्चेन्द्रियाणि च ॥५७॥ पृथ्व्यम्बुवह्निमरुतामारम्भाः स्युर्वनस्पतेः । द्वित्रिचतुःपञ्चखानामजीवस्येत्यमी दश ॥ ५८ ॥ क्षमाऽऽर्जवं मार्दवं च, मुक्तिस्तपश्च संयमः । साधोर्धर्मा दश ब्रह्म, सत्यशौचापरिग्रहाः ॥५९॥ भवन्ति दश शीलाङ्गान्यधःस्थैर्दशभिः पदैः । क्षमादिभिः साधुधर्मवाचिभिः परिवर्त्तितैः ॥६०॥ शतं दशभिरारम्भपदैः स्युः परिवर्त्तितैः । प्रत्येकमारम्भपदे, पूर्वोक्तदशकान्वयात् ॥६१॥ शतं शतानि पञ्च स्युः, पदैरिन्द्रियवाचिभिः । सहस्रद्वितयी तेषां, चतुःसंज्ञापदान्वयात् ॥६२॥ मनोवाक्काययोगेन, षट् सहस्रा भवन्ति ते । अष्टादश सहस्राश्च, करणादित्रयान्विताः ॥६३॥ सप्तभिः कुलकम् । नष्टोदिष्टविधिं चात्र, वक्ष्ये

येनाप्यते द्रुतम्। अङ्काद्विवक्षितं रूपं, रूपाद्यांको विवक्षितः॥६४॥त्रिकं त्रिकं चतुष्कं च, पञ्चकं द्विर्दश न्यसेत्। भाजकानां ध्रुवाङ्कानामियं भवति पद्धतिः॥६५॥ ३, ३, ४, ५, १०, १० अङ्कराशिं परैः पृष्टं, प्रथमं दशभिर्भजेत्। लब्धं भूयोऽपि दशभिर्लब्धं तत्रापि पञ्चभिः॥६६॥ चतुस्त्रित्रिभिरेवं च, लब्धं लब्धं विभज्यते। सर्वत्र भागशेषं स्वभाजकस्य लिखेदधः॥६७॥अर्थतो युग्मम्। भाजकेन हृते राशौ, यदि किञ्चिन्न शिष्यते। तदा तद्भाजकस्याधः, शून्यं स्थाप्यमिति स्थितिः॥६८॥ किंच—यदा राशौ भज्यमाने, किञ्चिदप्यवशिष्यते। सैकं कार्यं तदा लब्धं, निःशेषे तु न तत्तथा॥६९॥ यथा—मितं चतुर्भिर्नवकैः, रूपं भवति कीदृशम्। शीलाङ्गानां? तत्र राशिं, यथोक्तं दशभिर्भजेत्॥ ७०॥ लब्धा नवनवत्याढ्याः, शता नव नवोपरि। शिष्यन्ते ते च सर्वान्त्यदशकस्य लिखेदधः॥ ७१॥ भागशेषतया राशेर्लब्धं सैकं विधीयते। सहस्रं जायते तच्च, दशभिः प्रविभज्यते॥ ७२॥ लब्धं शतं भागशेषाभावाच्छून्यं निवेश्यते। उपान्त्यदशकस्याधः, सर्वत्रैवं विधीयताम्॥७३॥ शते च पञ्चभिर्भक्ते, विंशतिः प्राप्यतेऽथ सा। चतुर्भिर्भज्यते लब्धाः, पञ्च तांश्च त्रिभिर्भजेत्॥ ७४॥ लब्ध एको द्वयं शिष्टं, लिख्यतेऽधस्त्रिकस्य तत्। लब्ध एकोऽपि सैकस्तल्लेख्य आद्यत्रिकादधः॥ ७५॥ ३,३,४,५,१०१० / २,२,०,०,०,९ आदौ द्विकद्वयं शून्यत्रयं नवक एव च। शीलाङ्गरूपमित्यूह्यं, चतुर्भिर्नवकैर्मितम्॥ ७६॥ पदसंख्योह्यतामङ्कैर्यथास्थानं पदानि च। स्वस्वपङ्क्तेः पदं सर्वान्तिमं शून्यैश्च भाव्यताम्॥७७॥तद्रूपं चैवं—"जे कारिंति न वयसा निज्जिअपरिग्गहसन्नसोइंदी। अजिआणं आरंभं अकिंचणा ते मुणी वंदे॥ ७८॥" अथ द्विकद्वयं शून्यत्रयं नवक एव च।



कथितं रूपमित्येवं, पृष्टे विधिरिहोच्यते॥ ७९॥ पूर्वोक्तभाजकाङ्कानामधः पृष्टाङ्कपङ्क्तिका। क्रमेण लिख्यते सा च, स्थापना प्राक् प्रदर्शिता॥ ८०॥ द्वितीयोऽङ्कोऽथोर्ध्वपङ्क्तेरधःस्थपङ्क्तिवर्त्तिना। गुण्यते प्रथमाङ्केन, जातं यत्तदधो लिखेत्॥ ८१॥ ऊर्ध्वपङ्क्तिगताङ्कस्य, गुणितस्यास्य चेदधः। भवत्यङ्कः कोऽपि तर्हि, राशिमेनं निरेकयेत्॥ ८२॥ अधःपङ्क्तौ च शून्यं चेत्तस्याङ्कस्य भवेदधः। राशिस्तदा तथावस्थः, स्थाप्य इत्यग्रतोऽपि च॥ ८३॥ यथा पूर्वस्थापनायामूर्ध्वस्थपङ्क्तिगस्त्रिकः। आद्यं मुक्त्वा द्वितीयो यः, स चाधःपङ्क्तिवर्तिना॥ ८४॥ द्विकेनाद्येन गुणितो, जाताः षट् ते निरेककाः। पञ्च जाताश्चतुर्घ्नास्ते, विंशतिस्ते च पञ्चभिः॥ ८५॥ ताडिताः स्युः शतं ते च, सहस्रं दशभिर्हताः। दशघ्नास्तेऽप्येकहीनाश्चत्वारो नवकाः स्थिताः॥ ८६॥ ३/२, ३/२, ४/०, ५/०, १०/०, १०/९ × ५, २०, १००, १०००, ९९९९ ततश्चायं भावः—सहस्राणि नव नवत्यधिकाश्च शता नव। एषां शीलाङ्गरूपाणामन्त्यं रूपं यथोदितम्॥ ८७॥ आभिश्च पङ्क्तिभिः षड्भिः, स्थापिताभिरधः क्रमात्। स्याद्रथस्याकृतिस्तस्माच्छीलाङ्गरथ उच्यते॥ ८८॥ अन्येऽपि संति भूयांसः, सामाचार्यादयो रथाः। ज्ञेयास्तेऽप्यनया रीत्या, नात्रोक्ता विस्तृतेर्भयात्॥ ८९॥ मणगुत्तो सन्नाणी पसमिअकोहो अ इरिअसमिओ अ। पुढविजीए रक्खंतो इच्छाकारी नमो तस्स॥ ९०॥ इच्छा मिच्छा तहक्कारो आवसिआ अ निसीहिआ। आपुच्छा पडिपुच्छा छंदनिमंतोवसंपया॥ १॥ इति दिक्। गुणैरनेकैरित्याद्यैः, प्रथिताः पृथुबुद्धयः। साधुसाध्व्यो भवेत्तेषां, जिनेन्द्राणां परिच्छदः॥९१॥ श्रावकाणां तु भेदौ द्वावष्टौ द्वात्रिंशदेव च। सप्तत्रिंशाः शताः सप्त, स्थूलभेदविवक्षया॥९२॥

सम्यक्त्वं बिभ्रते केचित्तद्युक्तां विरतिं परे। द्विधा श्राद्धा अविरता, विरताविरता इति ॥ ९३ ॥ अणुव्रतानि पञ्चापि, षड्भिरुच्चारभङ्गकैः। पृथक् पृथक् स्वीकृतानि, यैस्तेषां षड् भिदोऽभवन् ॥ ९४ ॥ प्रतिपन्नोत्तरगुणव्रतः केवलदर्शनः। इति द्वयान्विता एते, षडित्यष्टौ भिदोऽभवन् ॥ ९५ ॥ एवं सर्वत्राप्यग्रे भाव्यं। द्विविधत्रिविधं प्रोक्तं १, द्विविधद्विविधं २ तथा। द्विविधैकविधं ३ चैकविधत्रिविधमेव च ४ ॥९६॥ एकविधद्विविधं ५ चैकविधैकविधं ६ तथा। श्राद्धानां षडमी प्रोक्ता, व्रतोच्चारणभङ्गकाः ॥९७॥ न करोमि स्वयं नान्यैः, कारयामि च पातकम्। स्थूलहिंसादि मनसा, वाचाऽङ्गेनाद्यभङ्गके ॥९८॥ एवमन्येऽपि भङ्गका भाव्याः २२२१११ / ३२१३२१ / १३३२६६ षट्स्वप्येतेष्वनुमति गृहस्थैर्न निषिध्यते। एषामनुमतिप्राप्तेः, स्त्रीपुत्रादिकृतेष्वपि ॥ ९९ ॥ अन्यथा हि सर्वदेशविरत्योर्न भिदा भवेत्। त्रिविधं त्रिविधेनेति, भङ्गको गृहिणां न तत् ॥ ८०० ॥ एषामुत्तरभङ्गास्तु, जायन्त एकविंशतिः। ते चैवमस्याः षड्भङ्ग्याः, प्रतिभेदावबोधकाः ॥ १ ॥ स्थाप्या अधस्तादेष्वङ्काः, क्रमात्कोष्ठेषु षट्स्वपि। एकको द्वौ त्रिकावेको, द्विकः षट्कद्वयं ततः ॥ २ ॥ अयं भावः—भङ्गो यथोक्त एवाद्ये, कोष्ठे नात्रान्यसंभवः। द्वितीये तु मनोवाचौ, मनोऽङ्गे वाक्तनु त्रयम् ॥ ३ ॥ भङ्गानामिति शेषः। मनोवाक्तनुभिर्व्यस्तैः, स्यात्तृतीयेऽपि तत्त्रयम्। करणेन कारणेन, तुर्ये कोष्ठे च भिद्द्वयम् ॥ ४ ॥ तयो द्वितीयकोष्ठोक्ता, योगभङ्गा विशेषिताः। करणेन कारणेन, षड् भङ्गा इति पञ्चमे ॥ ५ ॥ व्यस्ता मनोवचःकायाः षड्विधाः स्युर्विशेषिताः। करणेन कारणेन, षष्ठे षड् भङ्गका इति ॥ ६ ॥ आवश्यकाभिप्रायोऽयं, प्रज्ञप्त्यादौ तु कीर्त्तितः। त्रिविधं त्रिविधेनेति, भेदोऽपि गृहमेधिनाम् ॥ ७ ॥ तथाहि—स्वयंभूरमणाम्भोधिमत्स्यमांसाशनादिकम्। त्रिविधं त्रिविधेनापि, प्रत्याख्यात्येव कोऽपि यत् ॥ ८ ॥ अस्याल्पविषयत्वेन, कादाचित्कतयाऽपि च। नैवावश्यकनिर्युक्तौ, भङ्गकोऽयं विवक्षितः ॥९॥ षोढा पूर्वोक्तषड्भङ्ग्या, स्यादेकैकमणुव्रतम्। त्रिंशद्भिदोऽथ द्वात्रिंशत्, ससम्यक्त्वोत्तरव्रताः ॥१०॥ तथा—त्रिका द्विका एकका ये, प्रत्येकं ते त्रयस्त्रयः। स्थाप्यन्ते किल पङ्क्त्योर्ध्वं, करणादित्रयाङ्ककाः ॥ ११ ॥ एषां नवानामङ्कानामधः पङ्क्त्या क्रमाल्लिखेत्। मनोवाक्कायसूचार्थं, त्रिशस्त्रिकद्विकैककान् ॥ १२ ॥ आद्यो भङ्गोऽत्र सावद्यं, न कुर्वे कारयामि न। नानुजानामि मनसा, वचसा वपुषाऽपि च ॥ १३ ॥ एवमन्येऽपि भङ्गका भाव्याः. ३/३ ३/२ ३/१ २/३ २/२ २/१ १/३ १/२ १/१ प्रज्ञप्त्याद्युदिता मूलभङ्गा नव भवन्त्यमी। एषामेकोनपञ्चाशद्भवन्त्युत्तरभङ्गकाः ॥१४॥ तथाहि—त्रिभिर्मनो १ वचः २ कायै ३ स्त्रयो भेदा भवन्त्यथ। मनोवाग्भ्यां भवेत्तुर्यो ४, मनोऽङ्गाभ्यां च पञ्चमः ५ ॥१५॥ वाक्कायाभ्यां भवेत् षष्ठ६स्त्रिभिरेभिश्च सप्तमः ७। एते सप्तापि योज्यन्ते, सप्तभिः करणादिभिः ॥ १६ ॥ ते चैवं—करणं १ कारणं २ चानुमति ३ श्चेति भिदां त्रयम्। भेदश्चतुर्थः करणकारणाभ्यां प्रकीर्तितः ॥१७॥ करणानुमतिभ्यां च, भेदो भवति पञ्चमः। कारणानुमतिभ्यां च, षष्ठस्तैः सप्तमस्त्रिभिः ॥१८॥ प्रत्येकमेषु भङ्गेषु, पूर्वोक्तसप्तकान्वयात्। उक्ता एकोनपञ्चाशद्व्रतोच्चारणभङ्गका ॥१९॥ प्रत्येकं भङ्गकेष्वेषु, कालत्रितययोजनात्। सप्तचत्वारिंशदाढ्यं, जायन्ते भङ्गकाः शतम् ॥२०॥ त्रिकालविषयत्वं च, स्यादतीतस्य निन्दया। संवरेणाधुनिकस्य, प्रत्याख्यानाद्भविष्यतः ॥२१॥ "अईयं निंदामि, पडुप्पन्नं संवरेमि, अणागयं पच्चक्खामि," तथा च—

"मण १ वयण २ काय ३ मणवय ४ मणतणु ५ वयतणु ६ तिजोगि ७ सग सत्त । कर १ कार २ णुमइ ३ दुतिजुइ तिकालि सीआल भंगसयं ॥२२॥" सम्यग् य एतान् जानाति, प्रत्याख्यानस्य भङ्गकान् । स एव कथितः शास्त्रे, प्रत्याख्यानविचक्षणः ॥२३॥ अणुव्रतैः पञ्चभिश्च, गुणिता भङ्गका अमी । पञ्चत्रिंशाः शताः सप्त, तेषु केवलदर्शनैः ॥२४॥ युक्तेषु चोत्तरगुणाढ्यैस्ते स्युः श्रावका इह । सप्तत्रिंशाः सप्त शता, व्रतानां मूलभेदतः ॥२५॥ व्रतानां द्व्यादि-
संयोगोद्भवा भेदा भवन्ति ये । षड्भङ्ग्यादिव्रतोच्चारप्रकाराणां च या भिदः ॥२६॥ परस्परं तद्गुणने, व्रतानां भूरयो
भिदः । भवन्ति ताभिस्तावन्तः, श्रावका इह तद्यथा ॥२७॥ युग्मम् । अणुव्रतानां पञ्चानां, भङ्गाः पञ्चैकयोगजाः ।
दश च स्युर्द्वियोगोत्थास्त्रियोगोत्था दशैव च ॥ २८ ॥ तुर्ययोगोद्भवाः पञ्च, स्यादेकः पञ्चयोगजः । अथैत- २०
द्भङ्गकोत्पत्तौ, करणं प्रतिपाद्यते ॥ २९ ॥ क्रमोत्क्रमाभ्यां द्वे पङ्क्त्यौ, संस्थाप्येते उपर्यधः । विवक्षितव्रताङ्काना-
मथाधःपङ्क्तिवर्त्तिना ॥३०॥ उपान्त्याङ्केनोर्ध्वपङ्क्तिगतोऽन्त्योऽङ्को विभज्यते । लब्धेन तस्योपान्त्यस्योपरिस्थोऽङ्को
निहन्यते ॥ ३१ ॥ यज्जातं ते द्विसंयोगा, भङ्गकास्ते च पूर्ववत् । उपान्त्यपाश्चात्याङ्केन, भज्यन्ते लभ्यते च यत्
॥ ३२ ॥ तेन तस्योपरितनो, गुण्यतेऽङ्को भवेच्च यत् । ते त्रिसंयोगजा भङ्गाः, स्याच्छेषेष्वप्ययं विधिः ॥ ३३ ॥ २५
भङ्गेषु नैकयोगेषु, करणस्य प्रयोजनम् । विवक्षितव्रतमिता, भङ्गका ह्येकयोगजाः ॥ ३४ ॥ अत्रोदाहरणं— ॥ ४५४ ॥
क्रमोत्क्रमाभ्यां पञ्चान्ता, लिख्यन्तेऽङ्का द्विकेन च । भक्तेऽधःपङ्क्त्युपान्त्येनोपरिस्थे पञ्चकेऽन्तिमे ॥ ३५ ॥ लब्धौ
द्वौ सार्द्धकौ ताभ्यामुपान्त्यस्योपरि स्थितः । चतुष्को गुण्यते जाता, दश तेऽत्र द्वियोगजाः ॥ ३६ ॥ त्रिकोऽधो- २८
पान्त्यपाश्चात्यो, भज्यन्ते तेन ते दश । लब्धास्त्रयः सत्रिभागाः, सांशैस्तैश्च निहन्यते ॥ ३७ ॥ त्रिकस्तस्योप-
रिगतो, दश स्युस्ते त्रियोगजाः । तत्पाश्चात्यचतुष्केण, तेषु भक्तेषु लभ्यते ॥ ३८ ॥ सार्धं द्वयं तेन तस्योप-
रिस्थो गुण्यते द्विकः । जाताः पञ्च चतुर्योगा, भज्यन्ते पञ्चकेन ते ॥ ३९ ॥ आद्येनाधःपङ्क्तिगेन, प्राप्त एकोऽथ
गुण्यते । अनेनैकस्तदूर्ध्वस्थ, इत्येकः पञ्चयोगजः ॥ ४० ॥ यद्वा—जिज्ञासिताः स्युः संयोगा, यावतां तावतोऽङ्ककान् ।
एकाद्येकोत्तरानूर्ध्वंदमश्रेण्या क्रमान्न्यसेत् ॥ ४१ ॥ यथास्थमन्त्यं मुक्त्वा तानुपर्युपरि निक्षिपेत् । एवमेकादि-
योगोत्थभङ्गसंख्यामितिर्भवेत् ॥ ४२ ॥ तत्र च—सर्वोपरितनाङ्केन, लभ्यन्त एकयोगजाः । शेषैरधोऽधःस्थै- ५
रङ्कैर्लभ्यन्ते द्व्यादियोगजाः ॥ ४३ ॥

१ २ ३ ४ ५
३ ६ १०
४ १०
५
१

अत्रैकको द्विके क्षिप्तो, द्विकस्थाने त्रिकोऽभवत् ।
त्रिकः स चोपरितनत्रिके षट्कं भवेत्तदा ॥ ४४ ॥ षट्केऽस्मिंश्चोपरितने, चतुष्के योजिते दश । पुनरेकस्त्रिके
क्षिप्तश्चतुष्कः स्यात्स चोर्ध्वगे ॥ ४५ ॥ षट्के क्षिप्तो दशाभूवन्, पुनरेकश्चतुष्कके । क्षिप्तः पञ्चाभवन्नेकस्ततोऽधः
स्यात्तथा स्थितः ॥ ४६ ॥ अथवा—लभ्यन्ते द्व्यादिसंयोगा, अङ्कचारणया मिथः । चार्यते पूर्वपूर्वोऽङ्कोऽ- १०
नुक्रमादुत्तरोत्तरैः ॥४७॥ सा चैवं—१२ । १३ । १४ । १५ एवं चत्वार एकचारणया, २३ । २४ । २५ एवं त्रयो
द्वितीयचारणया. ३४ । ३५ एवं द्वौ तृतीयचारणया. ४।५ एकश्चतुर्थचारणया. एवं दशद्विकसंयोगजा लब्धाः. १२

एवं त्रिकसंयोगजा अपि दश यथा—१२३ । १२४ । १२५ । १३४ । १३५ । १४५ एवमेकचारणया षट्. २३४ । २३५ । २४५ इति द्वितीयचारणया त्रयः ३४५ एवं तृतीयचारणया त्वेक इति । व्रतानां च द्वादशानामेवं विज्ञैर्यथारुचि । भङ्गानां भावना कार्या, द्व्यादिसंयोगजन्मनाम् ॥४८॥ व्रतोच्चारप्रकाराणामप्येवं गुणने मिथः । भवन्ति भूरयो भेदाः, षड्भङ्ग्यां तानथ ब्रुवे ॥ ४९ ॥ एकव्रते षड् भङ्गा ये, द्विविधत्रिविधादिकाः । ते षट्त्रिंशद्भवन्त्येवं, संयोगे व्रतयोर्द्वयोः ॥ ५० ॥ आदावाद्यव्रतस्याद्यो, भङ्गकोऽवस्थितोऽश्रुते । द्वितीयव्रतसत्कान् षट्, भङ्गकाननवस्थितान् ॥ ५१ ॥ एवं भङ्गो द्वितीयोऽपि, षट् प्रत्येकं षडप्यमी । लभन्ते इति षट्त्रिंशज्जाता उच्चारभङ्गकाः ॥५२॥ व्रतानां त्रिकयोगे तु, द्विशती षोडशोत्तरा । शतानि द्वादश चतुर्योगे षण्णवतिस्तथा ॥५३॥ सहस्राः सप्त सप्तैव, शताः षट्सप्ततिस्तथा । योगे व्रतानां पञ्चानां, भवन्त्युच्चारभङ्गकाः ॥ ५४ ॥ उच्चारभङ्गका एते, व्रतानां प्राक्प्रदर्शितैः । हता एकद्व्यादियोगैः, स्युः सर्वाग्रेण भङ्गकाः ॥ ५५ ॥ यथा व्रतानां पञ्चानामेकयोगैर्हि पञ्चभिः । हता उच्चारभङ्गाः षट्, स्युस्त्रिंशदेकयोगजाः ॥ ५६ ॥ दशभिर्द्विकयोगे षट्त्रिंशदुच्चारभङ्गकाः । हताः स्युस्त्रिशती षष्ट्याऽभ्यधिका सर्वसंख्यया ॥५७॥ द्विशती षोडशाढ्या च, त्रियोगैर्दशभिर्हताः । षष्ट्याढ्यानि त्रियोगानां, स्युः शतान्येकत्रिंशतिः ॥ ५८ ॥ चतुर्योगैः पञ्चभिश्च, हता उच्चारभङ्गकाः । शता द्वादश पूर्वोक्ताः, षण्णवत्यधिकाश्च ये ॥ ५९ ॥ स्युः शतानि चतुःषष्टिरशीत्याऽभ्यधिकानि ते । चतुर्योगजभ-

ङ्गानां, सर्वसंख्या भवेदियम् ॥ ६० ॥ सहस्राः सप्त सप्तैव, षट्सप्तत्यधिकाः शताः । एकेन पञ्चयोगेन, हतास्तावन्त एव ते ॥ ६१ ॥ इयं च स्थापना प्राज्ञैस्तादृगाकारसंभवात् । शास्त्रेषु देवकुलिकाकारेति व्यपदिश्यते ॥ ६२ ॥ पञ्चस्वणुव्रतेष्वेवं, निर्दिष्टानां यथाक्रमम् । संयोगजानां भङ्गानां, भवेत् संकलना त्वियम् ॥ ६३ ॥

सहस्राः षोडशाष्टौ च, शताः षडधिका अथ । उत्तरव्रतभृत्सम्यग्दृग्योगेऽष्टाधिका अपि १६८०८ ॥ ६४ ॥ द्वादशानां व्रतानां च, भङ्गसंकलना भवेत् । विविच्यमाना षड्भङ्ग्या, कोटीशतास्त्रयोदश ॥ ६५ ॥ कोट्यश्चतुरशीतिश्च, लक्षाणि द्वादशोपरि । सप्ताशीतिः सहस्राणि, द्वाभ्यां युक्तं शतद्वयम् ॥ ६६ ॥ अत्र शतोपरितनं यद् द्वयं तदुत्तरगुणधारिकेवलसम्यक्त्वधारिरूपं भेदद्वयं ज्ञेयम्, अत्रोत्तरगुणाश्च विविधतपोऽभिग्रहरूपा इति ध्येयं, अत्रायमाम्नायः—षड् भङ्गा व्रत एकस्मिन्, ये निर्दिष्टा जिनैः श्रुते । द्वितीयव्रतयोगे ते, हन्यन्ते सप्तभिः किल ॥ ६७ ॥ षट् क्षिप्यन्तेऽत्र चैवं स्युर्भङ्गका व्रतयोर्द्वयोः । अष्टाचत्वारिंशदेव, जातास्ते विधिनाऽमुना ॥ ६८ ॥ अत्र चैवं प्रकारान्तरेण वासना—द्वयोर्व्रतयोरूर्ध्वपङ्क्तिस्थापना, अत्र च 'यथा स्वमन्त्यं मुक्त्वा तानुपर्युपरि निक्षिपेत्' इति पूर्वोक्तवचनात् अङ्कक्षेपसंभवो नास्तीति तथैव स्थिता, तथा च एकयोगे द्वौ भङ्गौ, द्विकयोगश्चैकः, तत्र द्वयोरेकयोगयोः प्रत्येकं षट् भङ्गा इति द्वादश द्विकयोगस्य षट्त्रिंशदिति अष्टचत्वारिंशदिति । विवक्षितव्रताङ्केभ्य, एकन्यूनाङ्कसंख्यया । एवं मुहुः कृते शेषभङ्गसंकलनाऽऽप्यते ॥ ६९ ॥ व्रतेषु च द्वादशसु, चरानेकादशो तकि । कृते पूर्वोदिता सर्वभङ्गसंकलना स्फुटा ॥ ७० ॥ त्रिकाल्या गुणने त्वेषां, भङ्ग-

॥४५५॥

कानां भवन्त्यमी । कोटीशतान्येकचत्वारिंशचोपरि कोटयः ॥ ७१ ॥ द्विपञ्चाशत्तथा लक्षाण्यष्टात्रिंशदथोपरि । एकषष्टिः सहस्राणि, षड्भिर्युक्ता च षट्शती ॥ ७२ ॥ एवं च वक्ष्यमाणैकविंशतिभङ्गीनवभङ्ग्यैकोनपञ्चाशद्भङ्गीभङ्गकानामपि त्रिकाल्या गुणनं न्याय्यमेव प्रतीमः । सप्तचत्वारिंशशतभङ्ग्यामेव त्रिकाल्याः प्रविष्टत्वादिति ज्ञेयं। एते व्रतानां भङ्गास्तु, षड्भङ्ग्यैव प्रदर्शिताः । एकविंशत्यादिभिस्तु, भङ्गैः स्युरतिभूरयः ॥ ७३ ॥ तथाहि—एकविंशतिरेकस्मिन्, ये भङ्गास्तान् व्रतद्वये । द्वाविंशतिगुणान् कृत्वा, क्षिप्यतेऽत्रैकविंशतिः ॥ ७४ ॥ वारानेकादशैवं च, कृते द्रुतमवाप्यते । सर्वसंख्या भङ्गकानां, व्रतेषु द्वादशस्वपि ॥ ७५ ॥ सा चेयं–१२८५५००२६३१० ४९२१५ अङ्काः सप्तदश । एकव्रतस्य ये भङ्गा, नव ते दशभिर्हताः । नवान्विताश्च सर्वाग्रं, वार एकादशे भवेत् ॥ ७६ ॥ तच्चेदं—९९९९९९९९९९९९ । एकव्रतस्याथैकोनपञ्चाशद्भङ्गका हि ये । ते पञ्चाशद्गुणा एकोनपञ्चाशद्युता मुहुः ॥ ७७ ॥ एकादशे वारे सर्वाग्रं चैवं—२४४१४०६२४९९९९९९९९९९९९ अङ्का एकविंशतिः । सप्तचत्वारिंशदाढ्यं, शतमेकव्रतस्य ये । भङ्गकास्तेऽष्टचत्वारिंशदाढ्यशतताडिताः ॥ ७८ ॥ सप्तचत्वारिंशदाढ्यशतोपेताः कृता मुहुः । भवन्त्येकादशे वारे, सर्वेऽपि व्रतभङ्गकाः ॥ ७९ ॥ ते चैवं—११०४४३६०७७१९६११५३३३५६९५ ७६९५ अङ्काः सप्तविंशतिः । एतेषु षड्भङ्ग्यादिषु स्थानेषु यथाक्रममागता द्वादशापि राशय उपर्यधोभावेन व्यवस्थाप्यमाना अर्धदेवकुलिकाकारां भूमिमास्तृणन्तीति एताः पञ्चापि खण्डदेवकुलिका इति व्यपदिश्यन्ते इति ज्ञेयं। तत्र षड्भङ्ग्या खण्डदेवकुलिकास्थापना। श्रावकपदनिरुक्तं चैवं–"अवाप्तदृष्ट्यादिविशुद्धिसंपत्, परं

समाचारमनुप्रभातम् । शृणोति यः साधुजनादतन्द्रस्तं श्रावकं प्राहुरमी जिनेन्द्राः ॥ ८० ॥ श्रद्धालुतां श्राति पदार्थचिन्तनाद्धनानि पात्रेषु वपत्यनारतम् । किरत्यपुण्यानि सुसाधुसेवनादतोऽपि तं श्रावकमाहुरुत्तमाः ॥ ८१ ॥ श्राति–पचति, तत्त्वार्थश्रद्धानं निष्ठां नयतीति, 'श्रा पाके' इत्यस्य रूपं, इति स्थानाङ्गवृत्तौ." एवं च विविधैर्भङ्गैः, स्वीकृतव्रतपालकाः । श्रावकाः श्राविकाश्चैषामर्हतां स्यात्परिच्छदः ॥ ८२ ॥

साधुष्वथो गणधरपदयोग्या भवन्ति ये । उत्पत्तिनाशध्रौव्यार्थां, त्रिपदीं शिक्षयंति तान् ॥ ८३ ॥ अधीत्य त्रिपदीं तेऽपि, मुहूर्त्ताद्वीजबुद्धयः । रचयन्ति द्वादशाङ्गीं, विचित्ररचनाञ्चिताम् ॥ ८४ ॥ ततः सौगन्धिकरत्नचूर्णस्थालं करेधृतम् । शक्रः पुरो ढौकयति, पदस्थापनहेतवे ॥ ८५ ॥ तिष्ठन्ति चार्द्धावनताः, पदयोग्याः पुरोऽर्हताम् । गन्धवासांस्तच्छिरस्सु, क्षिपन्ते मुष्टिभिर्जिनाः ॥ ८६ ॥ ददते सूरिमन्त्रं च, तेभ्यस्तीर्थप्रवर्त्तकाः । द्रव्यक्षेत्रकालभावैस्तीर्थानुज्ञां च कुर्वते ॥ ८७ ॥ कुर्वन्ति सर्वे शक्राद्या, देवाः पदमहोत्सवम् । वर्यैस्तूर्यत्रिकैर्हर्षप्रकर्षोल्लसदाशयाः ॥ ८८ ॥ सूत्रं गणधरा एव, ग्रथ्नन्त्येते महाधियः । दिशन्ति केवलानेव, प्रायोऽर्थांस्तीर्थपाः पुनः ॥ ८९ ॥ यथोच्चैः सहकारादितरुमारूढवान्नरः । स्वजनानामधःस्थानामुपकाराय शालिनाम् ॥ ९० ॥ फलानां कुरुते वृष्टिं, द्वित्राः केचन तेषु च । पतन्ति तानि गृह्णन्ति, पटेन प्रभविष्णवः ॥ ९१ ॥ अथ ते तान्युपादाय, संस्कृत्य च यथाविधि । उपयोज्य प्रीणयन्ति, स्वजनानात्मनोऽपि च ॥ ९२ ॥ तथा तीर्थङ्करा ज्ञानकल्पद्रुमशिरःस्थिताः । भव्यानामुपकाराय, वर्षन्त्यर्थाननुत्तरान् ॥ ९३ ॥ गृह्णन्ति तान् गणधरा, वितत्य धिप-

श्रावकपद-निरुक्तं सूत्ररचना जिनरूपं

णापटम् । आत्मानं रचितैस्तैश्चानुगृह्णन्त्यपरानपि ॥ ९४॥ पंचभिः कुलकम् । यथा फलानि व्यस्तानि, न सर्वानुपकुर्वते । कृतार्था न तथैवार्थाः, स्युः सूत्ररचनां विना ॥९५॥ मुक्ताफलानि व्यस्तानि, शतानि कुसुमानि वा। नासूत्राण्युपयुज्यन्ते, तथाऽर्था अपि देहिनाम् ॥ ९६ ॥

यादृक्स्वरूपाः सार्वेन्द्राः, प्राच्यां सिंहासनस्थिताः । तन्वते देशनां दीप्यमाना लोकोत्तरश्रिया ॥ ९७ ॥ तथैव शेषदिक्ष्वर्हत्प्रतिमाः सुरनिर्मिताः । विदध्युर्देशनां मूलस्वरूपादविशेषिताः ॥ ९८ ॥ जनः कोऽपि न जानाति, स्वरूपेषु चतुर्ष्वति । मूलस्वरूपं कतमत्, कतमद्वाऽत्र कृत्रिमम् ॥९९॥ तथाहुः—"जे ते देवेहिं कया तिदिसिं पडिरूवगा जिणवरस्स । तेसिंपि तप्पभावा तयाणुरूवं हवइ रूवं ॥१००॥" प्रतिरूपेषु यत्तेषु, नाकिभिर्विहितेष्वपि । रूपं स्याद्भगवत्तुल्यं, तन्महिम्नैव तद्ध्रुवम् ॥ १ ॥ अन्यथा तु सुराः सर्वे, यदि संभूय कुर्वते । अङ्गुष्ठप्रमितं रूपं, सर्वशक्तिप्रयत्नतः ॥ २ ॥ तज्जगज्जैत्ररूपार्हत्पादाङ्गुष्ठस्य सन्निधौ । निर्वाणाङ्गारविच्छायं, भवेद्दुर्वादिवृन्दवत् ॥ ३ ॥ आहुश्च—"यैः शान्तरागरुचिभिः परमाणुभिस्त्वं, निर्मापितस्त्रिभुवनैकललामभूत ! । तावन्त एव खलु तेऽप्यणवः पृथिव्यां, यत्ते समानमपरं न हि रूपमस्ति ॥ ४ ॥" तादृशाचार्हतां रूपाज्जगद्वाचामगोचरात्। अनन्तगुणहीनाः स्यू, रूपतो गणधारिणः ॥ ५ ॥ तेभ्यश्चाहारका देहा, अनन्तगुणहीनकाः । तेभ्योऽप्यनुत्तरा देवास्ततोऽधोऽधः क्रमात्सुराः ॥ ६ ॥ यावद्व्यन्तरगीर्वाणास्तेभ्यश्च चक्रवर्त्तिनः ।

१ सामान्यो विधिरयं, तेन सनत्कुमारादे रूपाधिक्येऽपि न क्षतिः, यद्वा नरेष्वसंभावनीयं तद्रूपमिति शक्रेन्द्रेण तद्वर्णनं सुरागमनं च ।



वासुदेवा बलदेवा, महामाण्डलिकाः क्रमात् ॥७॥ अनन्तगुणहीनाः स्युस्तच्छेषास्तु नृपादयः । लोकाः सर्वेऽपि षट्स्थानपतिता रूपतो मिथः ॥८॥ अनन्ता १ सङ्ख्य २ संख्येय ३ भागहीनाः परस्परम् । संख्येया ४ संख्येया ५-नन्त ६ गुणहीनाः स्वरूपतः ॥ ९ ॥ तादृग्रूपाश्च तेऽर्हन्तो, मनोनयनसौख्यदाः । जनानामभिगम्याः स्युरुपादेयगिरोऽपि च ॥ १० ॥ तथा तादृक् प्रभो रूपं, निरूप्यानुत्तरं जनाः । त्यक्तरूपाभिमानाः स्युर्न नीचैर्गोत्रबन्धिनः ॥ ११ ॥ धर्माद्वाप्यते रूपमीदृगैश्वर्यबन्धुरम् । इति धर्मे प्रवर्त्तन्ते, तेऽर्हद्रूपनिरूपणात् ॥१२॥ यदीदृग्रूपभाजोऽपि, राजवंश्या जिनेश्वराः। यतन्ते संयमे तर्हि, वयं किं न यतामहे? ॥ १३ ॥ इत्यालोच्याल्पकर्माणो, यतन्ते केऽपि संयमे । बहुधेत्यर्हतां रूपं, भवेल्लोकोपकारकृत् ॥ १४ ॥ यथा रूपं तथा संहननं संस्थानमेव च । वर्णो गतिः स्वरस्सत्त्वं, स्यादुच्छ्वासाद्यनुत्तरम् ॥ १५ ॥ अन्यासामपि सर्वासां, प्रकृतीनामनुत्तराः । प्रशस्ताः स्युः परीपाकास्तादृक्षान्नामकर्मतः ॥ १६ ॥ असातवेदनीयाद्या, दुष्टाः प्रकृतयोऽपि याः । दुग्धाब्धौ निम्बनिर्यासबिन्दुवत्ता न दुःखदाः ॥ १७ ॥

अर्हतां पादमूले च, सदा सन्निहितो भवेत् । प्रायो गणधरो ज्येष्ठः, कदाचिदपरोऽपि वा ॥ १८ ॥ परं न स्वामिपादाब्जमेकेन गणधारिणा । भवेत्कदापि रहितं, त्रिदशेनेव नन्दनम् ॥ १९ ॥ ज्येष्ठो गणी सोऽपरो वा, प्रणम्य परमेश्वरान् । पार्श्वे निषीदत्याग्नेय्यामन्येऽप्येवं गणाधिपाः ॥ २० ॥ मुनयः केवलज्ञानशालिनोऽथ जिनेश्वरान् । त्रिश्च प्रदक्षिणीकृत्य, कृत्वा तीर्थनमस्कृतिम् ॥२१॥ यथाक्रमं निविष्टानां, पृष्ठतो गणधारिणाम् ।

जिनरूपं पर्षत्स्थानं

निषीदन्ति पदस्थानां, रक्षन्तो गौरवं स्थितेः ॥ २२ ॥ कृतकृत्यतया तादृक्कल्पत्वाच्च जिनेश्वरान् । न नमस्यन्ति तीर्थं तु, नमन्त्यर्हन्नमस्कृतम् ॥ २३ ॥ उक्तं च धनपालेन महात्मना—"होही मोहुच्छेओ तुह सेवाए धुवत्ति नंदामि । जं पुण न वंदिअव्वो तत्थ तुमं तेण जिज्झामि ॥ २४ ॥" मनःपर्यायज्ञान्याद्यास्ततोऽतिशयिसाधवः । नत्वाऽर्हत्तीर्थगणिनः, सर्वज्ञांश्चासते ततः ॥ २५ ॥ तेषां च पृष्ठतः शेषसंयता अर्हदादिकान् । प्रणिपत्य निषीदन्ति, विनयेन यथाक्रमम् ॥ २६ ॥ तेषां च पृष्ठतो वैमानिकदेव्योऽर्हदादिकान् । प्रणिपत्यासते तासां, पृष्ठे साध्व्यस्तथैव च ॥ २७ ॥ इत्येताः पर्षदस्तिस्रो, निषीदन्त्यग्निकोणके । प्रविश्य पूर्वद्वारेण, कृत्वा चार्हत्प्रदक्षिणाम् ॥ २८ ॥ देव्योऽथ भवनज्योतिर्व्यन्तराणामिति त्रयम् । याम्यद्वारा प्रविश्याऽऽस्ते, नैर्ऋत्यां दिशि पर्षदाम् ॥ २९ ॥ सुरास्त्रयोऽमी पूर्वोक्ताः, पुनस्तिष्ठन्त्यनुक्रमात् । प्रविश्य पश्चिमद्वारा, वायव्यां विनयानताः ॥३०॥ वैमानिकाः सुरास्सेन्द्रा, मनुजा मनुजस्त्रियः । प्रविशन्त्युत्तरद्वारा, तिष्ठन्त्यैशानकोणके ॥३१॥ पर्षदो द्वादशाप्येवं, निषीदन्त्युक्तदिक्ष्विमाः । प्रदक्षिणीकृत्य नत्वाऽर्हतो गण्यादिकांस्तथा ॥३२॥ आयाति यो यज्जातीयः, स तत्पर्षदि तिष्ठति । न तत्र मानो द्वेषो वा, न भयं न नियन्त्रणा ॥ ३३ ॥ महर्द्धिकं समायान्तं, नमन्त्यल्पर्द्धिकाः स्थिताः । व्रजन्तोऽपि नमन्तोऽमी, यान्ति प्रौढर्द्धिकं स्थितम् ॥३४॥ यो यो यस्य परीवारो, यो वा

१ जिनानां नमस्यता प्रदक्षिणात्रयकरणेन, गणधराणां नमस्यता च नमस्तीर्थायेति भणनात्, तीर्थं नत्वा तीर्थस्य पृष्ठत उपविशन्तीत्यावश्यकोक्तेः, आवर्त्तैर्वन्दनं नेति वन्दनवन्ध्यताविषया धनपालोक्तिरप्यवितथैव ।

यन्निश्रयाऽऽगतः । त्रिदशो वा मनुष्यो वा, स तत्पार्श्वे निषीदति ॥ ३५ ॥ देव्यश्चतुर्द्धा साध्व्यश्च, शृण्वन्त्यूर्ध्वदमाः क्षणम् । देवाः सर्वे नरा नार्यो, निविष्टाः श्रमणास्तथा ॥ ३६ ॥ वृत्तावावश्यकस्येदं, चूर्णौ चोत्कटिकासनाः । शृण्वन्ति साधवोऽथोर्ध्वाः, साध्व्यो वैमानिकाङ्गनाः ॥३७॥ उपविश्यैव शृण्वन्ति, देशनामासभास्वताम् । पर्षदोऽन्या नवेत्युक्तं, वेत्ति तत्त्वं तु तत्त्ववित् ॥ ३८ ॥ अपूर्वं यत्र समवसरणं नेक्षितं च यैः । अपि द्वादशयोजन्यास्ते तत्रायान्ति साधवः ॥ ३९ ॥ अथ चेत्साधवस्तत्र, ते नायांति श्लथादराः । तत्प्रायश्चित्तमर्हन्ति, चतुर्गुरुकसंज्ञकम् ॥ ४० ॥ आगच्छतां च बालानां, ग्लानानां जरतामपि । न कोऽप्युपद्रवो नार्तिर्न त्रासः स्यान्न वा श्रमः ॥ ४१ ॥ तावदुत्तुङ्गसोपानसहस्रारोहणे भवेत् । न कस्यापि श्रमश्वासव्यथाः शम्भुप्रभावतः ॥ ४२ ॥ स्त्रीक्षेत्रवित्ताद्युत्थानि, पितृघातोदितान्यपि । तत्रागतानां शाम्यन्ति, द्रुतं वैराणि पापवत् ॥४३॥ युद्ध्यमाना मिथः क्रूराः, क्रोधरक्तेक्षणाननाः । कम्पमाना उदस्तास्त्रा, उच्छुण्डाः कुञ्जरा इव ॥ ४४ ॥ भवन्ति ये तेऽपि तत्रागता विस्मृतविग्रहाः । प्रशान्तचित्ताः शृण्वन्ति, धर्मं स्वामिप्रभावतः ॥४५॥ युग्मम् । न कोऽपि विकथां कुर्याद्व्याक्षेपं कोऽपि नापरम् । तदेकचित्ताः शृण्वन्ति, जिनानां देशनां जनाः ॥ ४६ ॥ शृण्वन्ति येऽपि तिर्यञ्चः, स्थिता वप्रे द्वितीयके । तेऽपि विस्मृतजात्यादिवैराः स्युस्तत्प्रभावतः ॥ ४७ ॥ पार्श्वस्थं सिंहमातङ्गं, शार्दूलहरिणं तथा ।

१ ध्यानकोष्ठोपगतत्वावस्थायामुत्कटिकासनं साधूनां, तत्र श्रीजिनदेशनाश्रवणार्थं च स्थानं, यद्वा औपग्रहिकमासनमिति तद्भावाभावकृतो भेदः, भवनपत्यादिदेवीनां श्राविकाणां च तथा सामान्येन ठंतिशब्देन कथनेऽपि यथायोगमेव स्यादिति न विरुद्धता ।

श्येनपारावतं व्याघ्रच्छागं मार्जारमूषकम् ॥४८॥ महिषाश्वं च नकुलसर्पं शूकरकुर्कुरम् । एकाग्रचित्ताः शृण्वन्ति, प्रभोरत्यमृतं क्षणम् ॥ ४९ ॥ युग्मम् ॥ बिभेति तत्र नो बाध्यो, बाधकस्तं न बाधते । स्युः सार्वातिशयाच्छान्तर सतृप्ताः समेऽपि ते ॥ ५० ॥

प्रथमां पौरुषीं यावद्धर्ममाख्यान्ति पारगाः । अत्रान्तरे च यस्तत्र, चक्रवर्त्यादिको नृपः ॥ ५१ ॥ श्राद्धोऽमात्यादिको वा यस्तदभावे च पूर्जनः । जनो जानपदो वापि, सज्जयत्यद्भुतं बलिम् ॥ ५२ ॥ तण्डुलास्तत्र कलमशालीनां स्युः सितत्विषः । उद्दामसौरभाः स्निग्धास्तनवः कोमला भृशम् ॥ ५३ ॥ दुर्बलाकण्डिताः पूता, बलवत्याऽतिनिस्तुषाः । अखण्डाग्राश्चतुःप्रस्थप्रमिताऽऽढकसंमिताः ॥५४॥ अर्पिताः स्वजनानां ये, तुषभग्नादिशुद्धये । पुनस्तेभ्यः समुच्चित्य, शोधिताः शुद्धवारिणा ॥ ५५ ॥ अर्धखिन्नानिमांस्तत्र, स्थाले निक्षिप्य निर्मले । सज्जिताखिलशृङ्गारा, मौलौ धत्ते सुवासिनी ॥ ५६ ॥ गन्धद्रव्याणि दिव्यानि, निक्षिपन्त्यत्र नाकिनः । तेनासौ भूरिसौरभ्यसुभगो जायते बलिः ॥ ५७ ॥ नीयते गीतवाद्यादिमहोत्सवपुरस्सरम् । श्राद्धेनासौ प्रभोरग्रे, श्लाघ्यमानेन धार्मिकैः ॥ ५८ ॥ पूर्वद्वारा प्रविशति, बलिरेवं महामहैः । तस्मिन्नागतमात्रे च, विरमन्ति क्षणाज्जिनाः ॥५९॥ ततः स चक्रवर्त्यादिः, श्रावको बलिना सह । तिस्रः प्रदक्षिणाः कृत्वा, प्राच्यां प्रभुपदान्तिके ॥ ६० ॥ किरत्याशासु सर्वासु, तं बलिं प्रौढमुष्टिभिः । तस्य प्रागेव भूपातादर्द्धं गृह्णन्ति नाकिनः ॥ ६१ ॥ अर्द्धं च शेषस्यार्द्धस्य, गृह्णात्येतद्विधायकः । अवशिष्टं यथालाभं, गृह्णन्त्यन्येऽखिला जनाः ॥ ६२ ॥ मूर्ध्नि न्यस्तेन

॥४५९॥

तस्यैककणेनासेन भाग्यतः । रोगाः सर्वेऽपि शाम्यन्ति, पर्जन्येनेव वह्नयः ॥ ६३ ॥ प्रादुर्भवति षण्मासावधि रोगो न नूतनः । तस्मान्मौलिस्थिताद्रत्नदीपादिव तमोऽङ्कुरः ॥ ६४ ॥ इत्थं बलिविधौ पूर्णे, जिनाः प्रथमवप्रतः । अवतीर्य द्वितीयस्य, वप्रस्यैशानकोणके ॥६५॥ देवच्छन्दकमागत्य, सुखं तिष्ठन्ति नाकिभिः । अप्यल्पैः कोटिसंख्याकैः, सेविता भृतकैरिव ॥ ६६ ॥ युग्मम् ।

ततो द्वितीयपौरुष्यामाद्योऽन्यो वा गणाधिपः । सिंहासने नृपानीते, पादपीठेऽथवाऽर्हताम् ॥ ६७ ॥ उपविश्यादिशेद्धर्मोपदेशमतिपेशलम् । स छद्मस्थोऽपि भव्यानां, पृच्छतां सर्ववेदिवत् ॥ ६८ ॥ व्याकुर्वन् विविधान् भावान्, संख्यातीतभवादिकान् । छद्मस्थोऽयं जिनो वेति, न छद्मस्थैः प्रतीयते ॥६९॥ त्रिभिर्विशेषकम् । तथाऽऽहुः श्रीभद्रबाहुस्वामिपादाः–"राओवणीअसीहासणे निविट्ठो व पायपीढंमि । जेट्ठो अण्णयरो वा गणहारि कहेइ बीयाए ॥७०॥ संखाईएवि भवे साहइ जं वा परो उ पुच्छिज्जा । न य णं अणाइसेसी विआणई एस छउमत्थो ॥ ७१ ॥"पुनः पाश्चात्यपौरुष्यां, स्थित्वा सिंहासने जिनाः । कुर्वते देशनां सर्वा, व्यवस्थाऽत्रापि पूर्ववत् ॥ ७२ ॥

प्राक्कदापि न जातं स्याद्यत्र तत्र चतुर्विधाः । कुर्वन्ति देवाः समवसरणं विधिनाऽमुना ॥ ७३ ॥ जातेऽप्यस्मिन् मुहुर्यत्र, देवः कश्चिन्महर्द्धिकः । नन्तुमेति स तत्रैकः, कुरुते भक्तिमानिदम् ॥ ७४ ॥ यदापि न स्यात्समवसरणं स्यात्तदापि हि । वक्ष्यमाणं प्रातिहार्याष्टकं नियतमर्हताम् ॥ ७५ ॥ अशोकवृक्षः सश्रीको, भवेद्योजन-

विस्तृतः। चलतिकसलयो भव्यान्, कराग्रैराह्वयन्निव ॥ ७६ ॥ अधोवृन्तानि पुष्पाणि, पञ्चवर्णानि नाकिनः। तन्वते जानुदघ्नानि, जिनानां देशनावनौ ॥ ७७ ॥ मालवकैशिकीमुख्यग्रामरागाश्रितोऽर्हताम् । आयोजनं ध्वनिर्दिव्यध्वनिमिश्रः प्रसर्पति ॥ ७८ ॥ स्वर्णसिंहासनं पादपीठयुग्मणिमण्डितम्। अध्यासते जिनास्तच, मार्गे व्योम्नि पुरश्चरेत् ॥ ७९ ॥ छत्रत्रयं तथैवाभ्रे, चरत्युज्ज्वलमौक्तिकम्। जगद्वन्द्योपरिस्थित्या, मुदेवोद्धुर-कन्धरम् ॥ ८० ॥ भामण्डलं सार्वपृष्ठे, भाल्यर्कस्येव मण्डलम्। प्रपन्नं शरणायेव, नियतास्तकदर्थितम् ॥ ८१ ॥ सति प्रभौ कुतः कर्मकृच्छ्रं सासह्यतेऽङ्गिभिः। वक्तीतीवाङ्गिनां गर्जंस्तत्पुरो देवदुन्दुभिः ॥ ८२ ॥ एवं च-अशोकद्रुः १ पुष्पराशिः २, सद्ध्वनि ३ श्चामरा ४ सने ५। छत्रं ६ भामण्डलं ७ भेरी ८, प्रातिहार्याष्टकं ह्यदः ॥ ८३ ॥

तथा चतुस्त्रिंशता तेऽतिशयैः सहिता जगत्। दीपयन्ति प्रकृत्योपकारिणो भास्करादिवत् ॥ ८४ ॥ अतिशयांश्चैवमाहुः—"तेषां च देहोऽद्भुतरूपगन्धो, निरामयः स्वेदमलोज्झितश्च १। श्वासोऽब्जगन्धो २ रुधिरामिषं च, गोक्षीरधाराधवलं ह्यविस्रम् ३ ॥८५॥ आहारनीहारविधिस्त्वदृश्य ४ श्चत्वार एतेऽतिशयाः सहोत्थाः। क्षेत्रे स्थितिर्योजनमात्रकेऽपि, नृदेवतिर्यग्जनकोटिकोटेः १ ॥ ८६ ॥ वाणी नृतिर्यक्सुरलोकभाषासंवादिनी योजनगामिनी च २। भामण्डलं चारु च मौलिपृष्ठे, विडम्बिताहर्पतिमण्डलश्रि ३॥ ८७ ॥ साग्रे च गव्यूतिशतद्वये रुजो ४, वैरे ५ तयो ६ मार्य ७ तिवृष्ट्य ८ वृष्टयः ९। दुर्भिक्ष १० मन्यस्वकचक्रतो भयं ११, स्युर्नैत एकादश

॥ ४६० ॥

कर्मघातजाः ॥८८॥ खे धर्मचक्रं १ चमराः २ सपादपीठं मृगेन्द्रासन ३ मुज्ज्वलं च। छत्रत्रयं ४ रत्नमयध्वजोऽ ५-ह्रिन्यासे च चामीकरपङ्कजानि ६ ॥ ८९ ॥ वप्रत्रयं ७ चारुचतुर्मुखाङ्गता ८, चैत्यद्रुमो ९ ऽधोवदनाश्च कण्टकाः १०। द्रुमानति ११ र्दुन्दुभिनाद १२ उच्चकैर्वातोऽनुकूलः १३ शकुनाः प्रदक्षिणाः १४ ॥ ९० ॥ गन्धाम्बुवर्ष १५ बहुवर्णपुष्पवृष्टिः १६ कचश्मश्रुनखाप्रवृद्धिः १७। चतुर्विधामर्त्यनिकायकोटिर्जघन्यभावादपि पार्श्वदेशे १८ ॥ ९१ ॥ ऋतूनामिन्द्रियार्थानामनुकूलत्व १९ मित्यमी। एकोनविंशतिर्दैव्याश्चतुस्त्रिंशच मीलिताः ॥ ९२ ॥ यत्तु श्रीसमवायाङ्गसूत्रे एतेषु केचिदतिशया अन्यथा दृश्यन्ते तन्मतान्तरं बोद्धव्यं ॥ चत्वारोऽतिशयाश्चान्ये, तेषां विश्वोपकारिणाम्। पूजा १ ज्ञान २ वचो ३ ऽपायापगमाख्या ४ महाद्भुताः ॥९३॥ अष्टकं प्रातिहार्याणां, चत्वारोऽतिशया इमे। इत्येवं द्वादश गुणा, अर्हतां परिकीर्त्तिताः ॥ ९४ ॥ गुणैस्ते सकलैः पूर्णा, निर्विपक्षस्थितेरिव। नानास्थानासिगर्वेण, त्यक्ता दोषैश्च दूरतः ॥९५॥ तथाहुः—"को विस्मयोऽत्र यदि नाम गुणैरशेषैस्त्वं संश्रितो निरवकाशतया ? मुनीश !। दोषैरुपात्तविविधाश्रयजातगर्वैः, स्वप्नान्तरेऽपि न कदाचिदपीक्षितोऽसि ॥९६॥"

दोषास्तीर्थकृतां यद्यप्यनन्ता विलयं गताः। तथाप्यग्रेसरास्तेषाममी ह्यष्टादशोदिताः ॥ ९७ ॥ अन्तराया ५ दान १ लाभ २ वीर्य ३ भोगो ४ पभोगगाः ५। हासो ६ रत्य ७ रती ८ भीति ९ र्जुगुप्सा १० शोक एव च ११ ॥ ९८ ॥ कामो १२ मिथ्यात्व १३ मज्ञानं १४, निद्रा १५ चाविरति १६ स्तथा। रागो १७ द्वेषश्च १८ नो दोषास्तेषामष्टादशाप्यमी ॥९९॥ हिंसा १ ऽलीक २ मदत्तं च ३, क्रीडा ४ हास्या ५ रती ६ रतिः ७। शोको ८ भयं

९ क्रोध १० मान ११ माया १२ लोभा १३ स्तथा मदः १४ ॥१०००॥ स्युः प्रेम १५ मत्सरा १६ ज्ञान १७ निद्रा १८ अष्टादशेत्यमी । द्वेधाऽपि सप्ततिशतस्थानके प्रतिपादिताः ॥ १ ॥ १८ दोषाः

जिनाश्च विहरन्त्येते, भूमौ विश्वोपकारिणः । भाविभद्रेषु देशेषु, भाग्यवल्लोकशालिषु ॥ २ ॥ श्राद्धाश्च चक्रवर्त्त्याद्यास्तेषां विहरतां सुखम् । उदन्तशंसिनां नृणां, वृत्तिं यच्छन्ति वार्षिकीम् ॥ ३ ॥ अर्हत्सुखविहारादि, प्रत्यहं ते परापराः । आचक्षते स्वनाथेभ्योऽधिकृतास्तत्र कर्मणि ॥ ४ ॥ लक्षाणि स्वर्णटङ्कानामद्ध्यर्द्धानि त्रयोदश । वृत्तिदानं नियुक्तानां, ददते चक्रवर्त्तिनः ॥ ५ ॥ वासुदेवास्तु रौप्याणां, लक्षाः सार्द्धास्त्रयोदश । दद्युर्माण्डलिकाः सार्द्धांस्त्रयोदश सहस्रकान् ॥ ६ ॥ अर्हदागमनोदन्तं, यदा यः कोऽपि शंसति । प्रीतिदानं तदा तस्मै, ददते चक्रवर्त्तिनः ॥ ७ ॥ कोटीस्त्रयोदशाद्ध्यर्द्धाः, सौवर्णानां प्रमोदतः । वासुदेवास्तु रौप्याणां, कोटीः सार्द्धास्त्रयोदश ॥ ८ ॥ दद्युर्माण्डलिका रौप्यलक्षाः सार्द्धास्त्रयोदश । परेऽपि ददते लोकाः, शक्तिभक्त्यनुसारतः ॥ ९ ॥ वृत्तिप्रीतिदानादि

एवं विहृत्य भूपीठं, भव्यजीवान् विबोध्य च । निजायुःप्रान्तसमयेऽनशनं कुर्वते जिनाः ॥१०॥ तदा केचिद्गणधराः, केचनान्येऽपि साधवः । कुर्वन्त्यनशनं सार्द्धं, स्युः प्राप्तावसरा यदि ॥ ११ ॥ ततोऽधिरुह्य शैलेशीं, सर्वकर्मक्षयक्षणे । संप्राप्य शाश्वतं स्थानं, निर्बाधाः सुखमासते ॥१२॥ क्षणं तदाऽन्धकारः स्याद्यतो लोके भवेत्तमः । विच्छेदे जिनतद्धर्मपूर्वश्रुतहविर्भुजाम् ॥ १३ ॥ तत्रैव समये सर्वे, देवेन्द्राश्चलितासनाः । ज्ञात्वाऽर्हन्नि-



र्वृतिं ज्ञानाद्वदन्त्येवं विषादिनः ॥ १४ ॥ हा निवृत्ता जगन्नाथा, जगद्दीपनभास्कराः । तदस्माभिर्द्रुतं कार्यस्तन्निर्वाणमहोत्सवः ॥१५॥ इत्युक्त्वा पादुके त्यक्त्वा, पूर्ववद्विधिपूर्वकम् । तत्रस्था एव वन्दन्ते, भावतो जिनभूघनान् ॥१६॥ निर्जीवान्यपि वन्दन्ते, वपूंषीन्द्रा यदर्हताम् । तदर्हद्द्रव्यनिक्षेपो,वन्द्यः सम्यग्दृशामिति॥१७॥ सामानिकादिनिःशेषपरिच्छदसमन्विताः। ततस्ते दिव्यया गत्या, निर्वाणस्थानमर्हताम् ॥१८॥ उपेत्याश्रुविमिश्राक्षा, विषादविधुराननाः । निरानन्दा निरुत्साहाः, शोचन्तश्च मुहुर्मुहुः ॥१९॥ तिस्रः प्रदक्षिणां कृत्वा, नत्वा च भगवत्तनूः । नात्यासन्ना नातिदूरदेशस्थाः पर्युपासते ॥२०॥ त्रिभिर्विशेषकम् । धर्मभृत्यान् कुतो नास्मानीक्षसे नाथ ! पूर्ववत् । अकाण्डेऽयं किमारब्धस्त्यागोऽस्माकं निरागसाम् ? ॥२१॥ किमात्मंभरिता युक्ता, विश्वेशानां भवादृशाम् ? । अनन्तसुखसाम्राज्यं, भुज्यतेऽस्मान् विहाय यत् ॥२२॥ वयं क्व यामः ? किं कुर्मो ?, व्याकुलाश्चिन्तयाऽनया । त्यजतैकपदे स्वामिन् !, निरालम्बाः कृतास्त्वया ॥ २३ ॥ अद्यारम्यमिदं नाथ !, जातं क्षेत्रं त्वया विना । निद्र्यस्तदीपगृहवद्, गतादित्यान्तरिक्षवत् ॥२४॥ स्वामिन् ! भवन्तं समवसरणस्थं महाश्रियम् । स्मारं स्मारं मुहुर्वक्षो, दीर्यते शतधाऽद्य नः॥ २५ ॥ भवान् यद्यपि हे स्वामिन्ननन्तसुखभागभूत् । विशोचामस्तथाप्येवं, वयं स्वार्थाय केवलम् ॥ २६ ॥ शक्रोऽथ विलपन्नेवं, निर्जरैराभियोगिकैः । गोशीर्षचंदनैधांसि, बह्वन्याहरयेद्द्रयात् ॥२७॥ ततस्तैर्नन्दनानीतैश्चन्दनैर्वैश्चितात्रयम् । अर्हतां च गणीनां च, कारयेद्यतिनामपि ॥ २८ ॥ तत्रापाच्यां भगवतां, चिता भवति वर्त्तुला । याम्यां गणभृतां त्र्यस्रा, प्रतीच्यां यतिनां पुनः ॥२९॥ चतुरस्रा भवेच्चिताभेदः संस्थान-

दिग्भवः। श्रीआवश्यकवृत्त्यादौ, चितीनामिति दर्शितः॥३०॥ युग्मम्। ततः क्षीरार्णवानीतैः, क्षीरैर्भगवतां तनूः। स्नपयित्वाऽथ गोशीर्षचन्दनेनानुलिप्य च ॥३१॥ परिधाप्योत्तमं हंसलक्षणं पटशाटकम्। वज्रभृत्कुरुते भक्त्या, सर्वालङ्कारभूषिताः॥ ३२॥ युग्मम्। अन्ये च देवा गणभृद्वपूंषि विधिनाऽमुना। परे मुनिशरीराणि, स्नपयन्त्यर्चयन्ति च॥ ३३ ॥ अथेन्द्रवचनात्तिस्रः, शिबिकाः कुर्वते सुराः। तत्रैकस्यां जिनाङ्गानि, शक्रः स्थापयति स्वयम् ॥ ३४ ॥ गणीनां च मुनीनां च, परस्मिन् शिबिकाद्वये। स्थापयन्ति परे देवास्ततः शक्रसुरा अपि ॥ ३५ ॥ भक्त्या स्वस्कन्धमारोप्य, शिबिकाः समहोत्सवम्। स्थापयन्त्यर्हदादीनां, देहांश्चित्यात्रये क्रमात् ॥ ३६ ॥ युग्मम्। ततः शक्राज्ञया वह्निकुमाराः साश्रुलोचनाः। विमनस्काः क्षिपन्त्यग्निं, चित्यासु तिसृषु क्रमात् ॥३७॥ तथैव च ततो वायुकुमाराः स्वःपतेर्गिरा। द्रुतमुज्ज्वालयन्त्यग्निं, पवमानैर्विकुर्वितैः॥ ३८॥ ततश्चतुर्विधा देवा, आज्ञप्ता वज्रपाणिना। तुरुष्ककाकतुण्डादिभारान् सारान् सहस्रशः॥ ३९॥ कुम्भान् मधुघृतानां च, जुहुयुर्वह्निदीप्तये। ततोऽङ्गेष्वस्थिशेषेषु, संस्कृतेषु हविर्भुजा ॥ ४०॥ निर्वापयन्ति जीमूतकुमारा वासवाज्ञया। क्षीरोदादाहृतैः क्षीरकल्पनीरैश्चिताश्च ताः॥४१॥ त्रिभिर्विशेषकम्। ततश्च–याम्यामूर्ध्वस्थां जिनानां, दाढां गृह्णाति वज्रभृत्। चमरेन्द्रोऽधस्तनीं तां, तत्तद्दिश्याधिपत्यतः ॥ ४२ ॥ वामामुपरिगां दाढामिन्द्रो गृह्णाति शूलभृत्। बलीन्द्रश्चाधस्तनीं तां, शेषाः सर्वे सुरासुराः॥४३॥ अस्थीन्यथाङ्गोपाङ्गानां, सर्वाण्याददते मुदा। अर्हद्भक्त्यनुरागेण, केचित्केचिच्च जीततः ॥ ४४॥ पूर्वमाहात्म्यमेतेषां, क्षेत्रलोके निरूपितम्। ग्रन्थान्तरे प्रसिद्धोऽयमपि हेतुर्निशम्यताम् ॥ ४५॥ "पूअंति सुरा ताओ अह कोइ पराभवं जइ करेज्जा। तो पक्खालिअ ताओ सलिलेण करंति निअरक्खं ॥ ४६ ॥" आस्तां त्रिजगदर्च्यानामस्थिग्रहणमर्हताम्। सुरा आददतेऽस्थीनि, योगभृच्चक्रिणामपि ॥४७॥ इत्यर्थतो जम्बू प्र० वृ०। चिताभस्मापि गृह्णन्ति, शेषं विद्याधरादयः। सर्वोपद्रवनिर्नाशविधौ परममौषधम् ॥४८॥ रजस्यपि गृहीतेऽस्मादर्हत्पूर्विकया नरैः। गर्त्ता भवत्यखातैव, चितास्थाने ततोऽर्हताम् ॥४९॥ मा भूदपरलोकांह्रिस्पर्शादाशातनेत्यथ। सातत्येन च तीर्थस्य, प्रवृत्तिर्भवतादिति ॥५०॥ रत्नैरापूर्य तां गर्त्तां, खचितं रत्नकाञ्चनैः। कारयत्यर्हतां चैत्यस्तूपं शक्रः सुरासुरैः ॥ ५१ ॥ गणीनां च मुनीनां च, चित्यास्थानकयोरपि। शक्रः स्तूपौ कारयति, रत्नस्वर्णमणीमयौ ॥ ५२ ॥ एवं चतुर्विधा देवा, निर्वाणस्य महोत्सवम्। यथोचितं विदधते, भक्तिनिर्भरचेतसः ॥ ५३ ॥ ततो नन्दीश्वरे गत्वा, विधायाष्टाह्निकोत्सवम्। यान्ति स्वस्वविमानेषु, यथास्वं भवनेषु च ॥ ५४ ॥ सुधर्माख्यसभावर्तिचैत्यस्तम्भावलम्बिषु। समुद्गकेषु यान्यासन्नस्थीनि प्राक्तनार्हताम् ॥ ५५ ॥ तान्यर्चयन्ति संस्थाप्य, सिंहासने समुद्गकान्। समुद्गकेषु तेष्वेव, सद्यस्कानि क्षिपन्ति च ॥५६॥ ततोऽभ्यर्च्य पुनः स्तम्भे, लम्बयन्ति समुद्गकान्। चैत्यदैवतवत्तानि, नित्यमाराधयन्ति च ॥५७॥ इदमर्थतः षष्ठाङ्गसूत्रवृत्तौ मल्लिनिर्वाणाधिकारे॥ सभायां च सुधर्मायां, तेषामाशातनाभिया। कामक्रीडां न कुर्वन्ति, जिनभक्ताः सुराधिपाः ॥५८॥ कालेन कियता चैते, गतशोकाः सुरेश्वराः। गीतनाट्यादिसौख्यानि, भुञ्जानाः सुखमासते ॥५९॥ इत्यनन्तगुणरत्नशालिनामर्हतामुदितमागमोदधेः। वर्णनं तदुरुवर्णवर्णिकाकर्णिकारविपिनप्रसूनवत् ॥६०॥ (रथोद्धता) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्री-

चक्रित्वहेतुः

वाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः। काव्यं यत्किल तत्र वर्णितजगत्तत्त्वेऽद्भुतत्रिंशता, संख्यातः परिपूर्णभावमभजत्सर्गो निसर्गोज्ज्वलः ॥६१॥ इति श्रीलोकप्रकाशे त्रिंशत्तमः सर्गः समाप्तः ॥

## ॥ अथैकत्रिंशत्तमः सर्गः प्रारभ्यते ॥

स्वरूपमर्हतामेवमुक्तं शास्त्रानुसारतः। अथोच्यते यथाशास्त्रं, स्वरूपं चक्रवर्तिनाम् ॥ १ ॥ शृङ्गग्राहिकया कर्म, चक्रवर्तित्वसाधनम्। पृथग् यद्यपि न प्रोक्तं, तीर्थकृन्नामकर्मवत् ॥२॥ तथापि—तीव्रानुभागं यत्सातवेदनीयं घनाणुकम्। उच्चैर्गोत्रं तथोत्कृष्टं, नामकर्मापि तादृशम् ॥ ३ ॥ लाभभोगादिविघ्नानां, क्षयोपशमपाटवम्। इत्यादिभिस्समुदितैर्जायते चक्रवर्त्तिता ॥ ४ ॥ युग्मम्। पूर्वोक्तविंशतिस्थानान्तर्गतैरेव कैश्चन। साधुवैयावृत्यदानसत्तपःसंयमादिभिः ॥ ५ ॥ विशिष्टाध्यवसायेन, सातवेद्यादिकर्मणाम्। तादृशः स्यात्परीणामः, प्राग्जन्मन्यार्षभेरिव ॥ ६ ॥ तथोक्तमावश्यकनिर्युक्तौ—"बिइओ वेयावच्चं किइकम्मं तइयओ कासि ॥ भोगफलं बाहुबलं"। इति। तीर्थकृन्नामहेतूनां, स्थानानां ननु विंशतेः। कथं चक्रित्वहेतुत्वं, पटहेतुत्ववन्मृदः ?॥ ७ ॥ अत्रोच्यते—यथैकस्माद्रसादिक्षोर्नानाखण्डगुडादयः। स्युः सामग्रीभिदोऽत्रापि, तथा सम्यग्विभाव्यताम् ॥ ८ ॥ स्युर्यथा वैकजातीयतन्तुभ्यो विविधाः पटाः। तेषामेव वरत्रा स्यात्, सामग्र्यन्तरभेदतः ॥ ९ ॥ एवं बलत्वविष्णुत्वनृपत्वादिपदेष्वपि। भाव्यः कर्मपरीणामोऽध्यवसायविशेषतः ॥ १० ॥ उद्धृत्य सर्वदेवेभ्यो, घर्मायां एव च क्षितेः। उत्पद्यन्तेऽङ्गिनश्चक्रितया नान्यगतेः पुनः ॥ ११ ॥ तथोक्तं—"सुरनेरइएहिं चिय हवंति हरिअरिहचक्किबलदेवा। चउविहसुर चक्किबला वेमाणिअ हुंति हरिअरिहा ॥ १२ ॥" इति संग्रहण्याद्यभिप्रायः। श्रीआवश्यकनिर्युक्तौ तु—मनुष्यगतेरागतस्यापि श्रीवीरस्य प्राग्भवे चक्रित्वमुक्तं, तथाहि—"चुलसीइमप्पइट्ठे सीहो नरएसु तिरियमणुएसु[1]। पिअमित्त चक्कवट्टी मूअविदेहाइ चुलसीएं ॥१३॥" इति ज्ञेयं। तीर्थंकरवदेतेऽपि, जातिगोत्रोन्नतिस्पृशाम्। वंशेषु भूभृतामेवोत्पद्यन्ते नत्वनीदृशाम् ॥ १४ ॥ तद्वच्चतुर्दशस्वप्नसूचितोत्पत्तयः क्रमात्। जायन्ते जनकोन्नीतप्रौढजन्ममहोत्सवाः ॥ १५ ॥ अर्हद्वन्नाकनरकागतयोश्चक्रिणोः प्रसूः। पश्यति द्वादशे स्वप्ने, विमानभवने क्रमात् ॥ १६ ॥ धात्र्येकाऽधिकृता स्तन्ये, द्वे मज्जनविभूषयोः। अन्योत्सङ्गार्पणे नित्यं, परा च क्रीडनादिषु ॥ १७ ॥ एवं च—धात्रीभिः पञ्चभिः पाल्यमानाः कृप्तोचिताह्वयाः। ते सुखेनैव वर्द्धन्ते, नन्दनस्वर्द्रुमा इव ॥ १८ ॥ साक्षीकृत्य कलाचार्यमधीताखिलवाङ्मयाः। लक्षणानां सहस्रेणाष्टोत्तरेण विराजिताः ॥१९॥ लोमभिर्दक्षिणावर्त्तै, रचितेनाधिकश्रिया। महापुरुषचिह्नेन, श्रीवत्सेनासवक्षसः ॥२०॥ तथोक्तं श्रीजम्बूद्वीपप्रज्ञप्तिसूत्रे भरतचक्रिवर्णने—"पसत्थलोमविरइयसिरिवच्छलंछणविउलवच्छदेसे" इति। षट्त्रिंशता नृपगुणैस्ते प्रशस्तैरलङ्कृताः। राज्यं क्रमाद्वर्द्धमानं, पालयन्ति क्रमागतम् ॥२१॥ षट्त्रिंशतं नृपगुणांश्चैवमाहुः—"अव्यङ्गो १ लक्षणैः पूर्णो २, रूपसंपत्तिभृत्तनुः ३। अमदो ४ जगदोजस्वी ५, यशस्वी च ६ कृपालुहृत् ७ ॥२२॥ कलासु कृतकर्मा च ८, शुद्धराजकुलोद्भवः ९।

[1] तिरियमणुएसु इति भवभ्रमणोपलक्षणं, तेन मध्ये सुरनारकभवत्वेऽपि न क्षतिः, सप्तविंशतेर्भवेभ्योऽधिकत्वं तूभयथापि, नहि चरितानुवादो विधेर्निर्लोठकतया वक्तुं युक्तः।

॥ ४६३ ॥

वृद्धानुग १० स्त्रिशक्तिश्च ११, प्रजारागी १२ प्रजागुरुः १३ ॥ २३ ॥ समर्थनः पुमर्थानां, त्रयाणां सममात्रया १४। कोशवान् १५ सत्यसन्धश्च १६, चरदृग् १७ दूरमन्त्रदृग् १८ ॥ २४ ॥ आसिद्धिकर्मोद्योगी च १९, प्रवीणः शास्त्र–२० शास्त्रयोः २१। निग्रहा २२ नुग्रहपरो निर्लम्बं दुष्टशिष्टयोः २३,॥२५॥ उपायार्जितराज्यश्री २४ र्दानशौण्डो २५ ध्रुवंजयी २६। न्यायप्रियो २७ न्यायवेत्ता २८, व्यसनानां व्यपासकः २९ ॥२६॥ अवार्यवीर्यो ३० गाम्भीर्यौ ३१ दार्य-३२ चातुर्य ३३ भूषितः। प्रणामावधिकक्रोध ३४ स्तात्त्विकः ३५ सात्त्विको ३६ नृपः ॥ २७ ॥ तथा सूत्रं—"छत्तीसाहि य पत्थिवगुणेहिं संजुत्ते" इति। एवं गच्छति कालेऽस्य, प्रादुर्भवति कर्हिचित्। चक्रमायुधशालायां, प्राच्यं पुण्यमिवाङ्गभृत् ॥ २८ ॥ इदं प्रायोऽस्त्रशालायां, स्यादन्यत्रापि कस्यचित्। यथाऽभवत्सुभूमस्य, स्थालमेव तदात्मकम् ॥ २९ ॥ ततश्चायुधशालाया, अध्यक्षो मुदिताशयः। चक्ररत्नं नमस्कृत्य, निवेदयति भूपतेः ॥३०॥ तदाकर्ण्य प्रमुदितस्तदाशाऽभिमुखं नृपः। पदान्युपेत्य सप्ताष्टौ, चक्ररत्नं नमस्यति ॥ ३१ ॥ प्रीतिदाने मौलिवर्जं, दत्ते सर्वाङ्गभूषणम्। वित्तं चास्मै जीविकार्हं, सत्कारार्हांशुकादि च ॥ ३२ ॥ ततः स्नात्वाऽऽत्तसर्वार्चार्हद्रव्यः सपरिच्छदः। उपेत्यायुधशालायां, विधिना चक्रमर्चति ॥ ३३ ॥ ततः सोऽष्टादश श्रेणीराहूयेत्यादिशेत्पुरे। महिम्ने चक्ररत्नस्य, कुरुताष्टाहिकोत्सवम् ॥ ३४ ॥ अर्हत्पितृकृतो योऽर्हज्जन्मन्युक्तो महोत्सवः। यथार्हं सोऽनुसंधेय, इहाप्यष्टाहिकोत्सवे ॥ ३५ ॥ अष्टादश श्रेणीश्चैवमाहुः—"कुंभार १ पट्टइल्ला २ सुवण्णकारा य ३ सूवकारा य ४। गन्धव्वा ५ कासवगा ६ मालाकारा य ७ कच्छकरा ८ ॥ ३६ ॥ तंबोलिया य ९ एए नवप्पयारा य नारुआ भणिया। अह णं णवप्पयारे कारुअवण्णे पवक्खामि ॥३७॥ चम्मयर १ जंतपीलग २ गंछिय ३ छिंपयग ४ कंसकारा य ५। सीवग ६ गुआर ७ भिल्ला ८ धीवर ९ वण्णाइं अट्ठदस ॥३८॥ चित्रकारादयस्त्वेतेष्वेवान्तर्भवन्ति। मुदा पौरजनैः क्लृप्ते, समाप्तेऽष्टाहिकोत्सवे। निर्गत्यायुधशालायाश्चक्ररत्नं महोज्ज्वलम् ॥ ३९ ॥ व्योम्ना संचरते दिव्यवाद्यवाचालिताम्बरम्। अधिष्ठितं सहस्रेण, यक्षाणां वीक्षितं जनैः ॥ ४० ॥ नगर्यास्तच्च निर्गत्य, प्रतिपक्षभयङ्करम्। प्रतिष्ठते मागधाख्यतीर्थाभिमुखमुद्धतम् ॥ ४१ ॥ ततश्चक्र्यपि सन्नह्य, चतुरङ्गचमूवृतः। अनुगच्छति तच्चक्रं, भेरीमुखरिताम्बरः ॥ ४२ ॥ प्रमाणाङ्गुलजातैकयोजनप्रमितां भुवम्। अतिक्रम्य स्थितं तच्च, प्रयाणस्यादिमेऽहनि ॥ ४३ ॥ क्षेत्रमेतावदेवातिक्रामति प्रतिवासरम्। सुखिनो हि तथैव स्युर्बहुसैन्यचमूचराः ॥ ४४ ॥ चक्रिणां भरतादीनां, महादेहा नरादयः। सुखेन क्षेत्रमेतावन्निर्वहन्ति स्वशक्तितः ॥ ४५ ॥ चक्रिणामितरेषां तु, हीयमानाङ्गशक्तयः। इयत्क्षेत्रं निर्वहन्ति, नित्यं दैवतशक्तितः ॥ ४६ ॥ अनुगंगासरित्कूलं, गच्छन् दक्षिणपार्श्वतः। तत्रत्यान् सेवकीकुर्वन्, देशग्रामपुराधिपान् ॥ ४७ ॥ प्रतीच्छन् प्राभृतान्येषामनुयातश्च तैर्नृपैः। आरान्मागधतीर्थस्य, स्कन्धावारं निवेशयेत् ॥ ४८ ॥ नवयोजनविस्तीर्णो, द्वादशयोजनायतः। स्कन्धावारो भवत्यस्य, राजधानीसमस्थितिः ॥ ४९ ॥ अथ वार्द्धकिरत्नं स, समाहूयेति शंसति। कुरु पौषधशालां नः, आवासं च महाद्भुतम् ॥ ५० ॥ ततः पौषधशालायां, सोत्तीर्य जयकुञ्जरात्। प्रविश्य स्रस्तरे दार्भे, निषीदति कृताष्टमः ॥५१॥ ब्रह्मचारी विमुक्तान्यव्यापारस्त्यक्तभूषणः। मागधेशं स्मरन्नेकचित्तोऽस्मिन् पौषधत्रयैः

॥ ५२ ॥ यस्तु चक्री जिनस्तस्य, नाष्टमेन प्रयोजनम् । स्मृतिमात्राद्सौ कम्प्रासनस्तमुपतिष्ठते ॥ ५३ ॥ यदाहुः
श्रीहेमसूरयः श्रीशान्तिचरिते—"ततो मागधतीर्थाभिमुखं सिंहासनोत्तमे । जिगीषुरप्यनाबद्धविकारो न्यष-
दत्प्रभुः ॥ ५४ ॥ ततो द्वादशयोजन्या, तस्थुषो मागधेशितुः । सिंहासनं तदा सद्यः, खञ्जपादमिवाचलत्
॥ ५५ ॥" इत्यादि, अथ प्रकृतं—ततश्चतुर्विधाहारे, संपूर्णे पौषधव्रते । प्रातस्ततः परिहितचारुनेपथ्यभूषणः ॥५६॥
रथं सांग्रामिकं सज्जायुधमध्यास्य चक्रभृत् । दीप्रोऽग्रे चक्ररत्नेन, चमूचक्रैश्च पृष्ठतः ॥ ५७ ॥ शब्दाद्वैतं जग-
त्कुर्वन्, प्रवाह इव वारिधेः । तीर्थेन मागधेनान्तःपयोधि प्रविशत्यथ ॥ ५८ ॥ रथाङ्गनाभिद्वयसे, गत्वा जल- २०
निधेर्जले । रथं संस्थाप्य कोदण्डमादत्तेऽरिमदापहम् ॥ ५९ ॥ सटङ्कारवमारोप्य, प्रत्यञ्चां तत्र योजयेत् ।
निजनामाङ्कितं बाणं, रिपुघ्नं देवताश्रितम् ॥ ६० ॥ वैशाखमाश्रयेत्स्थानं, वेध्यवेधनकोविदः । स्थानानामिह
पञ्चानामिदमेव यदर्हति ॥ ६१ ॥ पञ्चस्थानानि चैवं—स्थानान्यालीढ १ वैशाख २ प्रत्यालीढानि ३ मण्डलं
४ समपादं ५ चेति, वैशाखस्थानलक्षणं चैवमाहुः—"पादौ कार्यौ सविस्तारौ, समहस्तप्रमाणतः । वैशाखस्था-
नके वत्स !, कूटलक्ष्यस्य वेधने ॥ ६२ ॥"अन्तःस्थांश्च बहिःस्थांश्च, बाणाधिष्ठायकान् सुरान् । प्रणमाम्यद्य ते ६५
सन्तु, सहाया मे द्विषज्जये ॥ ६३ ॥ बाणाधिष्ठातृदेवानां, वश्यानामपि या नतिः । उचिता साऽधुना शस्त्रभृतां ॥४६५॥
शस्त्रार्चनादिवत् ॥ ६४ ॥ इत्युक्त्वाऽऽकर्णमाकृष्य, मुक्तस्तेन शरो द्रुतम् । शक्रमुक्तः पविरिव, याति द्वाद-
शयोजनीम् ॥ ६५ ॥ तत्र मागधदेवस्य, गत्वा पतति पर्षदि । भुञ्जानस्य सुखं स्वैरं, दिव्यनाट्यानि पश्यतः २८

॥ ६६ ॥ सौत्पातिकं तमालोक्य, धूमकेतुमिवोदितम् । भ्रुकुटीभीषणो वक्ति, क्रोधाहंकारदुर्धरः ॥ ६७ ॥ मुमू-
र्षुरेष को मूर्खो, यमातिथ्यमपेक्षते । भुजङ्गास्ये करमिव, यश्चिक्षेप शरं मयि ? ॥ ६८ ॥ आसनाद्रभसोत्थाय,
रोषावेशवशंवदः । यावद्बाणं तमादाय, पश्यति क्रूरया दृशा ॥ ६९ ॥ तावच्चक्रभृतो नामवर्णालीं तस्य पश्यतः ।
शाम्यति क्रुध् विषमहेः, शृण्वतो जाङ्गुलीमिव ॥ ७० ॥ विमृशत्येवमुत्पन्नः, क्षेत्रेऽस्मिंश्चक्रवर्त्त्यसौ । तज्जीतमेत-
दस्माभिर्मान्यमस्यानुशासनम् ॥ ७१ ॥ अविमृश्योनपुण्येन, कोपोऽकारि वृथा मया । इदं नियतमेवामी, ५
स्वामिनः सेवका वयम् ॥ ७२ ॥ विलम्ब्य तदलं स्वामी, पूज्योऽयमतिथिर्मम । निश्चित्येत्युपदां हारकोटीरकट-
कादिकाम् ॥७३॥ चिरसंचितरत्नादि, सद्वस्तून्यपराण्यपि । उपादाय शरं तं च, तीर्थस्यास्य च मृज्जले ॥७४॥
उत्पतन् दिव्यया गत्या, द्रागुपागत्य चक्रिणम् । तत्सर्वं प्राभृतीकृत्य, नत्वा विज्ञपयत्यदः ॥ ७५ ॥ स्वामिन् !
मागधतीर्थान्तमिदं क्षेत्रं त्वया जितम् । अहं त्वत्किङ्करोऽस्मीह, प्रदेशस्यास्य रक्षकः ॥ ७६ ॥ अथ चक्री तदा-
दाय, प्राभृतं प्रीतमानसः । सत्कृत्य बहुमानेन, मागधेशं विसर्जयेत् ॥ ७७ ॥ सर्वेषामपि तीर्थानां, ये चाधि- १०
ष्ठायकाः सुराः । जात्या नागकुमारास्ते, चक्रिवश्या महर्द्धिकाः ॥ ७८ ॥ तथोक्तं जम्बू प्र० सूत्रवृत्तौ—"कुमा-
रपदवाच्यत्वं चास्य नागकुमारजातीयत्वादि"ति, ततो रथं परावर्त्त्य, स्वमावासमुपेत्यसौ । वाद्यमानजयातो-
द्यस्त्रिजगत्प्रसरद्यशाः ॥ ७९ ॥ ततः स्नात्वा जिनार्चाश्चार्चयित्वा कृतपारणः । प्रकृतीः प्राग्वदाहूयादिशत्यष्टा-
ह्निकोत्सवम् ॥ ८० ॥ ततो मागधदेवस्य, संपूर्णेऽष्टाह्निकोत्सवे । जाग्रज्ज्योतिर्जगज्जैत्रं, चक्ररत्नं प्रतिष्ठते ॥ ८१ ॥ १४

वरदामाभिधं तीर्थं, शुद्धदक्षिणदिक्स्थितम् । याति साधयितुं चक्रं, पथा नैर्ऋतगामिना ॥ ८२ ॥ तथोक्तं—"आउहघरसालाओ पडिनिक्खमित्ता दाहिणपचत्थिमं दिसिं वरदामतित्थाभिमुहे पयाए यावि होत्थ" त्ति, ततश्चमूपरिवृतश्चक्रवर्त्यपि पूर्ववत् । अनुगच्छति तचक्रमिवाङ्गी कर्मणां फलम् ॥ ८३ ॥ वर्द्धमानचमूर्भूपैर्विजित्य स्वीकृतैः पथि । दुर्वारप्रसरः प्रौढप्रवाह इव सैन्धवः ॥ ८४ ॥ प्रयाणकानि कतिचिद्गत्वा नैर्ऋत्यसंमुखम् । ततोऽपाचीमनुसरन्, वरदामं प्रयाति सः ॥ ८५ ॥ वरदामान्तिके प्राग्वत्, स्कन्धावारं निवेश्य सः । साधयेद्वरदामेशं, देवं मागधदेववत् ॥ ८६ ॥ वरदामाधिपस्याथ, संपूर्णेऽष्टाहिकोत्सवे । जेतुं प्रभासतीर्थेशं, चक्रं चरति पूर्ववत् ॥ ८७ ॥ स्थितं शुद्धप्रतीच्यां तद्वायव्यविदिगध्वना । चक्रं प्रवर्त्तते गन्तुं, प्रत्यक्च च वलते पुरः ॥ ८८ ॥ वशीकृत्य प्रभासेशं, पूर्वोक्तविधिना ततः । तत्सिन्धुदेवीभवनाभिमुखं परिसर्पति ॥ ८९ ॥ सिन्धोर्दक्षिणकूलेन, पूर्वदिग्गामिनाऽध्वना । गत्वाऽभ्यर्णे सिन्धुदेवीभवनस्याशु तिष्ठति ॥ ९० ॥ ननु च—सिन्धुदेव्यास्तु भवनं, भरतस्योत्तरार्द्धके । सिन्धुकुण्डेऽस्ति तद्द्वीपे, कथं तस्यात्र संभवः ? ॥ ९१ ॥ अत्रोच्यते—महर्द्धिकानां वेश्मानि, स्थाने स्थाने भवन्ति हि । इन्द्राणीनां राजधान्यो, यथा नन्दीश्वरादिषु ॥ ९२ ॥ ततः सिन्धुद्वीपवर्तिभवनादपरं खलु । इदं भवनमभ्यूह्यं, सिन्धुदेव्या महाश्रियः ॥ ९३ ॥ निवेश्य चक्रभृत्तत्र, स्कन्धावारं यथाविधि । कृताष्टमतपाः सिन्धुदेवीं मनसि चिन्तयेत् ॥ ९४ ॥ साऽथ कम्प्रासना दत्तोपयोगा चक्रवर्तिनम् । ज्ञात्वोत्पन्नमुपादायोपदां तमुपतिष्ठते ॥ ९५ ॥ एवं च सिन्धुदेवीवद्वैताढ्यादिसुरा अपि । शर-

॥ ४६६ ॥

मोक्षं विनैव स्युरनुकूलाश्चलासनाः ॥ ९६ ॥ कुम्भानां रत्नचित्राणामष्टोत्तरसहस्रकम् । नानामणिस्वर्णरत्नचित्रं भद्रासनद्वयम् ॥ ९७ ॥ कटकत्रुटितादीनि, भूषणान्यपराण्यपि । चक्रीत्यादिकमादत्ते, सिन्धुदेव्योपदीकृतम् ॥ ९८॥ अहं त्वद्देशवास्तव्या, तवास्म्याज्ञप्तिकिङ्करी । इत्युक्त्वा प्रणिपत्यास्यां, गतायां सोऽत्ति पूर्ववत् ॥ ९९॥ अष्टाहिकोत्सवान्तेऽस्या, ऐशानीगामिनाऽध्वना । वैताढ्यकटकाभ्यर्णमेति चक्रानुगोऽथ सः ॥ १०० ॥ सिन्धुदेवीभवनतो, जेतुं वैताढ्यनिर्जरम् । वैताढ्यकूटगमने, ऋजुर्मार्गोऽयमेव हि ॥ १ ॥ कटके दाक्षिणात्येऽस्य, कटके स्थापितेऽमुना । अष्टमे च कृते सिंहासनं चलति तद्विभोः॥२॥दत्तोपयोगो वैताढ्यकुमाराख्यः सुरोऽथ सः। गृहीत्वा प्राभृतं तादृगभिगच्छति चक्रिणम् ॥ ३ ॥ आज्ञां स्वीकृत्य नत्वाऽथ, सुरेऽस्मिन् गतवत्यथ । अष्टाहिकोत्सवान्तेऽस्य, चक्री चक्रानुगस्ततः ॥ ४ ॥ गुहां तमिस्रामभ्येति, प्रतीचीगामिनाऽध्वना । वैताढ्यकूटोपान्ताद्धि, प्रतीच्यामेव सा गुहा ॥ ५ ॥ गुहायाश्च तमिस्रायाः, स्थापयित्वाऽन्तिके चमूम् । नाकिनं चिन्तयत्येष, कृतमालं कृताष्टमः ॥ ६ ॥ जिगीषुं सोऽपि विज्ञाय, चक्रिणं चलदासनः । ढौकयत्येत्य विनमन्नलङ्कारांश्चतुर्दश ॥ ७ ॥ ते चैवं—"हार १ द्धहार २ इग ३ कणय ४ रयण ५ मुत्तावली ६ उ केऊरे ७ । कडए ८ तुडिए ९ मुद्दा १० कुंडल ११ उरसुत्त १२ चूलमणि १३ तिलयं १४ ॥८॥" (गीतिः) अलङ्कारानुपादाय, स्त्रीरत्नस्योचितानिमान् । विसर्जयति सत्कृत्य, कृतमालं नरेश्वरः ॥ ९ ॥ अथोत्सवे समाप्तेऽस्य, सार्वभौमः समादिशेत् । सेनानीरत्नमाहूय, सिन्धुनिष्कुटसाधनम् ॥ १० ॥ सिन्धुः स्यात्तस्य खण्डस्य, पूर्वदक्षिणयोर्दिशोः । उत्तरस्यां च वैताढ्यः, प्रतीच्यां

लवणोदधिः ॥ ११ ॥ यद्यप्येभिस्त्रिभिः क्लृप्तं, मध्यखण्डात्तथाप्यदः । सिन्ध्वा पृथक्कृतं तस्मात्सिन्धुनिष्कुट-मुच्यते ॥ १२ ॥ स चर्मरत्नमादाय, चतुरङ्गचमूवृतः । प्रस्थानं कुरुते तत्र, द्वितीय इव चक्रभृत् ॥ १३ ॥ गर्जदुर्जितनिःस्वानध्वानध्वस्तेतरध्वनिः । अनूदितजयारावः, क्षुण्णैर्द्विविधभूधरैः ॥ १४ ॥ जयकुञ्जरमारूढः, सच्छत्रश्चलचामरः । कवचच्छन्नसर्वाङ्गो, मेघैर्वृत इवोडुपः ॥ १५ ॥ चर्मरत्नेन सद्यानपात्रीभूतेन तेन सः । सिन्धुमुत्तीर्य शैलोच्चवीचीवलयदुस्तराम् ॥ १६ ॥ तत्रत्यानां प्रतीपानां, चिकित्सक इवाद्भुतः । विरेकरुधिरश्रावबहिष्कर्मादिकोविदः ॥ १७ ॥ दशाङ्गुल्यौषधीवर्गरसपानोपदेशकः । हरत्यस्त्रैः प्रतापोष्णैरौद्धत्यं सान्निपातिकम् ॥१८॥ पञ्चभिः कुलकं ॥ एवं च—सिंहले यवनद्वीपे, नानाम्लेच्छाश्रयेष्विति । रोमारबालसण्डादिदेशेषु विविधेषु सः ॥ १९ ॥ म्लेच्छाननेकजातीयान्, विजित्य रणकर्मठः । आज्ञामखण्डां सर्वत्र, प्रवर्त्तयति चक्रिणः ॥२०॥ युग्मम् ॥ चक्रवर्त्युचितान्येषां, प्राभृतानि सहस्रशः । जितकासी समादाय, सिन्धुमुत्तीर्य पूर्ववत् ॥ २१ ॥ भूरिभिः किङ्करीभूतैः, सेवितो म्लेच्छपार्थिवैः । वाचालजयवादित्रैः, स्तूयमानोऽसकृज्जनैः ॥ २२ ॥ उपेत्य चक्रिणं नत्वा, ढौकयित्वोपदाश्च ताः । विज्ञो विज्ञपयत्येवं, विनयेन कृताञ्जलिः ॥ २३ ॥ त्रिभिर्विशेषकं ॥ स्वामिन् ! भवत्प्रसादेन, सिन्धुखण्डो जितो मया । भूपाः सर्वेऽपि तत्रत्या, मया त्वत्किङ्करीकृताः ॥ २४ ॥ एते नमन्ति ते केचिदिदं तेषां च ढौकनम् । प्रह्वीभूतेषु चैतेषु, कार्यः स्वामिन्ननुग्रहः ॥ २५ ॥ तदाकर्ण्य प्रमुदितश्चक्रवर्त्ती चमूपतिम् । सत्कृत्य वस्त्रालङ्कारैरनुजानाति वेश्मने ॥ २६ ॥ ततः स्वावासमागत्य, स भुङ्क्ते कृतमज्जनः । ततश्च



रमते स्वैरं, गीतसंगीतकादिभिः ॥ २७ ॥ अथान्यदा कदाचित्तं, चक्रीत्याकार्य शंसति । वत्स ! गच्छ तमिस्राया, उद्घाटय कपाटकौ ॥ २८ ॥ प्रमाणमाज्ञेत्यानम्य, स्वमन्दिरमुपेत्य च । कुर्यात्पौषधशालायां, साष्टमं पौषधत्रयम् ॥ २९ ॥ आराध्य विधिनैवं च, कृतमालं गुहाधिपम् । दिने तुर्ये परिहितशुद्धनेपथ्यभूषणः ॥३०॥ आत्तपूजोपकरणोऽन्वीयमानो नृपादिभिः । दासीदासैश्च विविधपूजोपस्करपाणिभिः ॥ ३१ ॥ एत्य दर्यास्तमिस्रायाः, कपाटौ याम्यदिग्गतौ । प्रमृज्य लोमहस्तेनाभ्युक्षति प्रवरोदकैः ॥ ३२ ॥ चन्दनैश्चारुकर्पूरकस्तूर्यादिविमिश्रितैः । पूजयत्यम्बरैर्नानाविधैश्च सुमदामभिः ॥ ३३ ॥ धूपाधानमुपादाय, धूपमुत्क्षिपति स्वयम् । पञ्चवर्णप्रसूनानां, निकरं रचयेत्पुरः ॥ ३४ ॥ मङ्गलान्यालिखत्यष्टौ, पुरो रजततण्डुलैः । पश्चाद्गस्पृष्टभूपीठस्तौ कपाटौ नमत्यसौ ॥ ३५ ॥ प्रयुज्योपायमित्याद्यं, प्रयुयुक्षुरिवान्तिमम् । उदस्यति करेणोच्चैर्दण्डरत्नं चमूपतिः ॥ ३६ ॥ केवलं मार्दवोपेतो, मृद्यतेऽङ्गी मृदादिवत् । काठिन्यवांश्च दूरेण, त्यज्यते दृषदादिवत् ॥ ३७ ॥ मृदुत्वकठिनत्वाभ्यां, संगताभ्यां तु संगतः । गौरवं लभते लोके, जनो हीराङ्कुरादिवत् ॥ ३८ ॥ सामादिषु ततः श्रेष्ठावुपायावादिमान्तिमौ । न मध्यमौ तु कातर्यादित्यादि विमृशन्निव ॥ ३९ ॥ दृढघाताय सप्ताष्टावपसृत्य पदानि सः । त्रिस्ताडयति दण्डेन, बाढशब्दमथाररीम् ॥ ४० ॥ कृताक्रन्दाविव क्रौञ्चारवदम्भेन तावथ । विघट्य पृथुवेगेन, तस्थतुः स्वस्वतोऽद्भुके ॥ ४१ ॥ द्वयोः संहतयोः सिद्धिर्न स्यात्कार्यविरोधिनोः । इतीव भेदनीतिज्ञः, स कपाटौ व्ययोजयत् ॥ ४२ ॥ यश्चात्र द्वादश योजनानि तुरगारूढः सेनापतिः शीघ्रमपसरतीत्यादिप्रवादः

सोऽनागमिक इव लक्ष्यते, इत्यावश्यकटिप्पनके । सोत्साहः कृतकार्योऽथ, चक्रभृच्चरणान्तिके । एत्य विज्ञपय-
त्येवं, सेनानी रचिताञ्जलिः ॥ ४३ ॥ वच्मि स्वामिन्नभीष्टं ते, तमिस्रोद्घाटिता गुहा । उदीच्यभरतार्द्धस्य,
मार्गोऽयं सुखदोऽस्तु वः ॥ ४४ ॥ श्रुत्वेति मुदितश्चक्री, सत्कृत्य पृतनापतिम् । प्रस्थानं कुरुते सद्यः, सन्नद्धाशे-
षसैनिकः ॥ ४५ ॥ कुञ्जरं पर्वतप्रौढमारूढो मघवानिव । वज्रोपमां दधद्धेमसृणिं दिक्प्रसरघृणिम् ॥ ४६ ॥ याम्ये-
भकुम्भन्यस्तेन, मणिरत्नेन शोभितः । गुहां विशति चक्रीशः, शशी घनघटामिव ॥ ४७ ॥ मणिरत्नं च तद्भाति,
कुम्भिकुम्भस्थले स्थितम् । रवेर्बिम्बमिव ध्वान्तध्वंसि पूर्वाद्रिमूर्द्धनि ॥ ४८ ॥ तेन प्रकाशिताध्वाऽसौ, द्वादश- २०
योजनावधि । कुर्याद्भित्त्योर्मण्डलानि, काकिण्या रत्नमुख्यया ॥४९॥ अवस्थितप्रकाशानि, स्थिरमार्त्तण्डपङ्क्तिवत् ।
पान्थानां संचरिष्णूनामुपकुर्वन्ति तानि च ॥ ५० ॥ मण्डलानां स्थितिसंख्यादिस्वरूपं च क्षेत्रलोके वैताढ्या-
धिकारे प्रोक्तमस्तीति ततो ज्ञेयम् ॥ एकोनपञ्चाशन्मानैर्मण्डलैस्तैर्मतान्तरे । अष्टानवत्या स्यान्नित्यमद्याहं तद्गुहो-
दरम् ॥ ५१ ॥ अथ वार्द्धकिरत्नेन, सद्यः सज्जितपद्यया । नद्यावुत्तीर्य निमग्नजलोन्मग्नजलाभिधे ॥ ५२ ॥ यावद्यात्य-
औत्तराहं, द्वारं गच्छति चक्रभृत् । तावत्कपाटौ तत्रत्यौ, स्वयमेवापसर्पतः ॥ ५३ ॥ हयहेषारवाकीर्णं, गज- २५
गर्जारवोर्जितम् । स्फुरद्रथघटत्कारैरुद्धतैर्धुतभूतलम् ॥ ५४ ॥ छन्नाशेषनभोमार्गं, पताकाकेतुकोटिभिः । रणवा- २६

१ अनगामिकमेतदिति तात्पर्यं, तेन गुहोद्घटनेन तत्रत्यवातजनितोपद्रवरक्षणायापसरणेऽपि न क्षतिः, निषेधस्तु तदुद्घटनशब्दभीत्या नापरणमिति ज्ञापनाय ।

दित्रनिर्घोषाटोपकम्पितकातरम् ॥ ५५ ॥ करालकवचास्त्रालिभीषणं भटकोटिभिः । दर्शनीयं च भूपालैः, सुरैरिव
महर्द्धिकैः ॥ ५६ ॥ अगण्यं चक्रिणः सैन्यं, निर्गच्छत्कन्दरोदरात् । जानन्ति म्लेच्छभूपाला, नष्टैः पर्यन्तवा-
सिभिः ॥ ५७ ॥ चतुर्भिः कलापकं ॥ ततः सन्नह्य ते सर्वे, संभूय रणकर्मठाः । युध्यन्ते चक्रिसैन्येन, दत्तदै-
न्येन विद्विषाम् ॥ ५८ ॥ खड्गाग्रच्छिन्नमत्तेभगलद्रुधिरपिच्छिलम् । शिरोभिः स्यान्मिथश्छिन्नैः, स्थपुटं तत्र भूत-
लम् ॥ ५९ ॥ तत्र शत्रुशराश्लेषपरावृत्ताः शरा निजम् । यान्त्याश्रयं सजातीयातिथ्यं कर्त्तुमिवोद्यताः
॥ ६० ॥ भटाः केचिच्छरशतैर्भान्त्यापिच्छं वपुर्गतैः । उत्पन्नपक्षाः स्वर्गन्तुमिव संख्यमुखे हताः ॥ ६१ ॥ ५
केचिन्निष्पिष्टरदनच्छदा हस्ताग्रवर्त्तिभिः । भटाः खड्गैर्विराजन्ते, मूर्त्ता वीररसा इव ॥ ६२ ॥ केचिद्
घातशतोद्भिन्नैरन्त्रकैः कण्ठवर्तिभिः । विभान्ति वरणस्रग्भिरिव युद्धे जयश्रियाः ॥ ६३ ॥ कुट्टयन्ति
द्विषां केचिन्मौलीन् कुद्दालपाणयः । निरङ्कुशाः काननस्थसहकारानिवाध्वगाः ॥ ६४ ॥ केचिच्च कन्दुकक्रीडो-
त्कटा इव महाभटाः । निर्लोठयन्ति भूपीठे, खड्गाग्रैर्वैरिमस्तकान् ॥ ६५ ॥ अन्ये च रिपुकुम्भीन्द्रानारोहन्ति
हतद्विषः । सोपानीकृततद्दन्तमुशलाः कुशलाशयाः ॥ ६६ ॥ घनामपि द्विषत्सेनां, भिन्दन्ते केचिदायुधैः । शृङ्गैः १०
शण्ढा मदोन्मत्ता, निम्नगायास्तटीमिव ॥६७॥ महिषा इव गाहन्ते, केचित्संग्रामपल्वलम् । आहत्य द्विण्मुखाब्जानि,
पृथ्वीं पङ्किलयन्ति च ॥ ६८ ॥ जातायां तत्र रुधिरापगायां भटमौलयः । पद्मायन्ते तटायन्ते, मत्तमत्तेभपङ्क्तयः
॥ ६९ ॥ चलन्मत्स्यकुलायन्ते, तरन्तः पतिताः शराः । खगायन्ते नभःस्थाश्च, भटमुक्ताः शरोत्कराः ॥ ७० ॥ १४

दन्तादन्तिप्रवृत्तेभयुद्धोद्यद्धुतभुक्कणाः । द्योतन्त इव खद्योतास्तत्र रेणुतमोघने ॥ ७१ ॥ घोरान्धकारे तत्राश्वखुरक्षुण्णरजोभरैः । विध्यन्ति रिपुमर्माणि, वीराः शब्दानुगैः शरैः ॥ ७२ ॥ कबन्धास्तत्र धावन्तः, पथि घ्नन्ति तरूनपि । प्रतिपक्षधिया खड्गैः, स्फुर्जद्वीररसोद्भटाः ॥ ७३ ॥ तत्र तूर्यारवोत्फुल्लपुलकोत्साहसाहसाः । वीरास्तृणाय मन्यन्ते, जीवितेन समं जगत् ॥ ७४ ॥ यद्येवंविधसंग्रामे, परिभूयेत कर्हिचित् । अतुच्छविक्रमैर्म्लेच्छचक्रगैश्चक्रिणश्चमूः ॥ ७५ ॥ तदा सन्नह्य सेनानीर्योद्धुं प्रक्रमते दृढम् । तुरङ्गरत्नमारूढः, खड्गरत्नं करे दधत् ॥ ७६ ॥ युग्मम् । एतस्मिन् युध्यमाने च, भज्यन्ते नाकिनो यदि । तदा के नाम ते म्लेच्छा, गजद्विषि वृका इव ? ॥ ७७ ॥ अथासौ भटकोटीरस्तीव्रशस्त्रज्वराङ्कुशैः । कुक्षिक्षिप्तैः शमयति, प्रतिपक्षमदज्वरम् ॥ ७८ ॥ तदा च केचिन्नश्यन्ति, केचित्क्रन्दन्ति चार्दिताः । लुठन्ति केचिद्भूपीठे, तिष्ठन्त्यन्ये मृता इव ॥ ७९ ॥ केचित्त्यजन्ति शस्त्राणि, वस्त्राणीवास्तचेतनाः । क्षिपन्ति वदने केचिद्दीनवाचो दशाङ्गुलीः ॥ ८० ॥ तृणान्याधाय दन्तेषु, याचन्ते जीवितं परे । लज्जाविलक्षाः शोचन्ति, चेति केचिदधोमुखाः ॥ ८१ ॥ हा गतं राज्यमस्माकं, हा गता स्वैरचारिता । ते धन्याः प्राग्विपन्ना ये, धिगस्मान् दुःखदर्शिनः ॥ ८२ ॥ अश्लाघामहि ये शौर्यमात्मीयं योषितां पुरः । ते कथं कातरास्तासां, मुखं दर्शयितास्महे ? ॥ ८३ ॥ वृथाऽभूद्दोर्मदोऽस्माकं, वृथाऽभूच्छस्त्रकौशलम् । भग्नैः कथमथ स्थेयमस्माभिर्भटपर्षदि ॥ ८४ ॥ विषण्ण इति ते स्वेष्टदेवाननुस्मरन्ति चेत् । तदा ते बोधयन्त्येवं, खिद्यध्वे किं जडा मुधा ? ॥ ८५ ॥ एष षट्खंडभूपालैः, सेव्यते युद्धनिर्जितैः । युष्माकमत्र का लज्जा ?,

न दुःखं पश्वभिः सह ॥ ८६ ॥ पराजयोऽपि शोभायै, महता विद्विषा युधि । भवेज्जयोऽपि लज्जायै, हीनानां युधि भूभृताम् ॥ ८७ ॥ या विधिप्रापितोन्नत्यै, स्पर्द्धा स्वस्यैव सा हिता । निर्दन्ताः स्युर्गजा एव, खनन्तः स्पर्धया गिरीन् ॥ ८८ ॥ अथैषामुपरोधेन, तद्भक्त्या नाकिनोऽपि चेत् । कुर्वन्त्युपद्रवं चक्रिसैन्येऽकालाम्बुदादिकम् ॥ ८९ ॥ तदा विज्ञाय तान् शीघ्रं, चक्रभृत्सेवकाः सुराः । मृगानिव त्रासयन्ति, तत्कृतोपद्रवैः सह ॥९०॥ अनन्यगतयस्तेऽथ, मध्ये कृत्वाऽऽप्तपूरुषान् । नताश्वसूपर्ति तेन, नीयन्ते चक्रिणोऽन्तिके ॥ ९१ ॥ ढौकयित्वा प्राभृतानि, नत्वा विज्ञपयन्त्यदः । प्रभो ! दृष्टोऽनुभावस्ते, वयं स्मः सेवकास्तव ॥ ९२ ॥ अज्ञानात्प्रातिकूल्यं च, यदस्माभिः कृतं त्वया । कृपामाधाय सह्यं तत्, शरणागतवत्सल ! ॥९३॥ चक्रवर्त्यपि सत्कृत्य, स्निग्धगीः सान्त्वयत्यमून् । सुखं वसन्तु निर्भीका, मदाज्ञावशवर्त्तिनः ॥ ९४ ॥ सेनापतिमथाहूय, चक्रभृद्विनयानतम् । आदिशत्युत्तरार्द्धस्थसिन्धुनिष्कुटसाधनम् ॥ ९५ ॥ अस्य प्राच्यां नदी सिन्धुरुदीच्यां हिमवान् गिरिः । दक्षिणस्यां च वैताढ्यः, प्रतीच्यां लवणाम्बुधिः ॥९६॥ अथ निर्जित्य तान् म्लेच्छानादाय प्राभृतानि च । सार्वभौमं नमत्याशु, पूर्ववत्पृतनापतिः ॥ ९७ ॥ अथान्यदा चक्ररत्नं, ततश्चरति सोत्सवम् । कनिष्ठहिमवच्छैलाभिमुखं चक्रिणाऽन्वितम् ॥९८॥ प्रथमं च प्रयातीदमैशानीगामिनाऽध्वना । यियासोर्हिमवन्मध्यमृजुरध्वाऽयमेव यत ॥ ९९ ॥ अन्तर्गतान् वशीकुर्वन्, देशग्रामपुराधिपान् । प्रयाणैर्योजनान्तैः स, प्राप्नोत्युपहिमाचलम् ॥ २०० ॥ निवेश्य कटकं तत्र, पूर्ववद्विहिताष्टमः । प्रातस्तुर्येऽह्नि सन्नह्यारूढः सांग्रामिकं रथम् ॥ १ ॥ अनुयातो नृपैः

सर्वैर्वज्रभृत्त्रिदशैरिव । प्रेरयंस्तुरगान् रथ्यान्, रंहसा वायुजित्वरान् ॥ २ ॥ हिमवद्भूभृतो भित्तिं, रथाग्रेणातिरंहसा । त्रिस्ताडयित्वा तुरगान्निगृह्णाति स कोविदः ॥ ३ ॥ प्राग्वन्नामाङ्कितं बाणं, धनुष्यारोप्य निर्भरम् । मुञ्चत्याकर्णमाकृष्योन्नतदृष्टिर्विहायसि ॥ ४ ॥ उत्पत्य योजनानि द्वासप्ततिं स शरः स्फुरन् । हिमवद्गिरिदेवस्य, पुरः पतति दूतवत् ॥ ५ ॥ तं दृष्ट्वा सोऽपि रुष्टः प्राक्, पश्यन्नामाथ चक्रिणः । प्रीत्या प्राभृतमादाय, राजेन्द्रमुपतिष्ठते ॥ ६ ॥ वक्त्येवं सकलं क्षेत्रं, त्वयेदं तरसा जितम् । त्वत्सेवकोऽस्म्यहं देवोदीच्यपर्यन्तरक्षकः ॥ ७ ॥ सर्वौषधीस्तथा कल्पद्रुमपुष्पस्रजोऽद्भुताः । हिमवद्गिरिकुञ्जोत्थं, चन्दनं तद्ह्रदाम्बु च ॥ ८ ॥ उपादायोपदां तस्येत्यादिकां भूपभूपतिः । तं सत्कृत्य विसृज्याथ, व्यावर्त्तयति वाजिनः ॥ ९ ॥ अशेषदिक्तटव्यासजयतूर्यव्रजध्वनिः । उपैत्यृषभकूटाद्रिं, चक्री शक्र इवर्द्धिमान् ॥ १० ॥ त्रिः स्पृष्ट्वा तं रथाग्रेण, पौरस्त्ये कटकेऽस्य च । रत्नेन काकिणीनाम्ना, निजं नाम लिखत्ययम् ॥ ११ ॥ तच्चैवं—"ओसप्पिणी इमीसे तइयाएँ समाएँ पच्छिमे भाए । अहमंसि चक्कवट्टी भरहो इअ नामधिज्जेणं ॥ १२ ॥ अहमंसि पढमराया अहं च भरहाहिवो णरवरिंदो । णत्थि महं पडिसत्तू जिअं मए भारहं वासं ॥ १३ ॥" रीत्याऽनया यथाक्षेत्रं, यथाकालं यथाऽऽह्वयम् । नामलेखनमाभाव्यं, सर्वेषामपि चक्रिणाम् ॥ १४ ॥ ततो निवृत्य कटकमुपेत्य कृतपारणः । हिमवद्गिरिदेवस्य, विधत्तेऽष्टाहिकोत्सवम् ॥१५॥ महोत्सवे समाप्तेऽस्मिन्, व्याघुट्येतः प्रवर्त्तते । वैताढ्याभिमुखं चक्रं, याम्यदिग्गामिनाऽध्वना ॥१६॥ वैताढ्यस्योदग्नितम्बे, निवेशितचमूस्ततः । जेतुं विद्याधराधीशान्, पूर्ववत्कुरुतेऽष्टमम् ॥१७॥

एतेऽनुकम्प्यमनुजमात्रत्वात्तत्र नोचितम् । शरमोक्षणमित्येष, नैनमाद्रियते विधिम् ॥ १८ ॥ इति श्रीजम्बूद्वीपप्रज्ञप्तिसूत्रे, यत्तु श्रीहैमऋषभचरित्रे भरतस्यात्र शरमोक्षणमुक्तं तन्मतान्तरमवसेयं[१]। अथ विद्याधरास्तेऽपि, जानन्ति चक्रवर्त्यसौ । स्मरत्यस्मान् वयं चास्य, सेवकाः शाश्वतस्थितेः ॥ १९ ॥ यदमी अवधिज्ञानाद्यभावेऽपि विदन्ति वै । चक्रिणश्चिन्तितं तच्चाचिन्त्यदिव्यानुभावतः ॥ २० ॥ सौधर्मेशानगा देव्यो, यथोर्ध्वस्वर्गवासिनाम् । कामुकानामभिप्रायं, जानन्ति दिव्यशक्तितः ॥ २१ ॥ तेऽथ प्राभृतमादाय, स्त्रीरत्नादिकमद्भुतम् । नमन्ति चक्रिणं स्वामिन्!, वयं स्मः सेवका इति ॥ २२ ॥ युयुत्सवः कदाचित्ते, चेद्भवन्ति धृतायुधाः । साधितानेकविद्यास्त्रा, भटंमन्या महाभुजाः ॥ २३ ॥ तदा रणरसं तेषामापूर्य विविधाहवैः । वशीकरोति तांश्चक्री, निषादी कुञ्जरानिव ॥ २४ ॥ अत एव जम्बूद्वीपप्रज्ञप्तिचूर्णौ भरतचक्र्यधिकारे 'अण्णे भणंती' त्युक्त्वा द्वादशवर्षावधि नमिविनमिभ्यां सह युद्धमुक्तमिति ज्ञेयं । स्वीकृत्य प्राभृतं तेषां, सोऽथ सत्कृत्य तानपि । विसृज्य मुदितस्तेषां, कुरुतेऽष्टाहिकोत्सवम् ॥२५॥ वैताढ्यात्तत ऐशान्यां, गङ्गादेवीगृहं प्रति । प्रतिष्ठते चक्ररत्नं, गङ्गाखण्ड-

१ अत्रेदमवधेयं यदुत त्रिषष्टीयादिचरित्रे चक्रिणोऽधिकारः सर्वचक्रिसाधारणः षट्खण्डजये, न तेन तथाऽन्यचक्रिणां साधनमदर्शीति, जम्बूद्वीपप्रज्ञप्तिभरतक्षेत्रान्वर्थतायां भरतचक्री वक्तुमुपक्रान्तः,स चावसर्पिण्यामादौ भवेत्,तदा च युग्मित्वासत्तेः स्याद् भद्रकता,विनाऽपीषुक्षेपं स्यादेव साधनं, परं न तथा सर्वेषामिति शरक्षेपवर्णनं, तथा च स्वयमनागमे शरमोक्षणं कर्त्तव्यमिति तत्त्वं, दिव्यानुभावो हि युग्मित्वकालप्रत्यासत्तौ न्याय्य एव, भद्रकत्वादेव च कदाचिद् युद्धमपि ।

जयोत्सुकम् ॥ २६ ॥ अत्र चम्बूद्वीपप्रज्ञप्तिवृत्तिः–यच्चक्री ऋषभकूटतः प्रत्यावृत्तो न गङ्गां साधयामास तद्वैताढ्यवर्तिविद्याधराणामनात्मसात्करणेन परिपूर्णोत्तरखण्डस्यासाधितत्वात्कथं गङ्गानिष्कुटसाधनायोपक्रमत इत्यवसेयं । निवेश्य कटकं गङ्गादेव्याश्च भवनान्तिके । सिंधुवत्साधयत्येष, तां नतां निहितोपदाम् ॥ २७ ॥ यच्चात्र भरतचक्रिणो गङ्गादेवीभोगेन वर्षसहस्रातिवाहनं श्रूयते तज्जम्बूद्वीपप्रज्ञप्तिसूत्रे चूर्णौ चानुक्तमपि श्रीऋषभचरित्रे प्रोक्तमस्तीति [1]ज्ञेयं। तस्या अप्युत्सवे पूर्णे, चक्ररत्नं ततः पुनः । गङ्गापश्चिमकूलेन, दक्षिणस्यां प्रतिष्ठते ॥ २८ ॥ क्रमात्खण्डप्रपाताया, गुहाया द्वारसन्निधौ । उपेत्य चक्रभृत्तत्र, स्कन्धावारं निवेशयेत् ॥ २९ ॥ कृताष्टमतपाश्चित्ते, नक्तमालं गुहाधिपम् । चिन्तयेत्सोऽप्युपैत्येनं, सोपदः कृतमालवत् ॥ ३० ॥ ततस्तस्योत्सवे पूर्णे, जिगीषुश्चक्रवर्त्यथ । समादिशति सेनान्ये, गङ्गानिष्कुटसाधनम् ॥ ३१ ॥ गङ्गा प्रत्यग् वहत्यस्य, प्राच्यां लवणतोयधिः । वैताढ्यहिमवन्तौ च, दक्षिणोत्तरयोर्दिशोः ॥ ३२ ॥ चतुर्भिः कृतसीमापि, गङ्गया मध्यखण्डतः । पृथक्कृतं विभज्येति, गङ्गानिष्कुटमुच्यते ॥ ३३ ॥ सोऽपि गङ्गामथोत्तीर्य, चर्मरत्नेन सिन्धुवत् । म्लेच्छान्निर्जित्य तत्राज्ञां, प्रवर्त्तयति चक्रिणः ॥ ३४ ॥ चरितार्थो गृहीत्वा तत्प्राभृतान्यर्यमद्युतिः । नत्वा चक्रिक्रमौ वक्ति, तज्जयं निहितोपदः ॥ ३५॥ विसृष्टश्चक्रिणाऽप्येष, भूरिसत्कारपूर्वकम्। स्वावासे विहितस्नानभोजनो रमते सुखम् ॥ ३६ ॥ चक्री वक्त्यन्यदाऽऽकार्य, द्वारं भो पृतनापते ! । दर्याः खण्डप्रपाताया,

१ सर्वचक्रिणां सर्वभरतानां च तथानियमाभावः, सूत्रेऽनुक्तमपि आवश्यकवृत्त्यादावुक्तमिति भरतचरित्रे तथोक्तमिति ।

औत्तराहं प्रकाशय ॥ ३७ ॥ तमिस्रायाम्यदिग्द्वारोद्घाटने यो विधिः कृतः । तेनैव विधिना द्वारमुद्घाटयति सोऽप्यदः ॥ ३८ ॥ तेनैव विधिना चक्री, विशत्यस्यां चमूवृतः। आत्मा कर्मावृतो मातुः, कुक्षाविव शि (भ)-वासये ॥ ३९ ॥ मण्डलान्यालिखन् भित्त्योर्नद्यावुत्तीर्य ते उभे । निर्याति याम्यद्वारेणोद्घाटितारिणा स्वयम् ॥ ४० ॥ ननु च–तमिस्रया प्रविशति, विनिर्गच्छति चक्रभृत् । खण्डप्रपातया तत्र, किं कारणमिहोच्यते ॥ ४१ ॥ एवं दिग्विजयः सृष्ट्या, कृतः स्याद्यच्च शोभनम् । कार्यं तत्क्रियते सृष्ट्या, सूदर्कं स्यात्तथा च तत् ॥ ४२ ॥ तत्पूर्वोक्तक्रमेणैवोपक्रमन्ते जयाय ते । प्रवर्त्तयेत्तानेवं हि, चक्रं तन्मार्गदेशकम् ॥ ४३ ॥ स्कन्धावारं निवेश्याथ, गङ्गायाः पश्चिमे तटे । अष्टमं कुरुते चक्री, निधानानि नव स्मरन् ॥ ४४ ॥ अथाष्टमपरीपाके, निधीनामधिदेवताः । प्रत्यक्षीभूय शंसन्ति, नत्वैवं चक्रवर्तिनम् ॥ ४५ ॥ भवता भूरिभाग्येन, वयं स्वामिन् ! वशीकृताः । भृत्यानस्मान्निधींश्चैतान्नवापि स्वीकुरु प्रभो ! ॥ ४६ ॥ यथेच्छमुपयुंक्ष्वामूंस्त्वदायत्तानथ प्रभो ! । स्वैरं नियोजयास्मांश्च, किङ्करान्निधिरक्षकान् ॥ ४७ ॥ वशीकृतनिधिश्चक्री, ततः पूर्णीकृताष्टमः । स्नातभुक्तो निधानानां, विधत्तेऽष्टाह्निकोत्सवम् ॥ ४८ ॥ कदाचिदथ सेनान्यमाहूयाज्ञपयत्यसौ । अपाच्यभरतार्द्धस्थगङ्गानिष्कुटसाधनम् ॥ ४९ ॥ प्राच्यपाच्योः समुद्राभ्यां, प्रतीच्यामथ गङ्गया । वैताढ्येनोत्तरस्यां तन्निष्कुटं विहितावधि ॥ ५० ॥ सोऽप्युत्तीर्य तथा गङ्गां, म्लेच्छान्निर्जित्य पूर्ववत् । उपात्तप्राभृतः सर्वं, निवेदयति चक्रिणः ॥ ५१ ॥ एवं साधितषट्खण्डे, कृतकार्येऽथ चक्रिणि । स्वराजधान्यभिमुखं, वलते चक्रमुत्सवैः ॥ ५२ ॥ तत-

श्चक्री गजारूढश्चामरच्छत्रशोभितः । निनदन्मङ्गलातोद्यः, साश्चर्यं वीक्षितो जनैः ॥ ५३ ॥ स्वराजधान्या अभ्यर्णे, स्कन्धावारं निवेशयेत् । कृताष्टमतपास्तत्र, कुरुते पौषधत्रयम् ॥ ५४ ॥ स्वराजधान्यधिष्ठातुर्देवस्यानेन साधनम् । कुरुते तच्च निर्विघ्नवासस्थैर्यार्थमात्मनः ॥ ५५ ॥ अथाष्टमपरीपाके, आरुह्य जयकुञ्जरम् । नदत्सु भूरिवाद्येषु, विविधर्द्धिसमन्वितः ॥ ५६ ॥ साश्चर्यं वीक्षितो लोकैः, पूर्वपुण्यप्रशंसिभिः । राजधानीं प्रविशति, यदा चक्री महोत्सवैः ॥ ५७ ॥ तदाऽऽभियोगिका देवा, बहिरन्तःप्रमार्जिताम् । सुगन्धिनीरैः सिक्तां तां, कुर्युर्नानाधनाञ्चिताम् ॥ ५८ ॥ त्रिभिर्विशेषकम् । केचिच्च मुदिता देवाः, पुरीं विशति चक्रिणि । वृष्टिमाभरणस्वर्णरत्नवज्रैर्वितन्वते ॥ ५९ ॥ तदा तं बहवः कामभोगद्रव्यार्थिनो जनाः । प्रशंसन्तः स्तुवन्तश्चोच्चारयन्त्याशिषां शतान् ॥ ६० ॥ बहुभिर्वासरैर्दृष्टामपूर्वामिव तां पुरीम् । निरीक्षमाणः सानन्दमतिक्रामन् गृहावलीः ॥ ६१ ॥ नरनारीसहस्राणां, नमस्काराञ्जलीन्मुदा । आददानः क्रमादेति, स्वप्रासादावतंसकम् ॥ ६२ ॥ युग्मम् । अथावरुह्य नागेन्द्रात्, सेवकान्नाकिनो नृपान् । सेनापत्यादिरत्नानि, सर्वं चान्यपरिच्छदम् ॥ ६३ ॥ सत्कृत्य विसृजत्याशु, गमनाय निजाश्रयान् । स्त्रीभिर्नाट्यैः परिवृतो, विशत्यन्तर्गृहं स्वयम् ॥ ६४ ॥ तत्र स्वजनवर्गं स्वं, मित्राणि ज्ञातिजानपि । संबन्धिनश्च भृत्यांश्चालापयेत् क्षेमपृच्छया ॥ ६५ ॥ कृतस्नानस्ततो भुङ्क्ते, जिनार्चार्चनपूर्वकम् । ततोऽद्भुतैर्गीतनाट्यादिभिर्भुङ्क्ते सुखानि सः ॥ ६६ ॥

अथ षोडश देवानां, सहस्राः पार्थिवास्तथा । सेनापत्यादिरत्नानि, परिवारस्तथाऽखिलः ॥ ६७ ॥ एत्य विज्ञपयन्त्येवं, प्रणताश्चक्रवर्तिनम् । जिग्ये क्षेत्रमिदं स्वामिन् !, चतुरन्तावधि त्वया ॥ ६८ ॥ तत्कुर्मश्चक्रवर्त्तित्वाभिषेकं समहोत्सवम् । यथा वो रुचिरित्येवं, चक्री तदनुमन्यते ॥ ६९ ॥ अथ राज्याभिषेकार्थमष्टमं कुरुते तपः । अभिषेकास्पदं सज्जीकारयत्याभियोगिकैः ॥ ७० ॥ राजधान्यास्ततस्तेऽस्या, ऐशान्यां विमलीकृते । भूतले रचयन्त्युच्चमभिषेकाय मण्डपम् ॥ ७१ ॥ रत्नबद्धक्षितेस्तस्य, रत्नस्तम्भशतस्पृशः । विकुर्वन्त्यभिषेकार्थं, मध्येपीठं मणीमयम् ॥ ७२ ॥ चतुर्दिशं त्रिसोपानप्रतिरूपकशालिनः । मध्येऽस्य रचयन्त्येकं, रत्नसिंहासनं महत् ॥ ७३ ॥ इत्यादि विरचय्यैते, नत्वा शंसन्ति चक्रिणम् । प्रभो ! सज्जीकृतोऽस्माभिरभिषेकाय मण्डपः ॥ ७४ ॥ ततश्चक्री गजारूढः, सोत्सवं सपरिच्छदः । उपेत्य मण्डपे तस्मिन्, कृत्वा पीठप्रदक्षिणाम् ॥ ७५ ॥ तत्र प्राच्यत्रिसोपानपथेनारुह्य सोत्सवम् । सिंहासनमलङ्कृत्य, तिष्ठति प्राङ्मुखः सुखम् ॥ ७६ ॥ अथोत्तरप्रोष्टपदाप्रमुखे विहितोडुनि । विजयादौ मुहूर्त्ते च, तेऽभिषिञ्चन्ति चक्रिणम् ॥ ७७ ॥ तथा चोक्तं—"अभिषिक्तो महीपालः, श्रुतिज्येष्ठालघुध्रुवैः । मृगानुराधापौष्णैश्च, चिरं शास्ति वसुन्धराम् ॥७८॥" विजयमुहूर्त्तश्चैवं—द्वौ यामौ घटिकाहीनौ, द्वौ यामौ घटिकाधिकौ । विजयो नाम योगोऽयं, सर्वकार्यप्रसाधकः ॥७९॥ प्राग्वर्णितोऽभिषेको यः, क्षेत्रलोके सविस्तरः । वैमानिकानामुत्पत्तौ, सर्वोऽप्यत्रानुवर्त्यताम् ॥८०॥ तथाभिषिक्तं तं गन्धकाषाय्या रूक्षिताङ्गकम् । सर्वाङ्गालङ्कृतं कुर्युर्भूषणैर्मुकुटादिभिः ॥ ८१ ॥ जय चक्रिन् ! जय स्वामिन् !, जयातुलपराक्रम ! । राजराज ! जय प्रौढपुण्य ! भद्रं सदाऽस्तु ते ॥ ८२ ॥ त्वया जितमिदं क्षेत्रं, चतुरन्तं महौजसा । तत्पालयासंख्यवर्षको-

टीर्निर्विघ्नमस्तु ते ॥ ८३ ॥ एवं देवाश्च भूपाश्च, पौराश्च सपरिच्छदाः । वदन्तो मङ्गलालापानभिषिच्य नमन्ति तम् ॥ ८४ ॥ ततः कृताभिषेकोऽसौ, भृत्यानाहूय शंसति । पुर्यामस्यां गजारूढा, विष्वगुद्घोषयन्त्विति ॥८५॥ सर्वे महोत्सवं पौराः, कुर्वन्तु द्वादशाब्दिकम् । अष्टाहिकोत्सवस्येव, ज्ञेया सर्वाऽत्र पद्धतिः ॥८६॥ ततो याम्यत्रिसोपानमार्गेणोत्तीर्य पीठतः । पट्टहस्तिनमारुह्य, चक्री सर्वसमृद्धिभिः ॥ ८७ ॥ प्रासादं निजमागत्य, स्नात्वा कृतजिनार्चनः । स्वर्णस्थाले सुखासीनः, कुरुतेऽष्टमपारणम् ॥ ८८ ॥ वारांस्त्रयोदशैवं च, कुर्याद्दिग्विजयेऽष्टमान् । वारांश्च चतुरश्चक्री, कुरुते शरमोक्षणम् ॥ ८९ ॥ तीर्थत्रये सिन्धुगङ्गादेव्योर्वैताढ्यनाकिनः । गुहेशयोः कृतमालनक्तमालकसंज्ञयोः ॥ ९० ॥ हिमवद्गिरिदेवस्य, विद्याधरमहीभृताम् । निधीनां राजधान्याश्चाभिषेकावसरेऽपि च ॥ ९१ ॥ त्रयोदशाष्टमा एवं, निर्दिष्टाश्चक्रवर्तिनाम् । तीर्थत्रये हिमवति, चतुर्षु शरमोक्षणम् ॥ ९२ ॥ त्रिभिर्विशेषकम् ॥ अतुच्छैरुत्सवैरेवं, प्रजाभिस्सह चक्रिणः । अब्देषु द्वादशस्वाशु, संपूर्णेषु निमेषवत् ॥ ९३ ॥ ततो यक्षान्नृपांश्चापि, रत्नान्यपि च नागरान् । चक्री यथार्हं सत्कृत्य, भुङ्क्ते राज्यमकण्टकम् ॥९४॥ युग्मं ॥ षट्खण्डराज्ये संजाते, निःशल्य इति चक्रिणः । प्रविशत्यस्त्रशालायां, चक्ररत्नं महामहैः ॥९५॥

चक्रं १ दण्ड २ स्तथा खड्ग ३ श्छत्रं ४ चर्म ५ तथा मणिः ६ । स्युः काकिणीति ७ रत्नानि, सप्तैकाक्षाणि चक्रिणाम् ॥ ९६ ॥ सेनापति १ र्गृहपति २ र्वार्द्धकिश्च ३ पुरोहितः ४ । गजो ५ ऽश्वः ६ स्त्री ७ ति रत्नानि, समे पञ्चेन्द्रियाण्यपि ॥ ९७ ॥ चक्ररत्नं भवेत्तत्र, मुख्यं विजयसाधनम् । वज्रतुम्बं लोहिताक्षारकं जाम्बूनद-

प्रधि ॥ ९८ ॥ मणिमौक्तिकजालेनालङ्कृतं किङ्किणीयुतम् । नानारत्नमणिस्वर्णघण्टिकाजालवेष्टितम् ॥ ९९ ॥ सर्वर्त्तुजप्रसूनस्रक्पूजितं रविबिम्बवत् । दीप्रं द्वादशभम्भादितूर्यध्वनिनिषेवितम् ॥ ३०० ॥ अनेकदिव्यवादित्रनिर्घोषैः पूरिताम्बरम् । सदा नभःस्थितं यक्षसहस्रपरिवारितम् ॥ १ ॥ चतुर्भिः कलापकं ॥ अमोघशक्तिकं तच्च, खेचरक्ष्माचरादिषु । विना सगोत्रं सर्वेषु, वैरिषु प्रोत्कटेष्वपि ॥ २ ॥ पाताले वा पयोधौ वा, वज्रकोष्ठे स्थितस्य वा । रिपोः शीर्षं छिनत्त्येतच्चक्रिमुक्तं चिरादपि ॥ ३ ॥ अकृत्वा तच्छिरश्छेदं, न कदापि निवर्त्तते । मासैर्बहुभिरब्दैर्वा, तं हत्वैवैति चक्रिणम् ॥ ४ ॥ नाप्नोत्यवसरं यावत्तावत्तदनुशात्रवम् । इव श्येनोऽनुशकुनि, बम्भ्रमीति दिवानिशम् ॥ ५ ॥ इति चक्ररत्नं ॥ स्याद्दण्डरत्नं सर्वत्राव्याहतं वज्रनिर्मितम् । स्फुरद्रत्नमयैर्दीप्रं, पञ्चभिः पर्वभिः शुभैः ॥ ६ ॥ पथि संचरतश्चक्रिसैन्यस्य सुखहेतवे । क्षुद्राद्रिगर्त्तापाषाणविषमक्ष्मोपमर्दकम् ॥ ७ ॥ युग्मं ॥ प्रयोजनविशेषेण, प्रयुक्तं स्वामिना च तत् । सहस्रयोजनोद्विद्धं, कुर्यात्खातं भुवि द्रुतम् ॥ ८ ॥ परिखाऽष्टापदस्याद्रेर्यथा सगरनन्दनैः । सहस्रयोजनोद्विद्धा, दण्डरत्नेन निर्मिता ॥ ९ ॥ भेदनं शत्रुसैन्यानां, कुलिशं भूभृतामिव । नृदेवतिर्यगुत्पन्नाशेषोपद्रवजिच्च तत् ॥ १० ॥ ज्वलनप्रभनागेन्द्रात्सगरस्याङ्गजन्मनाम् । योऽभूदुपद्रवः सत्यप्यस्मिन् स त्वनुपक्रमः ॥ ११ ॥ ध्वंसः सोपक्रमस्यैवोपद्रवस्य भवेदितः । इतरस्तु भवत्येव,

१ आदौ तावत् ते सुताश्चक्रिणस्तथापि दण्डेन खातकरणं तत्सामर्थ्येन, उपद्रवस्याशान्तिस्तु न सन्निधौ चक्री न च तेन तदर्थं तत् प्रयुक्तं च ।

वीरान्तेवासिदाहवत् ॥ १२ ॥ तथेदं चक्रिणां सर्वं, मनश्चिन्तितसाधकम् । महाप्रभावं स्याद्यक्षसहस्रसमधिष्ठि-
तम् ॥ १३ ॥ इति दण्डरत्नं ॥ खड्गरत्नं भवेत्तीक्ष्णधारं नीलाब्जमेचकम् । नानारत्नलताचित्रविचित्रं च सुगन्धि
च ॥ १४॥ रत्नस्वर्णादिरचनाविचित्रोत्कृष्टमुष्टिकम् । सद्यः शाणोत्तीर्णमिव, शश्वत्तेजोभराद्भुतम् ॥ १५ ॥ गिरि-
वज्रादिदुर्भेदभेदकं शत्रुसैन्यभित् । चराचराणां सर्वेषां, छेदनेऽमोघशक्तिकम् ॥ १६ ॥ त्रिभिर्विशेषकं ॥ १५
पञ्चाशदङ्गुलायामं, षोडशाङ्गुलविस्तृतम् । स्यादर्द्धाङ्गुलबाहल्यमेतद्यक्षसहस्रयुक् ॥ १७ ॥ तथोक्तं जम्बूद्वी-
पप्रज्ञप्तिसूत्रे-"पण्णासंगुलदीहो सोलस(तह)अङ्गुलाइ विच्छिण्णो । अद्धंगुलसोणीको जेट्ठपमाणो असी भणिओ
॥१८॥" यत्तु संग्रहण्यां 'बत्तीसंगुलखग्गो' इति श्रूयते तन्मध्यममानापेक्षया, यदाह वराहः-अङ्गुलशतार्द्धमुत्तम
ऊनः स्यात्पञ्चविंशतिं खड्गः । अनयोश्च संख्ययोर्यो, मध्ये स तु मध्यमो ज्ञेयः ॥ १९ ॥ इति खड्गरत्नं ॥ छत्र-
रत्नं भवेत्पूर्णशरच्छीतांशुमञ्जुलम् । नवनवत्या सहस्रै, रैशलाकाभिरङ्कितम् ॥ २० ॥ दर्शनादेव दस्यूनां, भुज- २०
शस्त्रादिशक्तिहृत् । पुष्टप्रौढस्वर्णदण्डनानाचित्रैश्च चित्रकृत् ॥२१॥ स्थाने च दण्डारोपस्य, पञ्जराकारराजितम् ।
परितो मौक्तिकालीभिर्मणिरत्नैश्च मण्डितम् ॥ २२ ॥ वृष्ट्यातपमरुच्छीताद्युपद्रवनिवारकम् । विषादिनानादो-
षघ्नच्छायं प्राप्यं तपोगुणैः ॥ २३ ॥ शीतकाले विशालोष्णच्छायं ग्रीष्मे च शीतलम् । सर्वर्त्तुसुखदच्छायं,
विमानमिव जङ्गमम् ॥२४॥ ऐश्वर्यशौर्यधैर्यादिप्रदलक्षणलक्षितम् । चक्रिभाग्यमिवाध्यक्षं, राजचिह्नं महोज्वलम् ॥४७४॥
॥ २५ ॥ षड्भिः कुलकं ॥ व्यामप्रमाणमप्येतद्विस्ताराध्यवसायिना । व्याप्नोति चक्रिणा स्पृष्टं, साग्रां द्वादशयो- २५
२६

जनीम् ॥ २६ ॥ साधिकत्वं चात्र परिपूर्णचर्मरत्नपिधायकत्वेनेति जम्बूप्र० वृ० ॥ इति छत्ररत्नं ॥ चर्मरत्नं
भवेच्चारु, श्रीवत्साकारबन्धुरम् । मुक्तातारार्द्धचन्द्रादिचित्रैश्चित्रं समन्ततः ॥ २७ ॥ समग्रचक्रभृत्सैन्यो-
द्वहनेऽपि मनागपि । न न्यञ्चति द्विषच्छस्त्रैर्दुर्भेदं वज्रचर्मवत् ॥ २८ ॥ महानद्यम्भोधिपारप्रापकं यानपात्रवत् ।
तत्कालं गृहपत्युप्तशाकधान्यादिसिद्धिकृत् ॥ २९ ॥ तादृक्प्रयोजने ह्यस्मिन्, धान्याद्युप्तमहर्मुखे ।
लुनाति सायं निष्पन्नं, रत्नं कौटुम्बिकाग्रणीः ॥ ३० ॥ द्विहस्तमानमप्येतत्, स्पृष्टं विस्तारकाङ्क्षिणा ।
व्याप्नोति योजनानि द्वादशैतदधिकानि वा ॥ ३१ ॥ ननु—चक्रिसैन्यावकाशाय, व्यासो द्वादशयोजनः । ५
अस्य स्यादुचितो यत्त्वाधिक्यं तत्तु निरर्थकम् ॥ ३२ ॥ अत्रोच्यते—सत्येव किञ्चिदाधिक्ये, सुखं तिष्ठति
सा चमूः । स्याच्चैवं छत्रयोगेऽस्य, संपुटत्वं निरन्तरम् ॥ ३३ ॥ तथोक्तं—चर्मच्छत्रयोरन्तरालपूरणायो-
पयुज्यते सोऽधिकविस्तार इति जम्बूप्र० वृ० ॥ श्रीवत्साकारमप्येतन्नानाकारं यथाक्षणम् । स्यात्ततश्छत्रयोगस्य,
संपुटत्वं न दुर्घटम् ॥ ३४ ॥ श्रूयते भरतक्षेत्रार्द्धस्योदीच्यस्य साधने । तत्रत्यम्लेच्छपक्षीयैर्नागैर्मेघमुखा-
भिधैः ॥ ३५ ॥ मूशलस्थूलधाराभिः, सप्ताहानि निरन्तरम् । वृष्टौ कृतायां भरतचक्रिसैन्यमहार्त्तये १०
॥ ३६ ॥ स चक्री छत्रचर्मभ्यां, कृत्वा संपुटमद्भुतम् । सैन्यमस्थापयत्तत्र, वेश्मनीवानुपद्रवम् ॥ ३७ ॥ त्रिभि-
र्विशेषकम् । पार्थिवत्वेऽपि तत्साम्याच्चर्मेति व्यपदिश्यते । अन्यथाऽस्य श्रुतख्यातमेकाक्षत्वं विरुध्यते ॥ ३८ ॥
दण्डोऽप्येवं पार्थिवस्तत्साम्यात्तद्व्यपदेशभाक् । भाव्यमेवं पार्थिवत्वं, सप्तानामपि धीधनैः ॥ ३९ ॥ इति चर्म- १४

रत्नं ॥ मणिरत्नं भवेच्चित्राश्वाद्भुतं निरुपमद्युति। वर्यवैडूर्यजातीयं, श्रेष्ठं सर्वमणिष्विह ॥ ४० ॥ सर्वेषामपि भूतानां, प्रियं न्यस्तं च मूर्द्धनि। सर्वदुःखहरं क्षेमतुष्ट्यारोग्यादिकृत्सदा ॥ ४१ ॥ सुरासुरनृतिर्यग्जाशेषोपद्रवनाशकम्। जयप्रदं च संग्रामे, शस्त्राघातनिवारकम् ॥ ४२ ॥ त्रिभिर्विशेषकं ॥ सदावस्थिततारुण्यमवर्द्धिष्णुनखालकम्। विप्रमुक्तं भयैः सर्वैरिदं कुर्वीत धारकम् ॥ ४३ ॥ सान्धकारे तमिस्राादावुद्योतं कुरुतेऽर्कवत्। अचिन्त्यावाच्यमूल्यं तद्देवानामपि दुर्लभम् ॥ ४४ ॥ इदं हि प्रागुरुच्छत्रचर्मसंपुटसंस्थिते। सवितेवाकृतोद्योतं, सैन्ये भरतचक्रिणः ॥ ४५ ॥ गुहाद्वये प्रविशतश्चेदमेव हि चक्रिणः। कुम्भिकुम्भस्थितं ध्वान्तव्रातघाताय कल्प्यते ॥ ४६ ॥ चतुरङ्गुलदीर्घं स्यादङ्गुलद्वयविस्तृतम्। मध्ये वृत्तोन्नतं तच्च, षड्भिः कोणैरलङ्कृतम् ॥ ४७ ॥ इति मणिरत्नं ॥ भवेच्च काकिणीरत्नं, षट्तलं द्वादशास्रकम्। तथाऽष्टकर्णिकं तौल्ये, सुवर्णैरष्टभिर्मितम् ॥ ४८ ॥ स्वर्णकारोपकरणं, ख्याताऽधिकरणिर्जने। तामाकृत्याऽनुकुरुते, चतुरस्रत्वसाम्यतः ॥ ४९ ॥ चतुर्दिशमधोऽथोर्ध्वं, तत्रैवं स्युस्तलानि षट्। न्यस्तं भूमाववैषम्यात्तिष्ठेद्येनेह तत्तलम् ॥ ५० ॥ प्रत्येकमध ऊर्ध्वं च, चतसृष्वपि दिक्षु च। तच्चतुःकोटिसद्भावाद्, द्वादशास्रं प्रकीर्त्तितम् ॥ ५१ ॥ मिलत्यस्रित्रयं यत्र, स कोणः कर्णिकोच्यते। उपर्यधश्चतसृणां, तासां युक्त्याऽष्टकर्णिकम् ॥ ५२ ॥ सुवर्णः स्यात्कर्ममाषैस्तौल्ये षोडशभिः समम्। कर्ममाषप्रमाणं च, प्रागत्रास्ति निरूपितम् ॥ ५३ ॥ सुवर्णैरष्टभिस्तुल्यं, काकिणीरत्नमीरितम्। एतदार्षभिकालीयं, मानं ज्ञेयं विचक्षणैः ॥ ५४ ॥ अन्यथा कालभेदेन, मानवैषम्यसंभवे। न भवेत्काकिणीरत्नं, सर्वेषां

चक्रिणां समम् ॥ ५५ ॥ इष्यते तुल्यमेवेदं, सर्वेषामपि चक्रिणाम्। पुरातनेषु शास्त्रेषु, तथैव प्रतिपादनात् ॥ ५६ ॥ किंच—केचिदात्माङ्गुलैराहुः, काकिणीमणिरत्नयोः। मानमौत्सेधिकैः केचित्तत्प्रमाणाङ्गुलैः परे ॥५७॥ तथा चोक्तं जम्बूद्वीपप्रज्ञप्तिवृत्तौ—"अत्र चाधिकारे एतानि च मधुरतृणफलादीनि भरतचक्रवर्तिकालसंभवीन्येव गृह्यन्ते, अन्यथा कालभेदेन तद्वैषम्यसंभवे काकिणीरत्नं सर्वचक्रिणां तुल्यं न स्यात्, तुल्यं चेष्यते तदित्येतस्मादनुयोगद्वारवृत्तिवचनादेतद्देशीयादेव स्थानाङ्गवृत्तिवचनात् "चतुरङ्गुलो मणी पुण तस्सद्धं चेव होइ विच्छिण्णो ।चउरंगुलप्पमाणा सुवण्णवरकागणी नेया॥१॥" इहाङ्गुलं प्रमाणाङ्गुलमवगन्तव्यं, सर्वचक्रवर्तिनामपि काकिण्यादिरत्नानां तुल्यप्रमाणत्वादिति मलयगिरिकृतबृहत्संग्रहणीबृहद्वृत्तिवचनाच्च केचनास्य प्रमाणाङ्गुलनिष्पन्नत्वं, केचिच्च 'एगमेगस्स णं रण्णो चाउरंतचक्कवट्टिस्स अट्ठसोवण्णिए कागणिरयणे छत्तले दुवालसंसिए अट्ठकण्णिए अहिगरणिसंठाणसंठिए पण्णत्ते, तस्स णं एगमेगा कोडी उस्सेहंगुलविक्खंभा तं समणस्स भगवओ महावीरस्स अद्धंगुलं" इत्यनुयोगद्वारसूत्रबलादुत्सेधाङ्गुलनिष्पन्नत्वं, केऽपि चैतानि सप्तैकेन्द्रियरत्नानि सर्वचक्रवर्तिनामात्माङ्गुलेन ज्ञेयानि, शेषाणि तु सप्त पञ्चेन्द्रियरत्नानि तत्कालीनपुरुषोचितमानानीति प्रवचनसारोद्धारवृत्तिबलादात्मांगुलनिष्पन्नत्वमाहुः, अत्र च पक्षत्रये निर्णयः सर्वविद्वेद्यः, अत्र तु बहु वक्तव्यं, तत्तु ग्रन्थगौरवभयान्नोच्यते इति [1]ज्ञेयं। अस्रयो द्वादशाप्यस्य, चतुर्भिरङ्गुलैर्मिताः। स्युः प्रत्येकं समचतुरस्रत्वा-

१ सर्वासामवसर्पिणीनामादौ भाविनां चक्रिणां तुल्यतेति प्रमाणाङ्गुलपक्षः, अन्त्यचक्रयपेक्षया च अनुयोगद्वारवाक्यं स्यात्, तथा च सर्वेषामेव स्वस्वमानेन तुल्यं च स्यात्।

त्सर्वतः समाः ॥ ५८ ॥ अयं भावः—विष्कम्भायामयोर्नात्र, विशेषः कोऽपि विद्यते । षण्णामपि तलानां तच्चतुरङ्गुलमानता ॥ ५९ ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिसूत्रे—"तं चउरंगुलप्पमाणमित्त"मित्यादि, अनुयोगद्वारसूत्रे तु यदस्य काकिणीरत्नस्यैकैका कोटिरुत्सेधाङ्गुलप्रमितोक्ता तन्मतान्तरं, तत्सूत्रं प्राग् लिखितमिति ज्ञेयं । जङ्गमादिबहुविधविषापहरणक्षमम् । तादृग्जातीयगाङ्गेयनिष्पन्नत्वाद्भवेदिदम् ॥ ६० ॥ तदानीं सर्वमानानां, तत्प्रामाण्यप्रवर्त्तकम् । अनेनैवाङ्कितानि स्युस्तानि प्रत्यायकानि यत् ॥ ६१ ॥ यथाऽधुनाऽप्यासक्कसनिर्णयाङ्कं प्रतीतिकृत् । कुडवादि भवेन्मानं, व्यवहारप्रवर्त्तकम् ॥ ६२ ॥ युग्मम् । खटीखण्डादिवच्चैतद्भित्त्यादौ मण्डलादिकृत् । स्थिरोद्योतं करोत्येतन्मण्डलैर्गुहयोस्तयोः ॥ ६३ ॥ इति काकिणीरत्नं । इति सप्तैकेन्द्रियरत्नानि ॥

अथ सेनापतिरत्नं, भवेत्प्रौढपराक्रमः । हस्त्यादिचक्रिसैन्यानां, स्वातन्त्र्येण प्रवर्त्तकः ॥ ६४ ॥ समग्रभरतव्याप्तयशोराशिर्महाबलः । स्वभावतः सदोदात्तस्तेजस्वी सात्त्विकः शुचिः ॥ ६५ ॥ यवनादिलिपौ दक्षो, म्लेच्छभाषाविशारदः । ततो म्लेच्छप्रभृतिषु, सामदानाद्युपायकृत् ॥ ६६ ॥ विचारपूर्वकाभाषी, यथावसरवाक्यवित् । गम्भीरमधुरालापो, नीतिशास्त्रार्थकोविदः ॥ ६७ ॥ जागरूको दीर्घदर्शी, सर्वशास्त्रकृतश्रमः । ज्ञातयुद्धविधिश्चक्रव्यूहाद्यूहविशेषवित् ॥ ६८ ॥ रिपुमित्रगणस्यापि, दम्भादम्भादिभाववित् । प्रत्युत्पन्नमतिर्धीरोऽमूढः कार्यशतेष्वपि ॥ ६९ ॥ स्वामिभक्तः प्रजाप्रेष्ठः, प्रसन्ननयनाननः । दुर्दर्शनो द्विषां वीररसावेशे भयङ्करः ॥ ७० ॥ लञ्चादिलोभानाकृष्टः, स्वामिकार्यैकसाधकः । सल्लक्षणः कृतज्ञश्च, दयालुर्विनयी ॥ ७१ ॥ जेतव्यवर्षे निम्नोच्चजलशैलादिदुर्गवित् । नानाविषमदुर्गाणां, भङ्गादानादिमर्मवित् ॥ ७२ ॥ सन्धाने प्रतिभिन्नानां, संहतानां च भेदने । उपायज्ञोऽप्रयासेन, द्विषतैव द्विषं जयन् ॥ ७३ ॥ दशभिः कुलकं ॥ तदुक्तं नीतिशास्त्रे—"भङ्गोऽस्तु कस्याप्येकस्य, योधने द्विषतो द्विषा । भवत्युभयथा लाभो, मिथो मोदकयोरिव ॥ ७४ ॥ इति सेनापतिरत्नं ॥ कोष्ठागाराद्यधिकृतो, रत्नं गृहपतिर्भवेत् । सर्वेषां चक्रिसैन्यानां, भोज्यवस्त्रादिचिन्तकः ॥ ७५ ॥ सुलक्षणः सुरूपश्च, दानशौण्डो विशेषवित् । स्वामिभक्तः कृतज्ञश्च, विवेकी चतुरः शुचिः ॥ ७६॥ शाल्यादिनानाधान्यानां, शाकानां चातिभूयसाम् । सिद्धिकृत् प्रातरुप्तानां, सायं तादृक्प्रयोजने ॥ ७७ ॥ त्रिभिर्विशेषकं ॥ एतस्यैवानुभावेन, सैन्यं भरतचक्रिणः । चर्मच्छत्रसमुद्गस्थं, सप्ताहान्याप भोजनम् ॥ ७८ ॥ तथोक्तं ऋषभचरित्रे—"चर्मरत्ने च सुक्षेत्र, इवोप्तानि दिवामुखे । सायं धान्यान्यजायन्त, गृहिरत्नप्रभावतः ॥ ७९ ॥ इति गृहपतिरत्नं ॥ अथ स्याद्वार्द्धकीरत्नं, दक्षधीस्तक्षकाग्रणीः । स्कन्धावारपुरग्रामनिवेशेऽधिकृतः शुचिः ॥ ८० ॥ स चाधीती व्याकरणे, वास्तुशास्त्रार्थतत्त्ववित् । शब्दव्युत्पत्तिशून्यो हि, शास्त्रं किमपि नार्हति ॥८१॥ तथाऽऽह सिद्धान्तशिरोमणौ भास्कराचार्यः—"यो वेद वेदवदनं सदनं हि सम्यग्, ब्राह्म्याः स वेदमपि वेद किमन्यशास्त्रम्! । यस्मादतः प्रथममेतदधीत्य धीमान्, शास्त्रान्तरस्य भवति श्रवणेऽधिकारी ॥ ८२ ॥" पत्तनग्रामनगरप्रासादापणवेश्मनाम् । निवेशने यथौचित्यं, दिक्स्थानादिविचक्षणः ॥ ८३ ॥ गृहाणां बहवो भेदा, वास्तुशास्त्रोदिताश्च ये । तत्र सर्वत्र दक्षोऽसौ, शिल्पवित् प्रतिभापटुः ॥ ८४ ॥ तथाहि—

"ध्रुवं १ धन्यं २ जयं ३ नन्दं ४, खरं ५ कान्तं ६ मनोहरम् ७। सुमुखं ८ दुर्मुखं ९ क्रूरं १०, विपक्षं ११ धनदं १२ क्षयम् १३ ॥ ८५ ॥ आक्रन्दं १४ विपुलं १५ चैव, विजयं १६ चेति षोडश। संप्रत्यमीषां पस्त्यानां, प्रस्तारः प्रतिपाद्यते ॥ ८६ ॥ लघुर्भवेत्सरलया, वक्रया रेखया गुरुः। प्रस्तारचनार्थिभिः, कर्त्तव्या वृत्तजातिवत् ॥८७॥ तत्रायमाम्नायः—गुरोरधो लघून्यस्येत्, पृष्ठे त्वस्य पुनर्गुरून्। अग्रतस्तूर्ध्ववद्दद्याद्, यावत्सर्वलघुर्भवेत् ॥ ८८ ॥ चत्वारो गुरवः स्थाप्या, आद्यपङ्क्तौ ततः परम्। शेषास्तु पङ्क्तिषु स्थाप्यो, लघुराद्यगुरोरधः ॥ ८९ ॥ अग्रे तूर्ध्वपङ्क्तिसमं, रिक्ते स्थाने तु दीयते। गुरुरेवं कृते भङ्गोऽन्तिमः सर्वलघुर्भवेत् ॥ ९० ॥ अथ प्रकृतं—प्रतिशालाद्यलिन्दाढ्या, दिक् स्याल्लघूपलक्षिता। गुरूद्दिष्टाऽनावृता स्यात्ताश्चतस्रो यथाक्रमम् ॥९१॥ तत्र स्यात्प्रथमे भङ्गे, चतुर्भिर्गुरुभिर्गृहम्। एकोऽपवरकोऽलिन्दवर्जितः स चतुर्दिशम् ॥ ९२ ॥ ध्रुवसंज्ञं गृहं तत्स्याद्धन्यं प्राच्यामलिन्दयुक्। यस्यां दिशि गृहद्वारं, सा च प्राची भवेदिह ॥९३॥ तथोक्तं विवेकविलासे—"पूर्वादिदिग् विनिर्देश्या, गृहद्वारव्यपेक्षया। भास्करोदयदिक् पूर्वा, न विज्ञेया यथा क्षुते ॥ ९४ ॥ ॥" दक्षिणस्यामलिन्दः स्याद्यत्र तज्जयसंज्ञकम्। एवं स्युः षोडशो भङ्गे, चतुर्दिशमलिन्दकाः ॥ ९५ ॥ वास्तुशास्त्रे फलं चैषामेवमाहुः—"स्थैर्यं १ धनं २ जयं ३ पुत्रान् ४, दारिद्र्यं ५ सर्वसंपदः ६। मनोह्लादः ७ श्रियो ८ युद्धं ९, वैषम्यं १० बान्धवा ११ धनम् १२ ॥ ९६ ॥ क्षयश्च १३ मृत्यु १४ रारोग्यं १५, सर्वसंपदिति १६ क्रमात्। ध्रुवादीनां फलं ज्ञेयं, सान्वर्थाख्यान्यमून्यतः ॥ ९७ ॥" इयं षोडशभङ्गीह, दिग्मात्रार्थं प्रदर्शिता। एकापवरकादीनां, भेदास्त्वेषामनेकशः ॥ ९८ ॥ उक्तं च रत्नमालाभाष्ये—"वेश्मनामेकशालानां, शतं स्याच्चतुरुत्तरम्। द्विपञ्चाशद् द्विशालानां, त्रिशालानां द्विसप्ततिः ॥ ९९ ॥" नन्द्यावर्त्तं वर्द्धमानं, स्वस्तिकं च तथा परम्। सर्वतोभद्रमित्याद्याः, स्युर्भेदा वेश्मनां शुभाः ॥४००॥ तथाऽऽह वराहः—"नन्द्यावर्त्तमलिन्दैः शाला कुड्यात्प्रदक्षिणान्तगतैः। द्वारं पश्चिममस्मिन् विहाय शेषाणि कार्याणि ॥ १ ॥ द्वारोऽलिन्दान्तगतः प्रदक्षिणोऽन्यः शुभस्ततश्चान्यः। तद्वच्च वर्धमाने द्वारं तु न दक्षिणं कार्यम् ॥ २ ॥ अपरान्तगतोऽलिन्दः प्रागन्तगतौ तदुत्थितौ चान्यौ। तदवधिविधृतश्चान्यः प्राग्द्वारं स्वस्तिकं च शुभम् ॥३॥ अप्रतिषिद्धालिन्दं समन्ततो वास्तु सर्वतोभद्रम्। नृपविबुधसमूहानां, कार्यं द्वारैश्चतुर्भिरपि ॥४॥ (आर्याः)" तथा—वास्तुक्षेत्रोद्गतैर्वल्लीवृक्षैर्भूखातपूरितैः। वेश्माभ्युदयिकं दुःखकृद्वा वेत्ति विचक्षणः ॥ ५ ॥ आसन्नफलदा वास्तुप्ररूढा गर्भिणी लता। अनासन्नफला कन्या, वन्ध्या भवति निष्फला ॥ ६ ॥ वृक्षाः प्लक्षवटाश्वत्थोदुम्बराद्याः शुभाः स्मृताः। अप्रशस्ताः कण्टकिनो, रिपुचौरादिभीतिदाः ॥ ७ ॥ तथाऽऽह वराहः—"शस्तौषधिद्रुमलतामधुरा सुगन्धा, स्निग्धाऽसमानशुषिरा च मही नृपाणाम्। अप्यध्वनि श्रमविनोदमुपागतानां, धत्ते श्रियं किमुत शाश्वतमन्दिरेषु ? ॥ ८ ॥"

विज्ञो वास्तुष्वथायर्क्षव्ययांशादीन् विचारयेत्। अमीभिरनुकूलैर्यत्, स्यादभ्युदयकृद्गृहम् ॥ ९ ॥ विवक्षिते गृहक्षेत्रे, विस्तारो योऽङ्गुलात्मकः। दैर्घ्येणाङ्गुलरूपेण, गुण्यते जायतेऽथ यत् ॥१०॥ तत् स्यात् क्षेत्रफल तस्मिन्नष्टभक्तेऽधिकं च यत्। तदङ्कमानस्तत्रायस्तेषां नामक्रमस्त्वयम् ॥ ११ ॥ ध्वजो १ धूमो २ हरिः ३

श्वा ४ गौः ५, खरो ६ हस्ती ७ द्विकः ८ क्रमात् । पूर्वादिबलिनोऽष्टाया, विषमास्तेषु शोभनाः ॥ १२ ॥ ईशानान्तासु दिक्ष्वेते, पूर्वादिक्रमतः स्थिताः । सान्वर्थनामधेयत्वात्समाः क्वापि न शोभनाः ॥ १३ ॥ वृषं १ सिंहं ३ गजं ७ चैव, खेटकर्बटकौ द्वयोः । द्विपः पुनः प्रयोक्तव्यो, वापीकूपसरस्सु च ॥ १४ ॥ मृगेन्द्रमासने दद्याच्छयनेषु गजं पुनः । वृषं भोजनपात्रेषु, छत्रादिषु पुनर्द्विजम् ॥ १५ ॥ अग्निं वेश्मसु सर्वेषु, गृहे वह्नयुपजीविनाम् । धूमं नियोजयेत् किंच, श्वानं म्लेच्छादिजातिषु ॥ १६ ॥ खरो वेश्यागृहे शस्तो, ध्वाङ्क्षः शेषकुटीषु च । वृषः सिंहो गजश्चापि, प्रासादपुरवेश्मसु ॥ १७ ॥ इत्यायो वास्तुनः प्रोक्तो, नक्षत्रमथ कथ्यते । तत्र सामान्यतो वास्तुजन्मभं कृत्तिका भवेत् ॥ १८ ॥ यदुक्तं व्यवहारप्रकाशे–"भाद्रपदतृतीयायां शनिदिवसे कृत्तिकाप्रथमपादे । व्यतिपाते रात्र्यादौ विश्वा वास्तोः समुत्पत्तिः ॥ १९ ॥" अथेष्टवास्तुनः क्षेत्रफलाङ्केऽष्टगुणीकृते । विभक्तं सप्तविंशत्या, शिष्टं भवति जन्मभम् ॥ २० ॥ अस्मादेव च नक्षत्राद्, गृहाणां स्वामिना सह । राशेर्बलं प्रीतिषडष्टमकादि विचिन्तयेत् ॥ २१ ॥ सप्तसप्तादिभादीनि, न्यस्येत्परिघचक्रवत् । पूर्वादिषु चतसृषु, दिक्ष्विमानि यथाक्रमम् ॥ २२ ॥ इष्टस्य वास्तुनो जन्मधिष्ण्यमेवं समेति चेत् । द्वारदिश्यस्य गेहस्य, तदोद्योऽभिमुखः शशी ॥ २३ ॥ पाश्चात्यभित्तिदिक्प्राप्ते, जन्मभेऽभीष्टवास्तुनः । चन्द्रो भवति पृष्ठस्थोऽनिष्टौ चैतावुभावपि ॥ २४ ॥ तथाऽऽहुः—"प्रारब्धं संमुखे चन्द्रे, न वस्तुं वास्तु कल्पते । पृष्ठस्थे स्वामिघाताय, द्वयोस्तेन त्यजेद्गृही ॥ २५ ॥" गृह एव निषिद्धोऽयं, चन्द्रमाः सन्मुखस्थितः । प्रासादनृपसौधश्रीगृहेषु त्वग्रगः



शुभः ॥२६॥ गुरुशिष्यादिवत्तारा, वर्ज्याऽत्रापि विवेकिभिः । तृतीया पञ्चमी चापि, सप्तमी चापराः शुभाः ॥२७॥ तथोक्तं—"गणयेत्स्वामिनक्षत्राद्यावद्धिष्ण्यं गृहस्य च । नवभिस्तु हरेद्भागं, शेषं ताराः प्रकीर्त्तिताः ॥ १ ॥" शान्ता १ मनोरमा २ क्रूरा ३, विजया ४ कलहोद्भवा ५ । पद्मिनी ६ राक्षसी ७ वारा ८, आनंदा ९ चेति तारकाः ॥ २८ ॥ इति नक्षत्रं ॥ नक्षत्राङ्केऽष्टभिर्भक्ते, शेषाङ्केन व्ययो भवेत् । भागाप्राप्तावथाष्टाभिर्भाङ्क एव व्ययो भवेत् ॥ २९ ॥ स्यात्रिधाऽसौ च पैशाचो, राक्षसो यक्ष एव च । आयेन तुल्योऽभ्यधिको, न्यूनश्चायाद्यथाक्रमम् ॥ ३० ॥ तथाह–"पैशाचस्तु समायः स्याद्राक्षसश्चाधिके व्यये । आयात्नूनतरो यक्षो, व्ययः श्रेष्ठोऽष्टधा त्वयम् ॥ ३१ ॥ शान्तः १ क्रूरः २ प्रद्योतश्च ३, श्रेया ४ नथ मनोरमः ५ । श्रीवत्सो ६ विभव ७ श्चैव, चिन्तात्मको ८ व्ययोऽष्टमः ॥ ३२ ॥" अत्र च—एकशेषे व्ययः शान्तो, द्विशेषे क्रूर इष्यते । एवं यावत् शून्यशेषे, भवेच्चिन्तात्मको व्ययः ॥ ३३ ॥ इति व्ययः ॥ व्ययाङ्केनाभीष्टवेश्मनाम्नश्चाक्षरसंख्यया । मुक्ते क्षेत्रफले भक्ते, त्रिभिः शेषमिहांशकः ॥ ३४ ॥ इन्द्रांशः स्यादेकशेषे, द्विशेषे च यमांशकः । शून्यशेषे च राजांशोऽधमस्तत्र यमांशकः ॥ ३५ ॥ इत्यंशकः ॥ तथा—वैशाखे श्रावणे मार्गे, पौषे फाल्गुन एव च । कुर्वीत वास्तुप्रारम्भं, न तु शेषेषु सप्तसु ॥ ३६ ॥ एते तूक्ताश्चन्द्रमासाः, शुक्लप्रतिपदादिकाः । सौरमासांश्चैवमाहुः, सूर्यसंक्रान्तिचिह्नितान् ॥ ३७ ॥ धामारभेतोत्तरदक्षिणास्यं, तुलालिमेषर्षभभाजि भानौ । प्राक्पश्चिमास्यं मृगकर्ककुम्भसिंहस्थिते द्व्यङ्गगते न किंचित् ॥ ३८ ॥ तुलालीत्याद्युक्तेऽपि पूर्वोक्तचन्द्रमासपञ्चक एव, न शेषमासे-

ष्विति स्वयं ज्ञेयं। संक्रान्ते द्विस्वभावेषु, राशिष्वर्के न कल्पते। एकस्या अप्यभिमुखं, सदनं दिक्चतुष्टये ॥३९॥ अथ दक्षिणपार्श्वोपपीडं सुप्तस्य वास्तुनः। नागस्य स्याच्छिरः १ पृष्ठं २, पुच्छं ३ कुक्षि ४ र्यथाक्रमम् ॥ ४० ॥ भाद्रादिमासत्रितये, दिक्षु पूर्वादिषु क्रमात्। मार्गादिमासत्रितये, दिक्षु स्युर्दक्षिणादिषु ॥ ४१ ॥ फाल्गुनादित्रये तु स्युर्दिक्षु ते पश्चिमादिषु। ज्येष्ठादिषु त्रिषूदीच्यादीनां चतुष्टये दिशाम् ॥ ४२ ॥ कर्त्तव्यो वास्तुनः कुक्षौ, प्रथमं खननोद्यमः। यथा स्यात्सुखसंपत्तिर्वैपरीत्ये विपर्ययः ॥ ४३ ॥ तथोक्तं–"शिरः खनेन्मातृपितॄन्निहन्यात्, खनेच्च पृष्ठे भयरोगपीडा। पुच्छं खनेत् स्त्रीशुभगोत्रहानिः, स्त्रीपुत्ररत्नान्नवसूनि कुक्षौ ॥ ४४ ॥" इति वास्तुनो दिग्नियमः। विदिग्नियमं त्वेवमाहुः—"ईशानादिषु कोणेषु, वृषादीनां त्रिके त्रिके। शेषाहेराननं त्याज्यं, विलोमेन प्रसर्पतः ॥ ४५ ॥ यदा च मुखमैशान्यां, नाभिराग्नेयगा तदा। पुच्छं भवति नैर्ऋत्यां, वायव्यां मुत्कलं शुभम् ॥४६॥" एवं च—वृषादौ मुखमैशान्यां, सिंहादौ वायुकोणके। वृश्चिकादौ च नैर्ऋत्यां, कुम्भादौ हुतभुग्दिशि ॥ ४७॥ वृषादौ वायवी श्रेष्ठा, सिंहादौ नैर्ऋती त्रिके। वृश्चिकादौ शुभाऽऽग्नेयी, तथैशानी घटादिषु ॥४८॥ इति खातारम्भः॥ अथ वास्तुनि भागाः स्युर्देवतानां पृथक् पृथक्। भागानां स्वामिनः पञ्चचत्वारिंशत्सुराः स्मृताः ॥ ४९ ॥ तत्र भागाश्चतुःषष्टिः, पुरे नृपगृहेषु च । एकाशीतिः शेषगृहे, शतं प्रासादमण्डपे ॥ ५० ॥ तथोक्तं सूत्रधारमण्डनकृतवास्तुसारे–"चतुःषष्ट्या पदैर्वास्तु, पुरे राजगृहेऽर्चयेत्। एकाशीत्या गृहे भागशतं प्रासादमण्डपे ॥ ५१ ॥ ईशः १ पर्जन्यो २ जये ३ न्द्रौ ४, सूर्यः ५ सत्यो ६ भृशो ७

नभः ८। अग्निः ९ पूषा १० ऽथ वितथो ११, गृहक्षत १२ यमौ १३ ततः ॥५२॥ गन्धर्वो १४ भृङ्गराजश्च १५, मृगः १६ पितृगणस्तथा १७। दौवारिको १८ ऽथ सुग्रीवः १९, पुष्पदन्तौ २० जलाधिपः २१ ॥ ५३ ॥ असुरः २२ शोष २३ यक्ष्माणौ २४, रोगो २५ ऽहि २६ र्मुख्य २७ एव च। भ(ख)ल्वाट २८ सोम २९ गिरय ३० स्तथा बाह्येऽदिति ३१ र्दितिः ३२ ॥५४॥ आपा ३३ऽपवत्सा ३४ वीशाने, सावित्रः ३५ सविता ३६ ग्निगौ। इन्द्र ३७ इन्द्रजयो ३८ ऽन्यस्मिन्, वायौ रुद्रश्च ३९ रुद्रराट् ४० ॥ ५५ ॥ मध्ये ब्रह्मास्य ४१ चत्वारो, देवाः प्राच्यादिदिग्गताः। अर्यमाख्यो ४२ विवस्वांश्च ४३, मैत्रः ४४ पृथ्वीधरः ४५ क्रमात् ॥ ५६ ॥ ईशकोणादितो बाह्ये, चरकी १ च विहारिका २। पूतना ३ पापा ४ राक्षस्यो, हेतुकाद्याश्च निष्पदाः ॥ ५७ ॥ चतुष्षष्टिपदे देवा, वास्तु ब्रह्मा चतुष्पदः। अर्यमाद्याश्चतुर्भागा, द्विद्व्यंशा मध्यकोणगाः ॥ ५८ ॥ बहिःकोणेष्वर्द्धभागाः, शेषा एकपदाः सुराः। एकाशीतिपदे ब्रह्मा, नवार्याद्यास्तु षट्पदाः ॥ ५९ ॥ द्विपदा मध्यकोणेऽष्टौ, बाह्ये द्वात्रिंशदेकशः। शते ब्रह्माष्टसंख्यांशो, बाह्यकोणेषु सार्द्धकौ ॥ ६० ॥ अर्यमाद्यास्तु वास्त्वंशाः, शेषाः स्युः पूर्ववास्तुवत्। हेमरत्नाक्षताद्यैस्तु, वास्तुक्षेत्राकृतिं लिखेत् ॥ ६१ ॥ अभ्यर्च्य पुष्पगन्धाद्यैर्बलिं दध्याज्यमोदनम्। दद्यात्सुरेभ्यः सोंकारैर्नमोऽन्तैर्नामभिः पृथक् ॥ ६२ ॥ वास्त्वारम्भे प्रवेशे च, श्रेयसे वास्तुपूजनम्। अकृते स्वामिनाशः स्यात्, तस्मात्पूज्यो हितार्थिभिः ॥६३॥ इत्यादि कियद्वास्तुशास्त्रं श्रीजम्बूद्वीपप्रज्ञप्तिसूत्रेऽपि संगृहीतं बोद्धव्यं। तथा च सूत्रं—"एगासीतिपदेसु सव्वेसु चेव वत्थूसु णेगगुणजाणए, पंडिए विहिण्णू पणयाली-

॥४८०॥

साए देवयाण" मित्यादि वार्द्धकिरत्नस्वरूपनिरूपणे। ऐशान्यां देवगृहं महानसं चापि कार्यमाग्नेय्याम्। नैर्ऋत्यां भाण्डोपस्करोऽर्थधान्यानि मारुत्याम्॥६४॥(आर्या)। दण्डः प्रकाशे प्रसादे, प्रासादकरसंख्यया। सान्धकारे पुनः कार्यो, मध्यप्रासादमानतः ॥ ६५ ॥ इत्यादिवास्तुशास्त्रज्ञश्चक्रिरत्नं स वार्द्धकिः। मुहूर्त्तमात्राद्रचयेत्, स्कन्धावारपुरादिकम् ॥ ६६ ॥ इति वार्द्धकिरत्नं ॥ भवेत्पुरोहितो रत्नं, कुर्वन् शान्तिकपौष्टिकम्। चतुर्दशानां विद्यानां, पारदृश्वा सदाशुचिः ॥ ६७ ॥ अनेकगुणसंपूर्णः, कलावान् कुशलः कविः। विज्ञः शब्दादिशास्त्राणां, मन्त्रयन्त्रादिमर्मवित् ॥ ६८ ॥ इति पुरोहितरत्नं ॥ भवत्यथ गजो रत्नं, सप्ताङ्ग्या भूप्रतिष्ठितः। उत्तुङ्गो भद्रजातीय, ऐरावत इवापरः ॥ ६९ ॥ बलीयान् मांसलः शूरः, पटुर्वप्रादिभेदने। दृष्टमात्रोऽपि शत्रूणां, सैन्यशस्त्रादिदर्पहृत् ॥ ७० ॥ शास्त्रोक्तैर्लक्षणैर्न्यक्षैः, प्रशस्तैर्लक्षितः शुचिः। लक्ष्मीलीलागृहं रूपशाली सर्वसमृद्धिकृत ॥ ७१ ॥ त्रिभिर्विशेषकं ॥ इति गजरत्नं। अश्वो रत्नं भवेचारुप्रकृतिर्विनयान्वितः। द्वात्रिंशदङ्गुलोत्तुङ्गमूर्द्धाऽवस्थितयौवनः ॥ ७२ ॥ चतुरङ्गुलदीर्घोच्चैःस्तब्धकर्णश्च यौवनात्। पततो हि जरस्यश्वकर्णौ नारीकुचाविव ॥ ७३॥ विंशतिं चाङ्गुलान्यस्य, बाहा भवति दैर्घ्यतः। बाहा त्वधः शिरोभागाज्जानुनोरुपरि स्थिता ॥ ७४॥ षोडशाङ्गुलजङ्घोऽयं, चतुरङ्गुलजानुकः। तावदुच्चखुरोऽशीतिमङ्गुलान्येवमुच्छ्रितः ॥ ७५ ॥ एकन्यूनाङ्गुलशतपरिणाहो भवत्यसौ। अष्टोत्तराङ्गुलशतदीर्घश्च परिकीर्त्तितः ॥ ७६ ॥ तुङ्गत्वं स्यात्तुरङ्गाणामाखुरात् श्रवणावधि। पृष्ठोदरस्य परिधिः, परिणाहो भवेदिह ॥ ७७ ॥ आपुच्छमूलमायामो, मुखादारभ्य कीर्त्तितः। भवत्यत्राङ्गुलं मान-विशेषस्तज्ज्ञदर्शितः ॥ ७८ ॥ इत्यश्वरत्नमाश्रित्य, निर्दिष्टं मानमागमे। लोके त्वन्योत्तमहयापेक्षयेदं तदीरितम् ॥ ७९ ॥ जघन्यमध्यश्रेष्ठानामश्वानामायतिर्भवेत्। अङ्गुलानां शतं हीनं, विंशत्या दशभिस्त्रिभिः ॥ ८०॥ परीणाहोऽङ्गुलानि स्यात्, सप्ततिः सप्तसप्ततिः। एकाशीतिः समासेन, त्रिविधोऽयं यथाक्रमम् ॥८१॥ तथा षष्टिश्चतुःषष्टिरष्टषष्टिः समुच्छ्रयः। द्विपञ्चसप्तकयुता, विंशतिः स्यान्मुखायतिः ॥८२॥ इत्यादि ॥ पृष्ठं तस्य भवेदीषन्नतं मृदुलमांसलम्। सल्लक्षणं कशावेत्रलताद्याघातवर्जितम् ॥ ८३ ॥ अश्वोचितानेकरत्नस्वर्णालङ्कारभासुरः। भवत्यसौ च निर्दोषारौद्रपक्ष्मललोचनः ॥ ८४ ॥ उदात्तगतिवेगेन, मनःपवनतार्क्ष्यजित्। मृणालाम्भोनिश्रयाऽपि, लाघवेन समुत्पतन् ॥ ८५ ॥ सत्कुलोत्थः सुजातिश्च, शुचिः शास्त्रोक्तलक्षणः। तनुस्निग्धोल्लसद्रोमा, मेधावी भद्रकोऽल्परुट् ॥ ८६ ॥ अम्भःपङ्काग्निपाषाणवालुकोल्लङ्घने पटुः। अद्रिगर्त्तादिविषमपथे जितपरिश्रमः ॥८७॥ लत्ताघातास्यदंशादिदुष्टचेष्टाविवर्जितः। रिपुष्वतर्कितापातात्, स्यात् सुशिष्यवदाश्रवः ॥ ८८ ॥ कालहेषी रक्ततालुजिह्वो जितपरीषहः। निद्रालुः सर्वदा जागरूकश्च समराङ्गणे ॥ ८९ ॥ तथोक्तं—"सदैव निद्रावशगा, निद्राछेदश्च वाजिनाम्। जायते संगरे प्राप्ते, कर्करस्य च भक्षणे ॥ ९० ॥" तथाऽऽरोहकसर्वाङ्गसुखावहवपुर्गतिः। प्रशस्तद्वादशावर्त्तोऽनश्रुपाती श्रमेऽपि हि ॥ ९१ ॥ सप्तभिः कुलकं ॥ द्वादशावर्त्ताश्चेमे वराहोक्ताः—"ये प्रपाणगलकर्णसंस्थिताः, पृष्ठमध्यनयनोपरिस्थिताः। ओष्ठसक्थिभुजकुक्षिपार्श्वगास्ते ललाटसहिताः सुशोभनाः ॥ ९२ ॥" अत्र प्रपाणमुत्तरोष्ठतलं, सक्थिनी पाश्चात्यपादयोर्जानूपरिभागाः,

कुक्षिरत्र वामो, दक्षिणकुक्ष्यावर्त्तस्य गर्हितत्वात्, अत्र कर्णनयनादिस्थानानां द्विसंख्याकत्वेऽपि जात्यपेक्षया द्वादशैव स्थानानि, स्थानभेदानुसारेण स्थानानि भेदा अपि द्वादशैवेति। तत्र कण्ठे स्थितोऽश्वानां, स्यादेवमणिसंज्ञकः। महालक्षणमावर्त्तः, केषांचित्पुण्यशालिनाम् ॥ ९३ ॥ इत्यश्वरत्नं ॥ स्त्रीरत्नं च भवेत्सर्वनारीवर्गशिरोमणिः। रूपलक्षणसंयुक्ता, मानोन्मानप्रमाणयुक् ॥ ९४ ॥ अवर्द्धिष्णुरोमनखा, सदासंस्थितयौवना। आशु स्पर्शमहिम्ना च, सर्वरोगोपशान्तिकृत् ॥ ९५ ॥ बलवृद्धिकरी भोक्तुः, सर्वर्त्तुषु सुखावहा। शीतकाले भवत्युष्णा, ग्रीष्मकाले च शीतला ॥ ९६ ॥ फुल्लाब्जाक्षी शशिमुखी, पीनस्तब्धोन्नतस्तनी। प्रशस्तजघना चारुचरणा गजगामिनी ॥ ९७ ॥ सुस्मिता मधुरालापा, सुस्वरा प्रियदर्शना। हावभावविलासादिचतुरा स्वर्वधूपमा ॥ ९८ ॥ इति स्त्रीरत्नं ॥ चतुर्दशैवं रत्नानि, चक्रिणां प्राज्यपुण्यतः। स्युः सहस्रेण यक्षाणां, सेवितानि पृथक् पृथक् ॥ ९९ ॥ द्वौ सहस्रौ च यक्षाणां, चक्रभृद्देहरक्षकौ। चतुर्दश च रत्नानां, सहस्राः षोडशेत्यमी ॥ ५०० ॥

अथैवं सार्वभौमानां, भवन्ति निधयो नव। नैसर्प्पः १ पाण्डुकश्चैव २, पिङ्गलः ३ सर्वरत्नकः ४ ॥ १ ॥ महापद्मश्च ५ कालश्च ६, महाकाल ७ स्तथाऽपरः। तथा माणवकः ८ शङ्खः ९, शाश्वता अक्षया अमी ॥ २ ॥ पुस्तकानीह नित्यानि, सन्ति दिव्यानि तेषु च। आख्याताऽस्त्यखिला विश्वस्थितिरेकमिदं मतम् ॥ ३ ॥ मतान्तरे तु तत्कल्पपुस्तकप्रतिपादिताः। साक्षात्प्रादुर्भवन्त्यर्थास्तेषु तेषु निधिष्विह ॥ ४ ॥ आकरग्रामनगरपत्तनानां निवेशनम्। मडम्बानां द्रोणमुखस्कन्धावाराद्दवेश्मनाम् ॥ ५ ॥ स्थापनाविषयः सर्वे, वास्तुशास्त्रेऽधुनाऽपि

ये। दृश्यन्ते तत्पुस्तकानि, सन्ति नैसर्पके निधौ ॥ ६ ॥ तत्र वृत्त्यावृतो ग्रामो, लोहाद्युद्भव आकरः। नगरं राजधानी स्याद्रत्नयोनिश्च पत्तनम् ॥ ७ ॥ जलस्थलपथोपेतमिह द्रोणमुखं भवेत्। अर्द्धतृतीयक्रोशान्तर्ग्रामशून्यं मडम्बकम् ॥ ८ ॥ इति प्रथमो निधिः ॥ दीनारनालिकेरादेः, संख्येयस्य धनस्य यः। पारिच्छेद्यस्य मुक्तादेः, प्रकारश्च समुद्भवे ॥ ९ ॥ प्रस्थादिमेयं यद्धान्यं, तोल्यं यच्च गुडादिकम्। तयोः सर्वं प्रमाणं च, मानोन्मानं च तादृशम् ॥ १० ॥ शाल्यादिधान्यबीजानां, वापाहाणामनेकधा। उत्पत्तिपद्धतिः सर्वा, दर्शिता पाण्डुके निधौ ॥ ११ ॥ इति द्वितीयः। विधा आभरणानां या, नानास्त्रीपुरुषोचिताः। तुरङ्गाणां गजानां च, ख्याताः पिङ्गलके निधौ ॥ १२ ॥ इति तृतीयः ॥ चक्रिणां यानि रत्नानि, चक्रादीनि चतुर्दश। व्यावर्णिता तदुत्पत्तिः, सर्वरत्ने महानिधौ ॥ १३ ॥ स्फातिमन्ति भवन्त्येतन्निधानस्य प्रभावतः। चतुर्दशापि रत्नानीत्येवमाहुश्च केचन ॥ १४ ॥ इति चतुर्थः ॥ उत्पत्तिः सर्ववस्त्राणां, रङ्गाद्यारचनाऽपि च। ख्याता निधौ महापद्मे, विधिश्च क्षालनादिकः ॥ १५ ॥ इति पञ्चमः ॥ कालज्ञानं निधौ काले, ज्योतिःशास्त्रानुबन्धि यत्। तथा वंशास्त्रयो येऽर्हच्चक्रभृत्सीरिशार्ङ्गिणाम् ॥ १६ ॥ तेषु वंशेषु यद्भूतं, वर्त्तमानं च भावि यत्। शुभाशुभं तद्विज्ञेयं, सर्वमस्मान्महानिधेः ॥ १७ ॥ कर्मणां कृषिवाणिज्यादीनां शिल्पशतस्य च। निरूपिता स्थितिः सर्वाऽप्यस्मिन्नेव महानिधौ ॥ १८ ॥ इति षष्ठः ॥ नानाविधस्य लोहस्य, स्वर्णस्य रजतस्य च। मणीनां चन्द्रकान्तार्ककान्तादीनां महात्विषाम् ॥ १९ ॥ मुक्तानां स्फटिकानां च, प्रवालानां य आकराः। तेषामुत्पत्तिराख्याता महाकाले

॥ ४८२ ॥

महानिधौ ॥२०॥ इति सप्तमः॥ खड्गकुन्तादिशस्त्राणां, नानाऽऽवरणवर्मणाम्। उत्पत्तिर्युद्धनीतिश्च, सद्व्यूहरचनादिका ॥२१॥ सामदानादिका दण्डनीतयो विविधाश्च याः। हाकाराद्याश्च ताः सर्वाः, प्रोक्ता माणवके निधौ ॥२२॥ ताः स्युर्हाकार १ माकार २ धिक्काराः ३ परिभाषणम् ४। मण्डले बन्धनं ५ काराक्षेपणं ६ चाङ्गखण्डनम् ७ ॥ २३ ॥ परिभाषणमाक्षेपान्मा गा इत्यादि शंसनम्। संरोध इङ्गिते क्षेत्रे, मण्डले बन्ध उच्यते ॥२४॥ तथोक्तं स्थानाङ्गे–"सत्तविहा दण्डनीई पण्णत्ता, तं०–हक्कारे १ मक्कारे २ धिक्कारे ३ परिभासे ४ मंडलिबंधे ५ चारए ६ छविच्छेद ७" इत्यष्टमः ॥ सर्वोऽपि नाट्यकरणप्रकारो नाटकस्य च। अभिनेयप्रबन्धस्य, प्रकारा येऽप्यनेकशः ॥ २५ ॥ चतुर्विधस्य काव्यस्य, तूर्याङ्गाणां च भूयसाम्। नानाविधानामुत्पत्तिः, ख्याता शङ्ख महानिधौ ॥ २६ ॥ काव्यचातुर्विध्यं चैवं–धर्मार्थकाममोक्षाख्यं, पुरुषार्थचतुष्टयम्। काव्यं तत्प्रतिबद्धत्वाद्बुधैरुक्तं चतुर्विधम् ॥ २७ ॥ संस्कृतं प्राकृतं चापभ्रंशं संकीर्णकेति च। भाषाश्चतस्रस्तद्बद्धं, भवेत्काव्यं चतुर्विधम् ॥२८॥ तत्र संस्कृतप्राकृते प्रतीते॥ अपभ्रंशो भवेत्तत्तद्देशेषु शुद्धभाषितम्। संकीर्णा सौरसेन्यादिर्भाषा प्रोक्ता विचक्षणैः ॥२९॥ गद्यं पद्यं च गेयं च, चौर्णं चेत्यथवा भिदः। तत्र स्याद्गद्यमच्छंदोबद्धं बद्धं च तैः परम् ॥३०॥ गान्धर्वरीत्या यद्बद्धं, गेयं गानोचितं हि तत्। चौर्णं भूरि बाहुलकगमाव्ययनिपातयुक् ॥ ३१ ॥ इति नवमः ॥ नवयोजनविस्तीर्णा, द्वादशयोजनायताः। उच्छ्रिता योजनान्यष्टावष्टचक्रप्रतिष्ठिताः ॥ ३२ ॥ सौवर्णा विविधै रत्नैः, पूर्णा वैडूर्यरत्नजैः। कपाटैश्चारुरचनारमणीयैरलङ्कृताः ॥ ३३ ॥ निधिनामसमाख्यानां, पल्यायुष्कसुधा-

भुजाम्। आवासास्ते महर्द्धीनां, सदा स्युर्जाह्नवीमुखे ॥ ३४ ॥ चक्रवर्तिनि चोत्पन्ने, तद्भाग्येन वशीकृताः। वर्षं जित्वा वलमानं, गृहान् प्रत्यनुयान्ति तम् ॥ ३५ ॥ तथोक्तमृषभचरित्रे—"इत्यूचुस्ते वयं गङ्गामुखमागधवासिनः। आगतास्त्वां महाभाग!, त्वद्भाग्येन वशीकृताः ॥ ३६ ॥" पातालमार्गेणायान्ति, तिष्ठन्ति च पुराद्बहिः। तेषां नगरतुल्यानां, पुर्यामनवकाशतः ॥ ३७ ॥ एवं सेनाश्चतस्रोऽपि, पत्त्यश्वेभरथात्मिकाः। पुर्यां न प्रविशन्त्यन्तरवकाशविवर्जिताः ॥ ३८ ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिसूत्रे—'णवरि णव महाणिहीओ चत्तारि सेणाउ (ण)पविसंती"त्यादि, लोके तु-महापद्मश्च १ पद्मश्च २, शङ्खो ३ मकर ४ कच्छपौ ५। मुकुन्द ६-कुन्दौ ७ नीलश्च ८, चर्चश्च ९ निधयो नव ॥ १ ॥ चतुर्दश सहस्राणि, यक्षा रत्नाधिदेवताः। द्वे सहस्रे चाङ्गरक्षाः, सहस्राः षोडशेति ते ॥ ३९ ॥ एकातपत्रं षट्खण्डराज्यं नगरनीवृताम्। मौलिभृद्भूपतीनां च, स्युर्द्वात्रिंशत्सहस्रकाः ॥ ४० ॥ गजानां च रथानां च, निःस्वानानां च वाजिनाम्। स्युः प्रत्येकेन चतुरशीतिः शतसहस्रकाः ॥ ४१ ॥ ऋतुकल्याणिकानां स्युः, पुरन्ध्रीणां सहस्रकाः। द्वात्रिंशतश्च सुस्पर्शाः, सर्वर्त्तुषु सुखावहाः ॥ ४२ ॥ देशाधिपानां कन्या या, उदूढाश्चक्रवर्तिना। तासामपि सहस्राणि, द्वात्रिंशत्स्वर्वधूश्रियाम् ॥ ४३ ॥ पुरन्ध्रीणां भवन्त्येवं, चतुष्षष्टिः सहस्रकाः। भवन्ति द्विगुणास्ताभ्यः, सुरूपा वारयोषितः ॥ ४४ ॥ एकं लक्षं द्विनवतिसहस्राभ्यधिकं ततः। अन्तःपुरीणां निर्दिष्टं, भोगार्थं चक्रवर्त्तिनः ॥४५॥ द्वात्रिंशत्पात्रबद्धानां, नाटकानां सहस्रकाः। द्वात्रिंशद् ढौकितानां स्वकन्योद्वाहेऽखिलैर्नृपैः ॥ ४६ ॥ ग्रामाणां च

पदातीनां, कोट्यः षण्णवतिः स्मृताः । रत्नस्वर्णाद्याकराणां, विंशतिः स्युः सहस्रकाः ॥ ४७ ॥ स्तोत्रे तु षोडश सहस्रा रत्नाकराणामुक्ताः सन्तीति । द्वासप्ततिः पुरवरसहस्राणि भवन्त्यथ । सहस्रा नवनवतिः, श्रुता द्रोणमुखा अपि ॥ ४८ ॥ अष्टचत्वारिंशदेवं, पत्तनानां सहस्रकाः । कर्बटानां मडम्बानां, सहस्रा जिनसंमिताः॥४९॥ द्वीपान्तराणां खेटानां, स्युः षोडश सहस्रकाः । भवन्ति कोटयस्तिस्रो, हलानामथ मन्त्रिणाम् ॥ ५० ॥ संवाहानां सहस्राणि, चतुर्दश भवन्त्यथ । वेलाकुलसहस्राश्च, षट्पञ्चाशत्प्रकीर्त्तिताः ॥ ५१ ॥ कोटयोऽष्टादशाश्वानां, महतां परिकीर्त्तिताः । अभ्रंलिहानेकवर्णध्वजानां दश कोटयः ॥ ५२ ॥ महाबन्दिबन्दिनां च, चतुःषष्टिः सहस्रकाः । तथा गोकुलकोट्येका, भोज्यं कल्याणनामकम् ॥ ५३ ॥ अङ्गमर्दकसंवाहिसूदभूषणधारिणाम् । षट्त्रिंशत्कोटयस्तिस्रो, लक्षा भोजनवेश्मनाम् ॥ ५४ ॥ आतोद्यधारिणां तिस्रो, लक्षा दीपकधारिणाम् । पञ्चलक्षीत्यादि नाना, संपत्स्याचक्रवर्त्तिनाम् ॥ ५५ ॥ इयं च चक्रवर्त्तिनां समृद्धिः कियती श्रीजम्बूद्वीपप्रज्ञप्तिसूत्रानुसारेण शेषा च चक्रिसमृद्धिगर्भितश्रीशान्तिनाथस्तोत्रानुसारेणेति ज्ञेयं । हारो मुक्तामणिमयः, स्याच्चतुःषष्टियष्टिकः । महार्घोऽत्यन्तरुचिरः, सर्वेषामपि चक्रिणाम् ॥ १ ॥

यथाऽऽगममिति प्रोक्तं, स्वरूपं चक्रवर्त्तिनाम् । अथ तद् वासुदेवानां, प्रोच्यते सीरिणामपि ॥ ५६ ॥ एतेऽपि प्राग्भवाचीर्णतपःसंयमसंवरैः । अर्जितोत्तमकर्माण, उत्पद्यन्ते सुधाशिषु ॥ ५७ ॥ तेभ्यश्च्युत्वोच्चगोत्रेषु, महर्द्धिकमहीभृताम् । कुलेषु ते प्रजायन्ते, न तु नीचाल्पसंपदाम् ॥ ५८ ॥ वैमानिकेभ्य एवात्र, वासुदेवा भवन्ति ते । अवश्यं तत्पदप्राप्त्यै, प्राक्कल्पितनिदानकाः ॥ ५९ ॥ अत एवातिगार्द्ध्येन, भुक्त्वा भोगाननुत्तरान् । प्रयान्ति नरकेष्वेव, ते व्रताप्रभविष्णवः ॥ ६० ॥ बलदेवास्तु देवेभ्यः, सर्वेभ्योऽपि भवन्ति ते । प्राग्भवे निर्निदानत्वादन्ते स्वीकृत्य संयमम् ॥ ६१ ॥ स्वर्गं यान्त्यथवा मुक्तिमेषां वैराग्यवासना । खिन्नानां जायते विष्णौ, विपन्ने प्रेष्ठबान्धवे ॥ ६२ ॥ युग्मम् । यत्तु श्रीमहानिशीथे पञ्चमाध्ययने कुवलयाचार्यप्रबन्धे कुवलयप्रभाचार्यो मृत्वा व्यन्तरो बभूव १, ततः शूनाधिपो २, मृत्वा सप्तमपृथिव्यां ३ ततो मृगजातिः ४ ततो महिष ५ स्ततो मनुष्य ६ स्ततो वासुदेव इति मनुष्यभवादनन्तरमागतस्य वासुदेवत्वमुक्तं तन्मतान्तरमिति ज्ञेयं । एतौ च द्वौ विमात्रेयौ, भवतो भ्रातरौ मिथः । जगत्यनुत्तरस्नेहौ, हली ज्येष्ठो हरिर्लघुः ॥ ६३ ॥ एते जितत्रिखण्डाः स्युश्चक्रितोऽर्द्धसमृद्धयः । महीभृतां सहस्रैश्च, सेव्याः षोडशभिस्सदा ॥ ६४ ॥ त्यक्तनिष्कारणक्रोधाः, सानुक्रोशा अमत्सराः । प्रकृत्यैव परगुणग्राहिणो गतचापलाः ॥ ६५ ॥ गम्भीरमधुरस्वल्पातापाः सदुचितस्मिताः । सत्यसंपूर्णवचनाः, शरणागतवत्सलाः ॥ ६६ ॥ लक्षणानां शतेनाष्टाधिकेनाश्रितभूघनाः । उत्कृष्टसत्त्वाः सङ्ग्रामशूराः प्राप्तजयाः सदा ॥ ६७ ॥ प्रचण्डाज्ञा अनलसाः, प्रतिपक्षासहिष्णवः । सितच्छत्रेण सततं, चामराभ्यां च शोभिताः ॥ ६८ ॥ श्रीवत्सलाञ्छनाः पद्मनयनाः प्रियदर्शनाः । यशःकीर्त्तिसु-

१ कादाचित्कं तदिति न विवक्षितं स्याद्, यद्वा न तत्रानन्तर्यनियमः, श्रीवीरविभुभवानामिव स्थूलगणनाया अपि संभवात्, एवं च न बाधा विधिवाक्यस्य ।

धापूर्णत्रैलोक्या गजगामिनः ॥ ६९ ॥ श्यामलद्युतयस्तत्र, वासुदेवा महौजसः । पीतकौशेयवसना, नरसिंहाः स्फुरद्रुचः ॥७०॥ रत्नेन कौस्तुभाख्येन, सदाऽलङ्कृतवक्षसः । उदात्तसत्त्वाः संग्रामसोत्साहा गरुडध्वजाः ॥७१॥ अष्टभिः कुलकम् । तथोक्तं—"जुद्धसूरा वासुदेवा" ॥ पाञ्चजन्याभिधः शङ्खः १, स्याच्चक्रं च सुदर्शनम् २ । गदा कौमोदकी ३ चापं, शार्ङ्गं ४ खड्गस्तु नन्दकः ५ ॥ ७२ ॥ मणिश्च ६ वनमाला ७ च, सप्तरत्नी भवेदियम् । उत्कृष्टा वासुदेवानां, सदा देवैरधिष्ठिता ॥ ७३ ॥ युग्मम् । तत्राशक्यो वादयितुं, शङ्खोऽन्येन हरिं विना । श्रुत्वैवास्य ध्वनिं दृप्तं, वैरिसैन्यं पलायते ॥ ७४ ॥ दण्डरत्नवदुत्कृष्टप्रभावाढ्या परेण च । दुर्वहा स्याद्गदा दृप्यद्वैरिदोर्मदखण्डिनी ॥७५॥ दुराकर्षं धनुः शार्ङ्गमन्येनाद्भुतशक्तिकम् । पलायते शत्रुसैन्यं, यस्य टङ्कारवादपि ( नादतः ) ॥७६॥ श्रूयते धातकीखण्डं, गते चरमशार्ङ्गिणि । द्रौपदीहारिणः सैन्ये, पद्मोत्तरमहीपतेः ॥७७॥ पाञ्चजन्यस्य शब्देन, तृतीयोऽंशः पलायितः । शेषो नष्टस्तृतीयोऽंशो, धनुष्टङ्कारवेण च ॥७८॥ युग्मम् । वनमालाभिधा च स्रक्, सदा हृदयवर्त्तिनी । अम्लाना सततं सर्वर्त्तुकपुष्पाऽतिसौरभा ॥७९॥ चक्रादीनां च रत्नानां, वर्णनं प्राग् निरूपितम् । यथासंभवमत्रापि, योजनीयं मनीषिभिः ॥८०॥ प्रश्नव्याकरणसूत्रे तु वासुदेववर्णने शक्तिः शस्त्रं दृश्यते, मणिश्चात्र न दृश्यते, तथा च तद्ग्रन्थः—'सङ्खचक्कगयसत्तिणंदगधरा" इति, शक्तिश्च त्रिशूलविशेष इति तद्वृत्तौ ।

भवन्ति बलदेवास्तु, गौराङ्गा नीलवाससः । योषिद्दृक्कार्मणीभूतरूपास्तालध्वजान्विताः ॥ ८१ ॥ एषां स्युस्त्रीणि रत्नानि, सेवितानि सुरैः सदा । धनुः परैरनाकर्ष्यं, मुशलं च हलं वरम् ॥ ८२ ॥ त्रीण्यप्यमूनि द्विषतां, पटूनि मदभेदने । दुर्लभानि सुराणामप्यमोघानि च सर्वदा ॥ ८३ ॥ उक्तानि चैतानि रामचरित्रेऽनङ्गलवणमदनाङ्कुशसंग्रामे पद्मस्य बलदेवस्य, तथाहि—पद्मनाभोऽप्यभाषिष्ट, ममापि शिथिलायते । धनुः श्वभ्रे स्थितमिव, वज्रावर्त्तं न कार्यकृत् ॥ ८४ ॥ अभून्मुशलरत्नं च, वैरिनिर्दलनक्षमम् । कणखण्डनमात्रार्हमेवैतदपि संप्रति ॥ ८५ ॥ अनङ्कुशोऽङ्कुशीभूतं, यद्दुष्टनृपदन्तिनाम् । हलरत्नं तदप्येतद्भूद्भूपाटनोचितम् ॥ ८६ ॥ सदा यक्षैः रक्षितानां, विपक्षक्षयकारिणाम् । तेषामेव ममास्त्राणामवस्था त्वियमागता ॥ ८७ ॥" इत्यादि ॥ स्युः षोडश सहस्राणि, विष्णूनां प्राणवल्लभाः । जगदुत्तरसौभाग्यशालिन्यः स्वर्वधूसमाः ॥ ८८ ॥ तथोक्तं दशमाङ्गे—'सोलसदेवीसहस्सवरनयणहिययदइया' इति, अन्तकृत्सूत्रस्याप्यादौ कृष्णवर्णने 'रुप्पिणीपामोक्खाणं सोलसण्हं देवीसहस्साणं" इति, केचिद्वासुदेवानामर्द्धचक्रित्वेन द्वात्रिंशत्सहस्राणि प्रेयसीनामाहुः, तथोक्तं षष्ठाङ्गे पञ्चमाध्ययने—'रुप्पिणीपामोक्खाणं बत्तीसाए महिलासाहस्सीणं' इति ज्ञेयं । सीरिणां तु प्रियासङ्ख्यानैयत्यं नोपलभ्यते । ज्ञेयो दिग्विजयोऽमीषां, कथञ्चिच्चक्रवर्त्तिवत् ॥ ८९ ॥ षोडशाशेषसैन्याढ्याः, पार्थिवानां सहस्रकाः । आकर्षन्त्यन्धुकण्ठस्थं, बद्धं श्रृङ्खलया हरिम् ॥ ९० ॥ नौष्ठोपपीडं खं स्थाम, प्रयुञ्जाना अपीशते । पदाचालयितुं ते तं, महीधरमिव द्विपाः ॥ ९१ ॥ युग्मम् । स तु तान् श्रृङ्खलाप्रान्तवि-

१ मुख्यानां राज्ञां षोडश सहस्राः कन्याः अन्याश्च षोडश इति न द्वयोर्विरोधः, यतः अन्तकृति सूत्रे देवीसहस्साणमिति षष्ठाङ्गे च महिलासहस्साणमिति स्पष्टो विभागः ।

लग्नान् कीटकानिव । ताम्बूलभक्षणव्याजादाकर्षत्येकहेलया ॥ ९२ ॥ बलमेवंविधं कोटिशिलोत्क्षेपक्षमं भवेत् । विष्णूनां द्विगुणं तेभ्यो, बलं स्याच्चक्रवर्त्तिनाम् ॥ ९३ ॥ अगोचरं जगद्वाचामनन्तं बलमर्हताम् । प्रकम्प्य मेरुं बाल्येऽपि, महावीरेण दर्शितम् ॥ ९४ ॥ घनश्यामस्निग्धवर्णाधिष्ठिता देवतागणैः । शिला कोटिशिला याम्यभरतार्द्धे भवेदिह ॥ ९५ ॥ चन्दनैः कुङ्कुमोपेतैरर्चिता कुसुमोत्करैः । सा शिला भाति देवीव, भूषणैर्भूषिताऽभितः ॥ ९६ ॥ सिन्धुदेशे दशार्णाद्रिसमीपे वा मतान्तरे । योजनायामविष्कम्भोच्छ्रया साऽस्ति निरत्यया ॥ ९७ ॥ आद्यं मतं पद्मचरित्रे, द्वितीयं विचार[1]सप्ततौ । विजित्य भरतस्यार्द्धमत्र सर्वेऽपि केशवाः । निजं बलं परीक्षन्ते, समुदस्य शिलामिमाम्[2] ॥ ९८ ॥ इमां वामभुजस्याग्रे, नयत्यादिमकेशवः । द्वैतीयीकश्च शिरसि, कण्ठपीठे तृतीयकः ॥ ९९ ॥ वक्षःस्थले तुरीयश्च, पञ्चमो जठरोपरि । षष्ठः कटितटेऽथोरुप्रदेशे सप्तमो हरिः ॥ ६०० ॥ आजानु चाष्टमोऽन्त्यश्च, कथंचिज्जानुसंनिधौ । क्रमोऽयमवसर्पिण्यामुत्सर्पिण्यां विपर्ययः ॥ १ ॥ त्रिभिर्विशेषकम् । गणभृच्छान्तिनाथस्यामुष्यां चक्रायुधाभिधः । आदौ सिद्धिं गतोऽनेकैः, कलितः साधुसिन्धुरैः ॥२॥ ततस्तस्यैव गणभृत्पुङ्गवस्य क्रमादिह ।द्वात्रिंशता युगैः सिद्धाः, सङ्ख्येया मुनिकोटयः ॥३॥ अरस्य चतुर्विंशत्या, युगैर्द्वादशकोटयः । श्रीमल्लेर्युगविंशत्या, मुनीनां कोटयश्च षट् ॥ ४ ॥ तिस्रः कोट्यः सुव्रतस्य, तीर्थे



१ कालभेदेनाधिपतिभेदेन वा देशसीमाया वैचित्र्यमपेक्ष्य नात्र विरोधः स्याद् । २ अनियमोऽयं, ततो लक्ष्मणेन सीताहरणे प्रत्ययायोत्पाटिता प्राक् सेत्यत्रापि न विरोधः ।

कोटिर्नमिप्रभोः । सिद्धा मुनीनामित्येषा, नाम्ना सिद्धिशिलाऽप्यहो ॥ ५ ॥ स्वरूपं प्रतिविष्णूनामप्यूह्यं वासुदेववत् । पर्यन्ते त्वायुषोऽमीषां, विष्णुर्जगति जृम्भते ॥ ६ ॥ मिथश्चोपस्थिते युद्धे, मुक्तं विष्णुजिघांसया । जायते विष्णुसाच्चक्रं, लब्धयेव वशीकृतम् ॥ ७ ॥ तेनैवाथ स्वशस्त्रेण, चक्रेणामोघशक्तिना । प्रयान्ति नरकं मृत्वा, हरिणा छिन्नमस्तकाः ॥ ८ ॥

नवानां वासुदेवानां, काले स्युर्नारदा नव । तेषां मनःप्रिया नानादेशवार्त्तादिशंसिनः ॥ ९ ॥ तथोक्तं रामचरित्रे तत्कालीननारदस्वरूपं—“मरुत्तो रावणं नत्वोवाच कोऽयं कृपानिधिः । पापादमुष्माद्यो ह्यस्मांस्त्वया स्वामिन्न्यवारयत् ? ॥ १० ॥ आचख्यौ रावणोऽप्यासीन्नाम्ना ब्रह्मरुचिर्द्विजः । तापसस्याभवत्तस्य, भार्या कूर्मीति गुर्व्यभूत् ॥ ११ ॥ तत्रैयुः साधवोऽन्येद्युस्तेष्वेकः साधुरब्रवीत् । भवभीत्या गृहवासस्त्यक्तो यत्साधु साधु तत् ॥ १२ ॥ भूयः सदारसङ्गस्य, विषयैर्लुब्धचेतसः । गृहवासाद्वनवासः, कथं नाम विशिष्यते ? ॥ १३ ॥ श्रुत्वा ब्रह्मरुचिस्तत्तु, प्रपन्नजिनशासनः । तदैव प्राव्रजत्सा च, कूर्म्यभूच्छ्राविका परा ॥ १४ ॥ मिथ्यात्ववर्जिता तत्र, सा वसन्त्याश्रमे सुतम् । सुषुवे नारदं नाम, रोदनादिविवर्जितम् ॥ १५ ॥ गतायाश्चान्यतस्तस्यास्तं जहुर्जृम्भिकामराः । पुत्रशोकादिन्दुमालाऽऽर्यान्तिके प्राव्रजच्च सा ॥ १६ ॥ तेऽमराः पालयामासुः, शास्त्राण्यध्यापयं(पिपं)श्च तम् । आकाशगामिनीं विद्यां, ददुस्तस्मै क्रमेण च ॥१७॥ अणुव्रतधरः प्राप, यौवनं च मनोहरम् । स शिखाधारणान्नित्यं, न गृहस्थो न संयतः ॥ १८ ॥ कलहप्रेक्षणाकाङ्क्षी, गीतनृत्यकुतूहली ।

सदा कन्दर्पकौकुच्यमौखर्यात्यन्तवत्सलः ॥ १९ ॥ वीराणां कामुकानां च, संधिविग्रहकारकः । छत्रिकाख्यो
वृषीपाणिरारूढः पादुकासु च ॥ २० ॥ देवैः संवर्द्धितत्वाच, देवर्षिः प्रथितो भुवि । प्रायेण ब्रह्मचारी च,
स्वेच्छाचार्येष नारदः ॥ २१ ॥ इत्येतदनुसारेण, परेषामपि भाव्यताम् । स्वरूपं नारदर्षीणां, यथासंभवमाग-
मात् ॥ २२ ॥ एवं चासौ रामचरित्राद्यनुसारेण सम्यग्दृष्टिरणुव्रतधारी च प्रतीयते. षष्ठाङ्गे तु तत्कालीनस्य
नारदस्य स्वरूपमेवमुक्तमर्थतः–कच्छुल्लो नारदो नाम, दर्शनेनातिभद्रकः । विनीतश्चेष्टयुद्धत्वादन्तःकलुषिता-
शयः ॥ २३ ॥ व्रतित्वाद्धृतमाध्यस्थ्यः, श्रितानां प्रियदर्शनः । सुरूपो वल्कवसनो, मुकुटभ्राजिमस्तकः ॥ २४ ॥
वक्षःकृसोत्तरासङ्गः, श्यामेन मृगचर्मणा । यज्ञोपवीतयुग् दण्डी, कमण्डलु करे दधत् ॥ २५ ॥ शोभितः २०
कटिसूत्रेण, रुद्राक्षजपमालया । विज्ञः कच्छपिकापाणिर्गीतगान्धर्वकौतुकी ॥ २६ ॥ आकाशगामी सकलभू-
तलाटनलम्पटः । विविधानां स विद्यानां, निधानं केशवप्रियः ॥ २७ ॥ युद्धप्रियस्तदन्वेषी, जनानामसमा-
धिकृत् । पार्थिवान्तःपुरादावप्यनिरुद्धगतिस्सदा ॥ २८ ॥ स चाप्रत्याख्यातपापकर्मा विरतिवञ्चितः । पैशून्य-
भीरुभिर्भूपैर्मिथ्यादृगपि पूज्यते ॥ २९ ॥ तथोक्तं षष्ठाङ्गवृत्तौ—"न प्रतिहतानि सागरोपमकोटीकोट्यन्तःप्रवेशनेन
सम्यक्त्वलाभतः, न च प्रत्याख्यातानि–सागरोपमकोटीकोट्याः सङ्ख्यातसागरोपमैर्न्यूनताकरणेन सर्वविरति- २५
लाभतः पापकर्माणि–ज्ञानावरणीयादीनि येन स तथा" प्रश्नव्याकरणवृत्तावप्युक्तं—"नारदमुनिर्गगनादवत- ॥४८६॥
तार, अभ्युत्थितश्च सपरिवारेण पाण्डुना, द्रौपद्या तु श्रमणोपासिकात्वेन मिथ्यादृष्टिमुनिरयमितिकृत्वा २८

नाभ्युत्थित" इति[1] ॥ रुद्रा अपि भवन्त्येवमेकादश महोद्धताः । वशीकृतानेकविद्योर्जिताः सम्यक्त्वशा-
लिनः ॥ ३० ॥ जघन्यमध्यमोत्कृष्टास्त्रिधा ये पुरुषा भुवि । तेषूत्कृष्टा अमी प्रोक्तास्त्रिधा धर्मादिभेदतः ॥ ३१ ॥
अर्हन्तो धर्मपुरुषाश्चक्रिणो भोगपूरुषाः । वासुदेवाः पुनः कर्मपुरुषा इति कीर्त्तिताः ॥ ३२ ॥ एते यथोक्ताः
पुरुषा, विदेहेषु निरन्तरम् । भवन्त्यन्येषु दशसु, भरतैरावतेषु तु ॥ ३३ ॥ स्युः क्रमादवसर्पिण्यामुत्सर्पिण्यां
तथोत्क्रमात् । आयुर्देहादिभिस्तुल्या, जगतामुपकारिणः ॥३४॥ इति गदितया रीत्या विश्वे भवन्ति हि चक्रिणो, ५
भुजबलजितस्वस्वक्षेत्राः क्षताखिलशात्रवः । हरिहलभृदादीनामप्यूह्यतां दिगियं बुधाः, श्रुतजलनिधेरेषां शेषं
विदन्तु विशेषतः ॥ ३५ ॥ ( हरिणी ) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट
विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपे किलैकत्रिंशत्तम एष पूर्त्तिमभजत्सर्गो
निसर्गोज्ज्वलः ॥ ६३६ ॥ ९

१ तेषां सम्यग्दृक्त्वे मिथ्यादृक्त्वे वा न नियमः, श्रूयते चावश्यके श्रीकृष्णकृतो धर्मचर्चायां नारदस्य पृष्टविहरज्जिनस्यापि न्यक्कारः योगसंग्रहे।

इति श्रीलोकप्रकाशे एकत्रिंशत्तमः सर्गः समाप्तः ॥

## ॥ अथ द्वात्रिंशत्तमः सर्गः प्रारभ्यते ॥

अथास्यामवसर्पिण्यां, क्षेत्रेऽत्रारे तृतीयके। अन्तिमस्यैव पल्यस्याष्टमे भागे किलान्तिमे ॥ १ ॥ सप्ताभूवन् कुलकरा, आद्यो विमलवाहनः। चक्षुष्मांश्च यशस्वी चाभिचन्द्रश्च प्रसेनजित् ॥ २ ॥ मरुदेवश्च नाभिश्च, क्रमादेषामिमाः प्रियाः। चन्द्रयशाश्चन्द्रकान्ता, सुरूपा प्रतिरूपिका ॥ ३ ॥ चक्षुःकान्ता च श्रीकान्ता, मरुदेवा स्वभर्तृवत्। एतासामायुरुच्चत्वादिकं तदिह वक्ष्यते ॥ ४ ॥ स्त्रियः सप्तापि चक्षुष्मान्, यशस्वी च प्रसेनजित्। प्रियङ्गुवर्णा गौरोऽभिचन्द्रोऽन्ये काञ्चनत्विषः ॥ ५ ॥ आद्यसंहननाः सर्वे, आद्यसंस्थानशालिनः। याम्यस्य भरतार्द्धस्य, मध्ये खण्डेऽभवन्नमी ॥ ६ ॥ पल्यस्य दशमो भाग, आयुराद्यस्य कीर्तितम्। ततः पूर्वाण्यसंख्यानि, न्यूनन्यूनान्यनुक्रमात् ॥ ७ ॥ आयुर्भवति पञ्चानां, स्यान्नाभेः सप्तमस्य तत्। संख्येयान्येव पूर्वाणि, तत्पत्न्या अपि तादृशम् ॥ ८ ॥ असंख्यपूर्वायुष्कत्वे, त्वस्य पत्न्याः कथं भवेत्?। निर्वृतिर्मरुदेवाया, निजभर्तृसमायुषः ॥ ९ ॥ अयं भावः–पल्योपमस्य कल्प्यन्ते, चत्वारिंशल्लवा यदि। तदा तदष्टमोंऽशः स्यात्तावान् पञ्चलवात्मकः ॥ १० ॥ तावानभूत्कुलकरकालः सर्वात्मनाऽपि हि। तत्र पल्यस्य दशमो, भाग आद्यस्य जीवितम् ॥ ११ ॥ पल्यस्य दशमांशेन, चत्वारिंशद्विभाजिताः। पूर्वोदिताः स्युश्चत्वारो, भागाः कुलकृदायुषि ॥ १२ ॥ आद्ये कुलकरे पूर्णायुषि पल्योपमस्य तत्। अंशाश्चत्वारिंशदेकः, शिष्यतेऽस्मिन् परेऽखिलाः

॥ ४८७ ॥

॥ १३ ॥ विदेहे पश्चिमेऽभूतां, सुहृदौ वणिजावुभौ। एकोऽभूत्तत्र मायावी, द्वितीयः सरलाशयः ॥ १४ ॥ तयोर्मृत्वाऽथ मायावी, क्षेत्रेऽस्मिन् कुञ्जरोऽभवत्। उज्ज्वलो भद्रजातीयो, युग्मी कुलकरः परः ॥ १५ ॥ गजोऽसौ प्राग्भवस्नेहाद्, दृष्ट्वा तं युग्मिपुङ्गवम्। स्कन्धमारोपयामास, सुरेन्द्रं हस्तिमल्लवत् ॥ १६ ॥ ततश्चैतस्य विमलवाहनेत्यभिधाऽभवत्। परेषु युग्मिषु प्राप, गौरवं तेन सोऽधिकम् ॥ १७ ॥ प्रागभूवन् दशविधाः, कल्पवृक्षास्ततः पुनः। तेऽवाशिष्यन्त विमलवाहने सति सप्तधा ॥ १८ ॥ तथोक्तं स्थानाङ्गे सप्तमे स्थाने—"विमलवाहणे णं कुलगरे सत्तविहा रुक्खा उवभोगत्ताए हव्वमागच्छिंसु, तं०-मत्तंगया य १ भिंगा २ चित्तंगा ३ चेव होंति चित्तरसा ४। मणियंगा य ५ अणियणा ६ सत्तमगा कप्परुक्खा य ॥ १ ॥ 'कप्परुक्ख'त्ति उक्तव्यतिरिक्तसामान्यकल्पितफलदायित्वेन कल्पना कल्पस्तत्प्रधाना वृक्षाः कल्पवृक्षाः ॥ कालेन हीयमानेन, कल्पद्रुपरिहाणितः। युग्मिनां कलहे लोभादन्योऽन्यं नीतिविप्लवे ॥ १९ ॥ हाकाराख्यां दण्डनीतिं, चक्रे विमलवाहनः। कशयेव तुतोदाश्वं, तया नीत्याऽपमार्गगम् ॥ २० ॥ युग्मम्। सलज्जास्तेऽपि तेनैव, दण्डेन ह्रीवशंवदाः। कदापि न पुनर्नीतिमतिक्रामन्ति भद्रकाः ॥ २१ ॥ द्वयोः कुलकृतोरेषा, कालेनास्या व्यतिक्रमे। माकाराख्या बभूवान्या, सा तृतीयचतुर्थयोः ॥ २२ ॥ आद्या स्वल्पापराधानां, द्वितीया प्रचुरागसाम्। पञ्चमादित्रये त्वन्या, धिक्काराह्वा बभूव सा ॥ २३ ॥ अल्पागसां भवत्याद्या, द्वितीया मध्यमागसाम्। अत्युत्कृष्टापराधानां, दण्डनीतिस्तृतीयिका ॥ २४ ॥ नवा १ ष्टौ २ सप्त ३ सार्द्धाः षट् ४ षट् ५ सार्द्धाः पञ्च ६ पञ्च

च। पञ्चविंशाः ७ क्रमादेषां, देहमाने धनुःशताः ॥ २५ ॥ दशभागीकृतस्यैषामायुषः प्रथमोंऽशकः। कुमारत्वेऽन्तिमश्चांशो, वार्द्धके परिकीर्त्तितः ॥ २६ ॥ अष्टासु मध्यमांशेषु, कुलकृत्पदगौरवः। सप्तानामप्यमीषां स्युरेकैको वाहनं गजः ॥ २७ ॥ हस्तिनां च भवत्यायुर्निजैः कुलकरैः समम्। द्वौ सुपर्णकुमारेषूत्पन्नौ कुलकरौ क्रमात् ॥ २८ ॥ अथोदधिद्वीपकुमारेषु द्वौ द्वौ यथाक्रमम्। नाभिर्नागकुमारेषु, तथा षण्णां प्रिया अपि ॥२९॥ निर्वृता मरुदेवा तु, सप्तापि करिणोऽभवन्। नागदेवा मतेऽन्येषां, केषांचित्त्वाद्य एव सः ॥ ३० ॥ तथोक्तं श्रीज्ञानसागरसूरिकृतावश्यकावचूर्णौ–"हस्तिनः सप्तापि षट् च स्त्रियो नागकुमारेषु भवन्त्युत्पन्नाः, अन्ये व्याचक्षते-हस्ती एक एव षट् स्त्रियो नागेषु, शेषैर्नाधिकार इति" ॥ आवश्यकाभिप्रायोऽयं, षष्ठोपाङ्गे तु तात्त्विकैः। उक्ताः कुलकराः पञ्चदश तेऽमी यथाक्रमम् ॥ ३१ ॥ सुमतिश्च १ प्रतिश्रुति २ र्भवेत्सीमङ्करः परः ३। सीमन्धरः ४ क्षेमङ्करः ५, क्षेमन्धर ६ स्ततः परम् ॥ ३२ ॥ विमलवाहन ७ श्चक्षुष्मान् ८ यशस्व ९ भिचन्द्रकः १०। चन्द्राभः ११ प्रसेनजिच्च १२, मरुदेव १३ स्तथा परः ॥ ३३ ॥ नाभिः १४ श्रीऋषभस्वामिप्रभोस्तत्त्वाविवक्षया। उक्ताः कुलकराः पञ्चचरित्रे तु चतुर्दश ॥ ३४ ॥ पल्योपमाष्टमांशस्य, पञ्चभागीकृतस्य ये।

१ श्रीऋषभप्रभोः काले आदौ कल्पवृक्षसद्भावात् कुलकरत्वं पश्चाद् राज्याभिषेके च न कुलकरत्वं ततश्चतुर्दश, तेष्वपि क्षेमन्धरान्ता विमलमतित्वेनाधिका अपि न नीतेः कारका इति न कुलकरत्वेन विवक्षिताः, चन्द्राभस्तु न स्वयं तथेति ध्येयं, समाहितं चान्ययाऽप्यपेक्षया विशेषणवत्यां।



चत्वारोंऽशास्तावदायुर्मतेऽस्मिन् सुमतेः स्मृतम् ॥ ३५ ॥ सर्वेऽप्यन्ये पञ्चमेंऽशे, द्वादशानां च जीवितम्। असंख्येयानि पूर्वाणि, नाभेः संख्येयकानि च ॥ ३६ ॥ पञ्चानां प्रथमा नीतिः, प्रथमानां प्रकीर्त्तिता। द्वितीयानां द्वितीया स्यात्तृतीयानां तृतीयिका ॥ ३७ ॥ नाभेः कुलकरस्याथ, मरुदेवामृगीदृशः। भूमौ भावी विनीतायां, पुत्रत्वेनादिमो जिनः ॥ ३८ ॥ वर्त्तमानावसर्पिण्याः, संबन्धिनि तृतीयके। अरे नवाशीतिपक्षत्रुटिताङ्गावशेषके ॥ ३९ ॥ शुचिश्यामलतुर्यायाम् ( आषाढशुक्लषष्ठ्यां ) स, आगात्सर्वार्थसिद्धितः। स्थितिं समाप्य तत्रत्यां, त्रयस्त्रिंशत्पयोधिकाम् ॥ ४० ॥ त्रयोदशे भवे सोऽस्मात्सार्थवाहो धनाभिधः। आसीत्ससार्थः सोऽचालीद्वसन्तपुरमन्यदा ॥ ४१ ॥ वर्षाकाले पथि प्राप्ते, कान्तारे तस्थिवानसौ। सहागतान्मुनीस्तत्र, सस्मार शरदागमे ॥ ४२ ॥ अन्ये जीवन्ति कन्दाद्यैर्मुनयस्तु कथं हहा!। ततः प्रगे तानाकार्य, स घृतैः प्रत्यलम्भयत् ॥ ४३ ॥ तत्र च प्राप सम्यक्त्वं, मृत्वा कालान्तरेऽथ सः। बभूवोत्तरकुरुषु, युग्मी मृत्वा ततोऽपि च ॥ ४४ ॥ सौधर्मे त्रिदशोऽथाभूद्विदेहेषु महाबलः। ईशाने ललिताङ्गोऽथ, वज्रजङ्घो महीपतिः ॥ ४५ ॥ विदेहेष्वभवत्सोऽथ, युग्म्युत्तरकुरुष्वथ। सौधर्मे त्रिदशोऽथाभूद्विदेहेषु चिकित्सकः ॥ ४६ ॥ श्रेष्ठिभूपामात्यसार्थवाहपुत्रैः सुहृद्वरैः। संयुक्तः स पटूचक्रे, कृमिकुष्ठार्दितं मुनिम् ॥ ४७ ॥ लक्षपाकं ददौ तत्र, तैलं वैद्यसुतः स्वयम्। गोशीर्षचन्दनं लक्षमूल्यं च रत्नकम्बलम् ॥ ४८ ॥ वणिग् ददौ विना

१ पञ्चदशानां विशेषकालापेक्षया कुलकरत्वं, एतदवसर्पिण्यपेक्षया सप्तानामित्यपि नासुन्दरं।

मूल्यं, साधुभक्त्या महाशयः। प्रतिपद्य स चारित्रं, संविग्नः प्रययौ शिवम् ॥ ४९ ॥ चतुर्भिस्सह मित्रैः स, यतीभूय चिकित्सकः। देवोऽभूदच्युते तस्माच्च्युत्वा पञ्चापि ते सुराः ॥ ५० ॥ विजये पुष्कलावत्यां, पुरी या पुण्डरीकिणी। तत्रार्हद्वज्रसेनस्य, समजायन्त नन्दनाः ॥ ५१ ॥ तत्र वैद्यस्य जीवोऽभूद्वज्रनाभाभिधोऽग्रजः। बाहुः सुबाहुः पीठश्च, महापीठ इतीतरे ॥ ५२ ॥ उत्सृज्य सार्वभौमर्द्धि, वज्रनाभोऽनुजैः सह। उपादत्त परिव्रज्यामर्हतः पितुरन्तिके ॥५३॥ अध्यगीष्ट स पूर्वाणि, चतुर्दश परे पुनः। अङ्गान्येकादशाऽऽद्योऽत्र, तीर्थकृत्कर्मभागभूत् ॥ ५४ ॥ द्वितीयश्चान्नपानाद्यैर्भक्तिं कुर्वन्महात्मनाम्। चक्रिभोगफलं कर्माजर्यदार्जवपावनः ॥ ५५ ॥ तार्त्तीयीकश्च साधूनामङ्गसंवाहनादिभिः। लोकोत्तरं बाहुबलफलं कर्म किलार्जयत् ॥ ५६ ॥ ज्येष्ठप्रशंसामात्सर्योदयाच्चारित्रिणावपि। वेदमर्जयतः पीठमहापीठौ च योषिताम् ॥ ५७ ॥ ततः पञ्चापि सर्वार्थसिद्धेऽभूवन् सुधाभुजः। च्युत्वाऽऽद्यौ च ततो वज्रनाभजीवोऽभवज्जिनः ॥ ५८ ॥ मासान् गर्भे नव स्थित्वा, चतुर्भिरधिकान् दिनैः। चैत्रस्य श्यामलाष्टम्यामजनिष्ट जिनेश्वरः ॥ ५९ ॥ गर्भे जन्मनि राज्याप्तौ, दीक्षायां केवलोद्भवे। भं प्रभोरुत्तराषाढा राशिः स्याद्धनुराह्वयः ॥ ६० ॥ व्रतोद्वहनधुर्यत्वादादौ वृषभवीक्षणात्। स्वप्नेषु मात्रा वृषभाङ्कत्वाच्च वृषभाभिधा ॥ ६१ ॥ वृषभः प्रथमो राजाऽऽदिमो भिक्षाचरोऽपि च। आद्योऽर्हन् केवली चेत्यभूवन् पञ्चाभिधाः प्रभोः ॥ ६२ ॥ देशोनवर्षवयसि, प्रभौ हरिरुपागमत्। जीतमाद्यार्हतो वंशस्थापनं ज्ञानतो विदन् ॥ ६३ ॥ इक्षुं शक्रकरे वीक्ष्य, प्रसारितकरे प्रभौ। वंशमिक्ष्वाकुनामानं, स्थापयामास वासवः

॥ ६४ ॥ आकुशब्दो भक्षणार्थे, इक्षोस्तद्भक्षणेच्छया। इक्ष्वाकुर्भगवानेतद्वंश्याश्चैक्ष्वाकवः स्मृताः ॥ ६५ ॥ एवं च—इक्ष्वाकुवंशजा ज्ञेया, जिना द्वाविंशतिर्बुधैः। हरिवंशसमुद्भूतौ, श्रीनेमिमुनिसुव्रतौ ॥ ६६ ॥ तदा च दम्पती कौचिद्विमुच्य सुतनन्दने। तालस्याधः प्राविशतां, क्रीडार्थं कदलीगृहम् ॥ ६७ ॥ तालतः पतता पक्वफलेन तनयो मृतः। अकालमृत्युराद्योऽत्रावसर्पिण्यामभूदयम् ॥ ६८ ॥ अवशिष्टां ततः पुत्रीं, प्रतिपाल्य दिवं गतौ। युग्मिनौ दम्पती स्वल्पकषायौ तौ शुभाशयौ ॥ ६९ ॥ अथात्यन्तोत्कृष्टरूपां, कन्यामेकाकिनीमिमाम्। दृष्ट्वा न्यवेदयन् युग्मिमनुजा नाभयेऽन्यदा ॥ ७० ॥ भविष्यति सुनन्देयं, ऋषभस्य परिग्रहः। इति प्रज्ञाप्य तान् सर्वान्, नाभिरादत्तवानिमाम् ॥ ७१ ॥ अथ भोगसमर्थं तं, विज्ञाय जगदीश्वरम्। अकार्षीद्धरिरागत्य, तत्पाणिग्रहणोत्सवम् ॥ ७२ ॥ विधिं वरोचितं सर्वमकार्षीत्तत्र वासवः। कन्योचितं द्वयोः कन्योः, शच्योऽकार्षुः प्रमोदतः ॥ ७३ ॥ ताभ्यां च सह भुञ्जाने, विविधान् विषयान् विभौ। षट्स्वतीतेषु लक्षेषु, पूर्वाणां जन्मकालतः ॥ ७४ ॥ पञ्चमानुत्तराच्च्युत्वा, पीठो बाहुश्च युग्मजौ। जातौ सुमङ्गलादेव्यां, ब्राह्मीभरतसंज्ञकौ ॥ ७५ ॥ महापीठः सुबाहुश्च, सुनन्दाकुक्षिसंभवौ। सुन्दरीबाहुबल्याख्यावभूतां च सुतासुतौ ॥ ७६ ॥ ततः सुमङ्गलैकोनपञ्चाशतमसूत च। पुनर्युग्मानि पुत्राणां, फलानीव द्युसल्लता ॥ ७७ ॥ शतमेवं च पुत्राणामभूत्पु-

१ यद्यप्यत्र मातापित्रोर्जीवतोस्तनयस्य स्वर्गम इति कथनं, अन्यत्र तथा व्यक्तेरभावेऽपि मातापितरयोरुपरतयोः तथात्वसूचनं अन्ययौगलिकैर्निवेदनात्, उभयथापि मातापितरयोर्मृत्योरनन्तरं निवेदने न विरोधः।

त्रीद्वयं प्रभोः । नमिश्च विनमिश्चेति, परौ क्रोडीकृतौ सुतौ ॥ ७८ ॥ युग्मिनां कलहे जातु, रीत्या पूर्वोक्तयो-
स्थिते । निवेदयन्ति तत्सर्वं, ज्ञात्वा ज्ञानाधिकं प्रभुम् ॥ ७९ ॥ प्रभुरप्याह राजैव, निवारयति दुर्नयात् ।
स चाभिषिक्तः सर्वेषामैश्वर्याद्दुरतिक्रमः ॥ ८० ॥ स राजाऽस्माकमप्यस्तु, तैरित्युक्तेऽवदत्प्रभुः । नत्वा नाभिं
कुलकरं, याचध्वं भूपमीप्सितम् ॥ ८१ ॥ तैर्विज्ञप्तोऽवदन्नाभिर्भूयाद्वृषभ एव च । राजेति तेऽभि-
षेकार्थं, यावद्गच्छन्ति वारिणे ॥ ८२ ॥ तावत्कम्प्रासनः शक्रोऽभ्यषिञ्चद् द्रुतमागतः । राज्येऽर्हन्तं धृतच्छत्रं, रत्न-
सिंहासनस्थितम् ॥८३॥ युग्मम् । अथाम्भःपूर्णनलिनीपत्रभाजनपाणयः । आगतास्ते प्रभुं दृष्ट्वा, सर्वालङ्कारभासु-
रम् ॥८४॥ विस्मिता मुदिताश्चान्तरुत्कण्ठासंभृता अपि । उद्यद्विवेकास्तैर्नीरैः, प्रभोरस्नपयन् पदौ ॥८५॥ युग्मम् ।
तथाऽऽह धनपालः परमार्हतः—“धन्ना सविम्हयं जेहिं झत्ति कयरज्जमज्जणो हरिणा । चिरधरियनलिणिपत्ता-
भिसेअसलिलेहिं दिट्ठो सि ॥ ८६ ॥” विनयेन ततस्तेषां, संतुष्टो वासवो भृशम् । विनीतां नगरीमेषां, निवा-
सार्थमरीरचत् ॥ ८७ ॥ अस्याः स्वरूपं चैवमाहुः—श्रीविभो राज्यसमये, शक्रादेशान्नवां पुरीम् । धनदः स्थाप-
यामास, रत्नचामीकरोत्करैः ॥८८॥ द्वादशयोजनायामा, नवयोजनविस्तृता । अष्टद्वारा महाशाला, साऽभव-
त्तोरणोज्ज्वला ॥ ८९ ॥ धनुषां द्वादश शतान्युच्चैस्त्वेऽष्टशतं तले । व्यायामे शतमेकं स, व्यधाद्वप्रं सखाति-
कम् ॥ ९० ॥ सौवर्णस्य च तस्योर्ध्वं, कपिशीर्षावलिर्बभौ । मणिजाऽमरशैलस्थनक्षत्रालिरिवोद्गता ॥ ९१ ॥
चतुरस्राश्च त्र्यस्राश्च, वृत्ताश्च स्वस्तिकास्तथा । मन्दाराः सर्वतोभद्रा, एकभूमा द्विभूमकाः ॥ ९२ ॥ त्रिभूमाद्याः

सप्तभूमं, यावत्सामान्यभूभुजाम् । प्रासादाः कोटिशस्तत्राभूवन्रत्नसुवर्णजाः ॥ ९३ ॥ युग्मं ॥ दिश्यैशान्यां
सप्तभूमं, चतुरस्रं हिरण्मयम् । सवप्रखातिकं चक्रे, प्रासादं नाभिभूपतेः ॥ ९४ ॥ दिश्यैन्द्र्यां सर्वतोभद्रं, सप्तभूमं
महोन्नतम् । वर्त्तुलं भरतेशस्य, प्रासादं धनदोऽकरोत् ॥ ९५ ॥ आग्नेय्यां भरतस्येव, सौधं बाहुबलेरभूत् ।
शेषाणां च कुमाराणामन्तरा ह्यभवंस्तयोः ॥९६॥ तस्यान्तराऽऽदिदेवस्य, चैकविंशतिभूमिकम् । त्रैलोक्यविभ्र-
माह्वानं, प्रासादं रत्नराजिभिः ॥ ९७ ॥ सवप्रखातिकं रम्यं, सुवर्णकलशावृतम् । चञ्चद्ध्वजपटव्याजान्नृत्यन्तं
निर्ममे हरिः ॥ ९८ ॥ युग्मं ॥ अष्टोत्तरसहस्रेण, मणिजालैरसौ बभौ । तावत्संख्यैर्मुखैर्भूरि, ब्रुवाण इव
तद्यशः ॥ ९९ ॥ कल्पद्रुमैर्वृताः सर्वेऽभूवन् सेभहयौकसः । सप्राकारा बृहद्द्वासःपताकामालभारिणः ॥ १०० ॥
सुधर्मसदृशी चारुरत्नमय्यभवत् पुरः । युगादिदेवप्रासादात्, सभा सर्वप्रभाभिधा ॥ १ ॥ चतुर्दिक्षु व्यराजन्त,
मणितोरणमालिकाः । पञ्चवर्णप्रभाङ्कूरपूरडम्बरिताम्बराः ॥ २ ॥ अष्टोत्तरसहस्रेण, मणिबिम्बैर्विभूषितम् ।
गव्यूतिद्वयमुत्तुङ्गं, मणिरत्नहिरण्मयम् ॥ ३ ॥ नानाभूमिगवाक्षाढ्यं, विचित्रमणिवेदिकम् । प्रासादं जगदी-
शस्य, व्यधाच्छ्रीदः पुरान्तरा ॥ ४ ॥ युग्मं ॥ सामन्तमण्डलीकानां, नन्द्यावर्त्तादयः शुभाः । प्रासादा निर्मि-
तास्तत्र, विचित्रा विश्वकर्मणा ॥ ५ ॥ अष्टोत्तरसहस्रं तु, जिनानां भवनान्यभुः । उच्चैर्ध्वजाग्रसंक्षुब्धती-
क्ष्णांशुतुरगाण्यधः ॥ ६ ॥ चतुष्पथप्रतिबद्धाश्चतुरशीतिरुच्चकैः । प्रासादाश्चार्हतां रम्या, हिरण्यकलशैर्बभुः ॥ ७ ॥
सौधानि हिरण्यरत्नमयान्युच्चैः सुमेरुवत् । कौबेर्यां सपताकानि, चक्रे स व्यवहारिणाम् ॥ ८ ॥ दक्षिणस्यां

क्षत्रियाणां, सौधानि विविधानि च । अभूवन् शस्त्रागाराणि, तेजांसीव निवासिनाम् ॥ ९ ॥ तद्बप्रान्तश्चतुर्दिक्षु, पौराणां सौधकोटयः । व्यराजन्त ग्रुसद्यानसमानविशदश्रियः ॥ १० ॥ सामान्यकारुकाणां च, बहिः प्राकारतोऽभवन् । कोटिसंख्याश्चतुर्दिक्षु, गृहाः सर्वधनाश्रयाः ॥ ११ ॥ अपाच्यां च प्रतीच्यां च, कारुकाणां बभुर्गृहाः । एकभूममुखारुयस्त्रास्त्रिभूमिं यावदुच्छ्रिताः ॥ १२ ॥ अहोरात्रेण निर्माय, तां पुरीं धनदोऽकिरत् । हिरण्यरत्नधान्यानि, वासांस्याभरणानि च ॥ १३ ॥ सरांसि वापीकूपादीन्, दीर्घिकादेवतालयान् । अन्यच्च सर्वं तत्राहोरात्रेण धनदोऽकरोत् ॥ १४ ॥ विपिनानि चतुर्दिक्षु, सिद्धार्थश्रीनिवासके । पुष्पाकरं नन्दनं चाभवन् भूयांसि चान्यतः ॥ १५ ॥ प्रत्येकं हेमचैत्यानि, जिनानां तत्र रेजिरे । पवनाहृतपुष्पाणि, पूजितानि द्रुमैरपि ॥ १६ ॥ प्राच्यामष्टापदोऽपाच्यां, हेमशैलो महोन्नतः । प्रतीच्यां सुरशैलस्तु, कौबेर्यामुदयाचलः॥१७॥ तत्रैवमभवन् शैलाः, कल्पवृक्षाऽऽलिमालिताः । मणिरत्नाकराः प्रोच्चैर्जिनावासपवित्रिताः ॥ १८ ॥ शक्राज्ञया रत्नमयीमयोध्यां परनामतः । विनीतां सुरराजस्य, पुरीमिव स निर्ममे ॥ १९ ॥ यद्वास्तव्यजना देवे, गुरौ धर्मे च सादराः । स्थैर्यादिभिर्गुणैर्युक्ताः, सत्यशौचदयान्विताः ॥ २० ॥ कलाकलापकुशलाः, सत्सङ्गतिरताः सदा । विशदाः शान्तसद्भावा, अहमिन्द्रा महोदयाः ॥ २१ ॥ युग्मं ॥ तत्पुर्यामृषभः स्वामी, सुरासुरनरार्चितः । जगत्सृष्टिकरो राज्यं, पाति विश्वस्य रञ्जनात् ॥ २२ ॥ अन्वयोध्यमिह क्षेत्रपुराण्यासन् समन्ततः । विश्वस्रष्टृशिल्पिवृन्दघटितानि तदुक्तिभिः ॥ २३ ॥ विंशतौ पूर्वलक्षेषु, गतेषु जनिकालतः । तत्रैवं हरिणा

॥४९१॥

राज्येऽभिषिक्तो वृषभः प्रभुः ॥ २४ ॥ कुर्वन्नश्वगजादीनां, संग्रहं सुस्थितां स्थितिम् । राज्यस्य सकलां चक्रे, न्यायाध्वनि पुरस्सरः ॥ २५॥ प्रभुणा दर्शितेष्वेवं, मूलशिल्पेषु पञ्चसु । प्रावर्त्तन्त शिल्पशतं, कर्माण्यपि ततः परम् ॥ २६ ॥ तद्व्यक्तिस्तु प्राग्दर्शिता । प्रावर्त्ततान्नपाकादिराहारविषयो विधिः । शिल्पं घटादिकृष्यादिकर्माणि वचसा प्रभोः ॥ २७॥ नानारत्नाद्यलङ्कारैः, प्रभोर्देहविभूषणाम् । दृष्ट्वा देवैः कृतां लोके, प्रावर्त्तत विभूषणा ॥ २८ ॥ ब्राह्म्या दक्षिणहस्तेन, दर्शिता लिपयोऽखिलाः । एकद्व्यादि च संख्यानं, सुन्दर्या वामपाणिना ॥ २९ ॥ काष्ठपुस्तादिकमेवं, भरतस्योपदर्शितम् । दर्शितं बाहुबलिने, स्त्रीनराश्वादिलक्षणम् ॥ ३० ॥ वस्तूनां मानमुन्मानमुपमानं तथा परम् । प्रमाणं गणितं चेति, पञ्चकं व्यवहारकृत् ॥ ३१ ॥ मानं द्विधा धान्यमानं, रसमानं तथा परम् । धान्यमानं सेतिकादि, कर्षादि च रसस्य तत् ॥ ३२ ॥ पूगीफलादेर्गण्यस्योन्मानं संख्यानुमानतः । सहस्रं नालिकेराणां, पुञ्जेऽस्मिन्निति कल्पना ॥ ३३ ॥ उपमानं च तौल्येन, पलादिपरिभावनम् । हस्तदण्डादिना भूमिवस्त्रादेर्वा मितिः स्फुटा ॥ ३४ ॥ इयद्वर्णमिदं स्वर्णमियत्पानीयकं त्विदम् । रत्नमित्यादि प्रमाणं, गणितं प्राग्निरूपितम् ॥ ३५ ॥ प्रोतं दवरके मण्यादीनां सम्यग् निवेशनम् । समुद्रादौ च बोहित्थवाहनं पोतमूचिरे ॥ ३६ ॥ व्यवहारो विसंवादे, गत्वा राजकुलादिषु । न्यायस्य निश्चयो यद्वा, वस्तूनां क्रयविक्रयौ ॥ ३७ ॥ नीतिः सामादिका युद्धं, बाहुयुद्धाद्यनेकधा । इषुशास्त्रं धनुर्वेदो, राजादीनां च सेवना ॥ ३८ ॥ वैद्यशास्त्रं नीतिशास्त्रं, बन्धनं निगडादिभिः । मारणं नागपूजाद्या, यज्ञा ऐन्द्राद्यो

महाः ॥ ३९ ॥ मेलको गोष्ठिकादीनां, पूर्ग्रामादिपरिग्रहः । प्रयोजनविशेषेण, ग्रामादिजनसंगमः ॥ ४० ॥ एषु किंचिज्जिने राज्यं, भुञ्जानेऽजायत क्रमात् । किञ्चित्किंञ्चित्तथा चैवं, प्रावर्त्तत तदन्वपि ॥ ४१ ॥ षड्भिः कुलकं । स्वयं त्वदर्शयत्सर्वाः, कलाः शिल्पानि च प्रभुः । तेषामनेकभेदत्वं, ततस्तेने जनः क्रमात् ॥ ४२ ॥ स्वस्तिकादिमङ्गलानि, रक्षादिकौतुकानि च । प्रभोः कृतानि देवैः प्राक्, प्रावर्त्तन्त ततो जने ॥ ४३ ॥ केशवस्त्राद्यलङ्कारैर्दृष्ट्वा देवैरलङ्कृतम् । जगदीशं परेऽप्येवं, कुर्वन्ति स्म जना भुवि ॥ ४४ ॥ चूलाकर्मादि बालानां, तिथिधिष्ण्यादिसौष्ठवे । लेखशालोपनयनं, प्रावर्त्तत विभोर्गिरा ॥ ४५ ॥ प्रभोरिन्द्रकृतं दृष्ट्वा, वीवाहस्य महोत्सवम् । लोका अपि तथा चक्रुः, पाणिग्रहणमङ्गलम् ॥ ४६ ॥ युग्मिधर्मनिषेधाय, भरताय ददौ प्रभुः । सोदर्यां बाहुबलिनः, सुन्दरीं गुणसुन्दरीम् ॥ ४७ ॥ भरतस्य च सोदर्यां, ददौ ब्राह्मीं जगत्प्रभुः । भूपाय बाहुबलिने, तदादि जनताऽप्यथ ॥ ४८ ॥ भिन्नगोत्रादिकां कन्यां, दत्तां पित्रादिभिर्मुदा । विधिनोपायत प्रायः, प्रावर्त्तत तथा ततः ॥ ४९ ॥ युग्मम् । एवं च पालयामास, तद्राज्यं वृषभो नृपः । त्रिषष्टिं पूर्वलक्षाणि, प्रीणितप्राणिमण्डलः ॥ ५० ॥ त्र्यशीतौ पूर्वलक्षेषु, गतेष्वेवं च जन्मतः । व्यतरद्वार्षिकं दानं, जिघृक्षुः संयमं प्रभुः ॥ ५१ ॥ ददतं वार्षिकं दानं, दृष्ट्वा च जगदीश्वरम् । प्रावर्त्तत जनोऽप्येवं, दानं दातुं यथाविधि ॥ ५२ ॥ एवं च धनरत्नादिदानं प्रावर्त्तत क्षितौ । अद्यापि तत एवेदमविच्छिन्नं प्रवर्त्तते ॥ ५३ ॥ विभज्यादाज्जिनो राज्यशतं पुत्रशताय च । ततः पिता स्वपुत्रेभ्यो, दद्यादित्यभवत् स्थितिः ॥ ५४ ॥

॥४९२॥

प्रवर्त्तमानवैराग्यः, संप्राप्तः पश्चिमं वयः । सुदर्शनाख्यां शिबिकामारूढः ससुरासुरः ॥ ५५ ॥ कृतषष्ठतपा उग्रभोगादीनां सहस्रकैः । चतुर्भिः सार्द्धमागत्य, विनीतायाः पुरो बहिः ॥ ५६ ॥ स सिद्धार्थवनोद्याने, तलेऽशोकमहातरोः । चक्रे लोचं चतुर्मुष्टिमपराह्णे जगत्प्रभुः ॥ ५७ ॥ स्वर्णवर्णां स शृङ्गस्थां, केशमुष्टिं च पञ्चमीम् । ररक्ष शक्रविज्ञप्त्या, दक्षो दाक्षिण्यसेवधिः ॥ ५८ ॥ अनुप्रव्रजितास्तेऽपि, स्वामिमार्गानुगामिनः । अरक्षन् पञ्चमीं केशमुष्टिं स्कन्धोपरिस्थिताम् ॥ ५९ ॥ चैत्रस्य श्यामलाष्टम्यामेवमात्तव्रतः प्रभुः । विजहार क्षिताव‌ङ्गीकृतमौनाद्यभिग्रहः ॥ ६० ॥ तदानीं च न जानाति, लोको भिक्षा नु कीदृशी ? । कीदृशाः खलु भिक्षाकाः ?, दीयते सा कथं कदा ? ॥ ६१ ॥ अनुप्रव्रजितास्तेऽथ, कच्छाद्याः क्षुत्तृडर्दिताः । पृच्छन्ति भोजनोपायं, प्रभुं प्रणतमौलयः ॥ ६२ ॥ अजल्पति प्रभौ नित्यं, क्षुद्व्यथामसहिष्णवः । गन्तुं गृहेऽनुचितमित्यभूवंस्तापसा वने ॥ ६३ ॥ अगृह्णन्नबुधैर्लोकैर्दीयमानं धनादिकम् । हस्तिनागपुरं प्रापदन्यदा विहरन् विभुः ॥ ६४ ॥ स्वामी किञ्चिन्न लातीति, श्रुत्वा जनमहारवम् । दृष्ट्वा च प्रभुनेपथ्यं, श्रेयांसाख्यो नृपात्मजः ॥ ६५ ॥ जातजातिस्मृतिश्चित्ते, चिन्तयामासिवानिति । अहो प्रभुर्यतीभूतः, किं कुर्वीत धनादिभिः ? ॥ ६६ ॥ युग्मम् । भवादहं तृतीयेऽस्मात्स्वामिनश्चक्रवर्त्तिनः । सारथिः सार्द्धमेतेनाभवं पालितसंयमः ॥ ६७ ॥ नवकोटिविशुद्धं तद्भोज्यमस्योपयुज्यते । कर्मक्षयसहायस्य, साधोर्देहस्य धारकम् ॥ ६८ ॥ घटमिक्षुरसस्यैकं, केनचित्प्राभृतीकृतम् । तदा भगवते सोऽदान्निर्दोषं विशदाशयः ॥ ६९ ॥ अत्र चावश्यकचूर्णावेक इक्षुरसघट उक्तः, पद्मानन्दकाव्यहैमऋ-

षभचरित्रयोस्तु ते बहव उक्ताः सन्तीति ज्ञेयं[1] । पाणिभ्यां च गृहीत्वा तं, प्रभुः पाणिपतद्ग्रहः । वार्षिकीं पारणां चक्रे, बिन्दुमप्यकिरन् भुवि ॥ ७० ॥ यतः—"माइज्ज घडसहस्सा, अहवा माइज्ज सागरा सव्वे । जस्सेआरिस लद्धी, सो पाणिपडिग्गही होइ ॥ ७१ ॥" पञ्च दिव्यान्यजायन्त, प्रससार यशो भुवि । श्रेयांसोपक्रमं पात्रदानं प्रावर्त्तत क्षितौ ॥ ७२ ॥ तथोक्तमावश्यकनिर्युक्तौ—"संवच्छरेण लद्धा, भिक्खा उसहेण लोगनाहेण । सेसेहिं बिअदिवसे, लद्धा उ पढमभिक्खाओ ॥ १ ॥" अत्र यद्यपि—राधशुक्लतृतीयायां, दानमासीद्यदक्षयम् । पर्वाक्षयतृतीयेति, तदद्यापि प्रवर्त्तते ॥ १ ॥ इति शत्रुञ्जयमाहात्म्यवचनात् चैत्रकृष्णाष्टम्या अक्षयतृतीयायां साधिकं वर्षं स्यात्तथापि किञ्चिदाधिक्यस्याविवक्षया वर्षमुक्तमिति संभाव्यते[2], अत एव भक्तामरवृत्तावुक्तं—"साधिकं वर्षं चतसृषु दिक्षु बहल्यादिमण्डलानि विभुर्व्यवहरत् मुक्ताहारो मुनिभिक्षामूर्खमनुजवशात्" ॥ सहस्रमेकं वर्षाणां, विजहार क्षिताविति । प्रमादकालस्तत्राहोरात्रं संकलितोऽभवत् ॥७३॥

शाखापुरे विनीतायाः, पुरिमतालसंज्ञके । उद्याने शकटमुखे, न्यग्रोधस्य तरोस्तले ॥ ७४ ॥ विहिताष्टमभक्तस्योत्पेदे केवलमुज्ज्वलम् । फाल्गुने श्यामैकादश्यां, पूर्वाह्णे ध्यानशुद्धितः ॥ ७५ ॥ तदा च मरुदेवाम्बा, साकं भरतचक्रिणा । गजारूढा प्रभुं नन्तुमागच्छन्ती शिवं ययौ ॥ ७६ ॥ एतस्यामवसर्पिण्यां, सिद्धोऽयं प्रथमोऽभवत् । अन्तर्मुहूर्त्तमात्रेण, प्रभोः केवललाभतः ॥ ७७ ॥ मरुदेवाशरीरं च, देवैः सत्कृत्य संस्कृतम् ।

१ यद्यपि जात्यपेक्षया स्यादेकत्वं परमुपयोग एकस्यैव, तावदाहारस्यौचित्यात्, बहुघटोक्तिस्तु निमन्त्रणापेक्षया २ अभिवर्धितेऽप्याधिक्यात्

॥४९३॥

प्रावर्त्तन्त ततो लोके, शवसत्कृतिसंस्क्रियाः ॥७८॥ एवं च—आदितस्तद्भवेऽष्टानां, निर्वृता मातरोऽर्हताम् । अष्टाष्टौ स्वर्गताः शेषास्तृतीयतुर्ययोः क्रमात् ॥ ७९ ॥ नाभिर्नागकुमारेऽगात्ससाष्टाष्टौ ततः क्रमात् । द्वितीयादिषु नाकेषु, त्रिष्वगुः पितरोऽर्हताम् ॥ ८० ॥ इति प्रवचनसारोद्धाराद्यभिप्रायः, जितशत्रुसुमित्रविजयौ दीक्षितौ सिद्धौ इति तूत्तराध्ययनदीपिकायां, "जितशत्रुर्ययौ मुक्तिं, सुमित्रस्त्रिदिवं गतः ।" इति योगशास्त्रवृत्तौ 'तृप्तो न पुत्रैः सगर' इति श्लोकवृत्तौ, श्रीवीरमातापित्रोस्तु श्रीआचाराङ्गे द्वादशदेवलोकेऽपि गतिरुक्तेति[1] ज्ञेयं ।

शतानि पञ्च पुत्राणां, सप्त नप्तृशतानि च । भरतस्याद्यसमवसरणे प्राव्रजन् प्रभोः ॥ ८१ ॥ अष्टापदाद्रौ समवसृते च श्रीजिनेऽन्यदा । भरतोऽढौकयद्भोज्यमनसां पञ्चभिः शतैः ॥ ८२ ॥ राजपिण्डोऽभ्याहृतश्च, न यतिग्रहणोचितः । इत्युक्ते स्वामिना खिन्नो, भरतोऽथ हरिस्तदा ॥ ८३ ॥ पप्रच्छावग्रहं प्रोचे, भगवांस्तं च पञ्चधा । इन्द्रस्य चक्रिणो राज्ञो, गृहेशस्य सधर्मणः ॥ ८४ ॥ बाध्यते पूर्वपूर्वोऽयमग्र्याग्र्येण यथोत्तरम् । यथेन्द्रावग्रहश्चक्र्यवग्रहेणेह बाध्यते ॥ ८५ ॥ अथ शक्रो विहरतां, श्रमणानामवग्रहम् । अनुजज्ञे ततस्तुष्टो, भरतोऽपि तथाऽकरोत् ॥ ८६ ॥ पप्रच्छ भरतोऽथेन्द्रं, रूपं कीदृगकृत्रिमम् । भवतां ? वर्णिकायै चाङ्गुलीमेषोऽप्यदीदृशत् ॥ ८७ ॥ अष्टाहिकोत्सवं चक्रे, मुदितो भरतस्ततः । ध्वजोत्सवः प्रववृते, स एवेन्द्रमहोत्सवः

१ सामान्यतया सर्वकालमपेक्ष्य प्रवचनसारोद्धारोक्तं, आचारांगोक्तं योगशास्त्रोक्तं च विशेषेण, यद्वा भाव्युपचारेण योगार्थेन च समाधानं

॥ ८८ ॥ आहारेणोपनीतेनामुनाऽथ विदधामि किम् ?। अवादीद्भरतेनेति, पृष्टः स्पष्टं सुरेश्वरः ॥ ८९ ॥ गुणाधिकेभ्यः श्राद्धेभ्यः, श्रद्धया दीयतामिति। भरतः श्रावकान् भक्त्याऽऽहूयेत्यूचे कृताञ्जलिः ॥९०॥ अतः परं भवद्भिर्मे, गृहे भोक्तव्यमिच्छया । कार्यं न कार्यं कृष्यादि, भोज्योपार्जनहेतवे ॥ ९१ ॥ आसितव्यं सदा स्वस्थैः, शास्त्रस्वाध्यायतत्परैः । मह्यं वाच्यश्चोपदेशः, समक्षं सङ्गताविति ॥ ९२ ॥ जितो भवान् वर्द्धते च, भयं मा हन तन्नृप !। ततस्तेऽपि तथा चक्रुर्निश्चिन्ताः सद्व्रतस्पृशः ॥ ९३ ॥ सुखसागरमग्नत्वात्, प्रमत्तो भरतोऽप्यथ। वचांसि तेषामाकर्ण्य, चेतस्येवं व्यचिन्तयत् ॥ ९४ ॥ एते वदन्ति किं ? हन्त, जितोऽहं, कैर्भयं च किम् ?। आः कषायैर्निर्जितोऽहमेभ्य एवैधते भयम् ॥ ९५ ॥ एवं विबोध्यमानस्तैर्भरतेशोऽन्तराऽन्तरा । संवेगं याति कर्माणि, श्लथानि कुरुते ततः ॥ ९६ ॥ यथेच्छमप्रयासेन, भोक्तव्यमिति नैकशः । ख्यापयन्तः श्रावकं स्वमभूवन् भोजनार्थिनः ॥ ९७ ॥ ततश्च तावतां भोज्यमुपस्कर्त्तुमनीश्वराः । व्यजिज्ञपन्नरेन्द्राय, सूदास्ते विनयानताः ॥९८॥ न विद्मो जनबाहुल्यात्, कः श्राद्धोऽत्र ? परश्च कः ?। ततश्चेत्यादिशद्राजा, भोज्यास्ते प्रश्नपूर्वकम् ॥ ९९ ॥ अप्राक्षुस्तेऽथ चेद्यूयं, श्रावकास्तर्हि कथ्यताम् । कः श्राद्धधर्मः ? किं तत्त्वत्रयं ? रत्नत्रयं च किम्? ॥ १०० ॥ अजानतो निराकृत्य, जानतस्तांश्च चक्रभृत्। रत्नेन काकिणीनाम्ना, चक्रे रेखात्रयाङ्कितान् ॥ १ ॥ षष्ठे षष्ठे च मास्येवं, तत्परीक्षां नृपोऽकरोत्। ततस्ते माहना जाताः, पर्यन्तात्तमहाव्रताः ॥ २ ॥ स्वसुतांस्ते च साधुभ्यो, दत्तवन्तो महाशयाः । अभूवन् श्रावकोत्तंसाः, संयमाप्रभविष्णवः ॥ ३ ॥ तीर्थंकरस्तुतिप्रायान्,

श्राद्धधर्मनिरूपकान्। कृत्वाऽऽर्यान् भरतो वेदान्, तेभ्योऽदात् पाठहेतवे॥४॥ अथैतांश्चक्रिमान्यत्वात्, मन्यते स्म जनोऽखिलः। दानं च पात्रबुद्ध्याऽदाद्द्रव्यवस्त्रगृहादिकम् ॥ ५ ॥ देवप्रतिष्ठोद्वाहादि, यद्धर्म्यं यच्च लौकिकम्। तत्तदेतान् पुरस्कृत्य, गृहिकार्यं जनोऽकरोत् ॥ ६ ॥ इत्यष्टौ पुरुषान् यावदादित्ययशआदिकान् । अभवत् मान्यता तेषां, भोजनं च नृपालये ॥ ७ ॥ तत्रादित्ययशाः कुर्वन्, षष्ठे मासि परीक्षणम्। चकार काकिणीरत्नाभावाच्चिह्नं सुवर्णजम् ॥ ८ ॥ महायशःप्रभृतयः, केचिद्रूप्यमयं ततः। पट्टसूत्रमयं केचित्, ततः सूत्रमयं परे ॥ ९ ॥ यज्ञोपवीतमेतेषां, तदद्यापि प्रवर्त्तते। त्रितन्तुकं पूर्वरूढ्या, तत्त्वशून्यात्मनामपि ॥ १० ॥ साधुमार्गव्यवच्छेदादथ कालेन गच्छता। द्विजा मिथ्यात्विनोऽभूवन्, केऽप्यासन् श्रावका अपि ॥ ११ ॥ क्रमात् पर्वतसुलसपिप्पलादादिभिः कृताः। वेदा अनार्यास्ते यज्ञजीवहिंसादिदूषिताः ॥ १२ ॥

प्रभोरभूवंश्चतुरशीतिर्गणधरोत्तमाः। पुण्डरीकप्रभृतयो, गणास्तावन्त एव च ॥ १३ ॥ कल्पसूत्रे च प्रथमगणधर ऋषभसेन इत्यभिधीयते, पुण्डरीकस्यैव नामान्तरमित्यन्ये । स्वदीक्षिताश्च चतुरशीतिः साधुसहस्रकाः । ब्राह्मीसुन्दर्यादिसाध्वीलक्षास्तिस्रः प्रकीर्त्तिताः ॥ १४ ॥ श्रेयांसादिश्राद्धलक्षत्रयी पञ्चसहस्रयुक्। सुभद्रादिश्राविकाणां, पञ्च लक्षास्तथोपरि ॥ १५ ॥ चतुष्पञ्चाशत्सहस्राः, केवलज्ञानिनां पुनः । स्युर्विंशतिः सहस्राणि, लोकालोकावलोकिनाम् ॥ १६ ॥ सकलाक्षरसंयोगविच्चतुर्दशपूर्विणाम् । चतुःसहस्री संयुक्ता, पञ्चाशैः सप्तभिः शतैः ॥ १७ ॥ अवधिज्ञानभाजां तु, सहस्राणि नवाभवन्। शता वैक्रियलब्धीनां, षट्ट सह-

स्राश्च विंशतिः ॥ १८ ॥ मनःपर्यायभाजां च, सहस्रा द्वादशोपरि । पञ्चाशाः षट् शता ज्ञेयाः, पञ्चाशाः सप्त वा शताः ॥ १९ ॥ वादिनां च सहस्रा द्वादशा द्व्यर्द्धाश्च षट् शताः । निर्ग्रंथानां सहस्राणि, मुक्तिं प्राप्तानि विंशतिः ॥ २० ॥ मुक्तिं प्राप्ताश्च साध्वीनां, चत्वारिंशत्सहस्रकाः । स्वदीक्षितापेक्षयैषा, सङ्ख्या सर्वा भवेदिह ॥ २१ ॥ द्वाविंशतिः सहस्राणि, शतानि च नवोपरि । अनुत्तरविमानेषूत्पन्नान्यन्तिषदां प्रभोः ॥२२॥



पञ्चचापशतोत्तुङ्गः, स्वर्णरुग् वृषलाञ्छनः । व्यहार्षीत्पूर्वलक्षं स, सहस्राब्दोनितं भुवि ॥ २३ ॥ सच्छिरोमकृताकारमर्हतां लांछनं भवेत् । व्यक्त्योपलक्ष्यावयवं, वृषेभतुरगादिकम् ॥ २४ ॥ वरदं चाक्षमालां चापसव्यकरयोर्दधत् । मातुलिङ्गं पाशकं च, बिभ्रद्वामकरद्वये ॥ २५ ॥ यक्षः श्रीगोमुखः स्वर्णवर्णाङ्गो गजवाहनः । चतुर्भुजो जयत्यादिदेवसेवकवत्सलः ॥२६॥ युग्मम् । वामे धनुर्वज्रचक्राङ्कुशान् पाणिचतुष्टये । दक्षिणे वरदं बाणं, चक्रं पाशं च बिभ्रती ॥ २७ ॥ देवी चक्रेश्वरी नाम्नाऽप्रतिचक्रा मतान्तरे । जयत्यष्टभुजा तार्क्ष्यवाहना कनकद्युतिः ॥२८॥ युग्मम् । पूर्वाणां लक्षमित्येकं, श्रामण्यं परिपाल्य सः । अष्टापदं महाशैलं, जगाम विहरन् विभुः ॥२९॥ तत्रोत्तमानगाराणां, सहस्रैर्दशभिः सहः । विधायानशनं षड्भिरुपवासैरपानकैः ॥३०॥ माघासितत्रयोदश्यां, धिष्ण्ये चाभिजिदाह्वये । पूर्वाह्णे प्राप पर्यङ्कासनस्थः परमं पदम् ॥ ३१ ॥ ततः पूर्वोक्तविधिना, शक्राद्यैः समहोत्सवे । प्रभोः कृतेऽङ्गसंस्कारे, गृहीतेषु च सक्थिषु ॥ ३२ ॥ चक्रिरे भस्मना तेन, तिलकानि नृपादयः । ततः शेषा यथालाभं, भस्ममिश्रमृदादिभिः ॥ ३३ ॥ अत्र चितादिस्वरूपमेवमावश्यकवृत्तौ हारिभद्र्यां-पूर्वेण भगवतश्चिता वृत्ता, दक्षिणेनेक्ष्वाकूणां चिता त्र्यस्रा, अपरेण शेषसाधुचिता चतस्रा, ततोऽग्निकुमारा वदनैः खल्वग्निं प्रक्षिप्तवन्तः, ततो लोकेऽग्निमुखा देवा इति प्रसिद्धमित्यादि । प्रभोश्चिताग्निमसकृद्याचिता माहनैः सुराः । आहुस्तान् याचकांस्ते च, तथैव प्रथिता भुवि ॥ ३४ ॥ सदाऽनिर्वाणमग्निं तं, धृत्वा कुण्डेषु वेश्मसु । त्रिसन्ध्यं पूजयन्तस्ते, संजाता आहिताग्नयः ॥ ३५ ॥ अर्हदैक्ष्वाकन्यसाधुचितात्रयसमुद्भवः । त्रिविधोऽग्निः कष्टपापहरोऽभूदग्निहोत्रिणाम् ॥ ३६ ॥ अथ वार्द्धकिरत्नेन, भरतस्तत्र पर्वते । अचीकरज्जिनगृहं, गव्यूतत्रितयोच्छ्रितम् ॥ ३७ ॥ योजनायामतदर्द्धविष्कम्भं तच्चतुर्मुखम् । चतुर्विंशदर्हदर्चा, मानवर्णान्विता दधौ ॥ ३८ ॥ तस्मिन् सिंहनिषद्याख्ये, प्रासादे भरतेश्वरः । अकारयज्जिनार्चानां, प्रतिष्ठां मुनिपुङ्गवैः ॥ ३९ ॥ भ्रातॄणां नवनवतेः, प्रतिमामात्मनोऽपि च । तथा स्तूपशतं तत्र, चितास्थानेष्वरीरचत् ॥ ४० ॥ नवनवतेर्भ्रातॄणामेकं स्तूपं जगद्गुरोः । मा कार्षीत्कश्चिदाक्रामन्नेतदाशातनामिति ॥ ४१ ॥ संतक्ष्य दण्डरत्नेन, परितोऽष्टापदं गिरिम् । अष्टौ योजनमानास्तन्मेखलाः स व्यरीरचत् ॥ ४२ ॥ चक्रे लोहमयान् यन्त्रपुरुषान् द्वारपालकान् । ततः क्रमेण सगरात्मजैर्वंश्यानुरागतः ॥ ४३ ॥ कृताऽत्र दण्डरत्नेन, परिखा दिव्यशक्तिना । भगीरथेन सा गङ्गाजलौघैः पूरिता ततः ॥ ४४ ॥ अष्टभिः कुलकम् ।

अथ प्रकृतं-पुत्रपौत्रादिका शिष्यप्रशिष्याद्येति च द्विधा । नाभेयस्य भगवतोऽभवत्पट्टपरम्परा ॥ ४५ ॥ तत्र शिष्यप्रशिष्यादिपारम्पर्यव्यपेक्षया । पट्टाधिपाः प्रभोः संख्यातीताः प्रापुः परं पदम् ॥ ४६ ॥ आदित्यय-

॥४९५॥

शआदीनां, या तु निर्वाणपद्धतिः। सर्वार्थसिद्धान्तरिता, नन्दिसूत्रादिषूदिता ॥ ४७ ॥ साऽपेक्ष्य पुत्रपौत्रादीन्, पट्टेशान् कोशलापतीन्। प्रतिलोमानुलोमादिस्तत्रैवं सिद्धदण्डिका ॥ ४८ ॥ पट्टे वृषभदेवस्य, प्रथमं भरतेश्वरः। आदर्शगृहसंप्राप्तकेवलो निर्वृतिं ययौ ॥ ४९ ॥ ततो राजाऽऽदित्ययशास्ततो राजा महायशाः। ततश्चातिबलो राजा, ततो राजा महाबलः ॥ ५० ॥ तेजोवीर्यः कीर्तिवीर्यो, दण्डवीर्यो महीपतिः। जलवीर्यश्चेति भूपाः, ख्याता वृषभवंशजाः ॥ ५१ ॥ अयं स्थानाङ्गाभिप्रायेण नामक्रमः, आवश्यके तु—"राया आइच्चजसे १ महाजसे २ अतिबले य ३ बलभद्दे ४। बलविरिय ५ कित्तिविरिए ६ जलविरिए ७ दंडविरिए य ८ ॥ १ ॥" इह चान्यथात्वमेकस्यापि नामान्तरभावाद्गाथानुलोम्याच्च संभाव्यत इति स्थानाङ्गवृत्तौ। एभिरेवाष्टभिर्मौलावधारि मुकुटः प्रभोः। वोढुं नाशक्यतान्यैस्तु, क्रमाद्धीनवपुर्बलैः ॥ ५२ ॥ भुक्त्वैते भरतार्द्धस्य राज्यमादर्शसद्मनि। केवलं प्राप्य प्रपन्नमुनिवेषाः शिवं ययुः ॥ ५३ ॥ एवं निरन्तरं सिद्धिं, ययुर्लक्षाश्चतुर्दश। ततः सर्वार्थसिद्धेऽगादेकस्तस्यान्वये नृपः ॥ ५४ ॥ पुनर्निरन्तरं जग्मुः, सिद्धिं लक्षाश्चतुर्दश। एकः सर्वार्थसिद्धेऽगात्, पुनरेवमिति क्रमः ॥ ५५ ॥ तावद्यावदसंख्याः स्युर्नृपाः सर्वार्थसिद्धिगाः। चतुर्दशचतुर्दशलक्षव्यवहिता अपि ॥ ५६ ॥ ततः पुनर्ययुर्मुक्तिं, नृपलक्षाश्चतुर्दश। द्वौ च सर्वार्थसिद्धेऽथ, मुक्तिं लक्षाश्चतुर्दश ॥ ५७ ॥ भूयः सर्वार्थसिद्धे द्वौ, मुक्तौ लक्षाश्चतुर्दश। यावच्च द्विकसंख्याका, असंख्येया भवन्ति ते ॥ ५८ ॥ एवमन्तरिता लक्षैश्चतुर्दशभिरन्तरा। निरन्तरं नृपवरैर्गच्छद्भिः पदमव्ययम् ॥ ५९ ॥ स्युः प्रत्येकमसंख्येया, एवं त्रिचतुराद्यः। पञ्चाशदन्ताः सर्वार्थसिद्धिं प्राप्ता महाशयाः ॥ ६० ॥ युग्मम् ॥ उक्तं च—"चउदस लक्खा सिद्धा, निवईणेक्को य होइ सवट्टे। एवं एक्कट्ठाणे पुरिसजुगा होंतऽसंखेज्जा ॥ ६१ ॥ पुणरवि चोद्दस लक्खा, सिद्धा निवईण दोवि सवट्टे। दुगठाणेवि असङ्खा पुरिसजुगा होंति नायव्वा ॥ ६२ ॥ जाव य लक्खा चोद्दस सिद्धा पन्नास होंति सवट्टे। पन्नासट्ठाणेवि हु पुरिसजुगा होंतऽसंखेज्जा ॥ ६३ ॥" अनुलोमा भवेत्सिद्धदण्डिकेयमितोऽन्यथा। रीत्याऽनयैव भवति, विलोमा सिद्धदण्डिका ॥ ६४ ॥ तथाहि—सर्वार्थसिद्धे प्रथमं, ययुर्लक्षाश्चतुर्दश। तत एकोऽगमत्सिद्धिं, पुनर्लक्षाश्चतुर्दश ॥ ६५ ॥ सर्वार्थं जग्मुरेवं च, स्युरेकैकेऽप्यसङ्ख्यकाः। मुक्ताश्चतुर्दशचतुर्दशलक्षकृतान्तराः ॥ ६६ ॥ एवं पञ्चाशदन्तानां, विमुक्तानां निरन्तरम्। स्यात्प्रत्येकमसङ्ख्यानां, विलोमा सिद्धदण्डिका ॥ ६७ ॥ उक्तं च—"विवरीयं सवट्टे चउदस लक्खा उ निव्वुओ एगो। सच्चेव य परिवाडी पन्नासा जाव सिद्धीए ॥ ६८ ॥" मुक्तौ सर्वार्थसिद्धे च, द्वे द्वे लक्षे निरन्तरम्। ययुस्ते समसङ्ख्याका, एवं त्रिचतुराद्यः ॥ ६९ ॥ यावल्लक्षा असङ्ख्येयाः, स्युस्तुल्या उभयोरपि। समसङ्ख्या भवेत्सिद्धदण्डिकेयं तृतीयिका ॥ ७० ॥ उक्तं च—"तेण परं दुदुलक्खाइ दो दो ठाणाइ समग वच्चंति। सिवगइसवट्टेहिं इणमो तेसिं विहा होइ ॥ ७१ ॥ दो लक्खा सिद्धीए दो लक्खा नरवईण सवट्टे। एवं तिलक्खचउपञ्च जाव लक्खा असंखिज्जा ॥ ७२ ॥" ततश्चित्रान्तराः ख्याताश्चतस्रः सिद्धदण्डिकाः। एकादिरेकाभ्यधिका, तत्राद्या सिद्धदण्डिका ॥ ७३ ॥ एकादिद्व्युत्तराऽन्या स्यादेकादित्र्युत्तरा परा। स्यात्सिद्धदण्डिका तुर्या, द्विव्यादिविषमो-

त्तरा ॥ ७४ ॥ आदावेको ययौ मुक्तिं, द्वौ सर्वार्थेषु जग्मतुः । ततस्त्रयो ययुर्मुक्तिं, सर्वार्थेऽथ चतुष्टयम् ॥७५॥ इत्येकोत्तरया वृद्ध्या, मुक्तिसर्वार्थसिद्धयोः । तावद्वाच्या असङ्ख्येयाः, स्युर्यावत्ते द्वयोरपि ॥ ७६ ॥ इयमेकोत्तरैकादिः, स्याच्चित्रान्तरदण्डिका । द्वितीया द्व्युत्तरैकादिः, साऽप्येवं परिभाव्यते ॥ ७७ ॥ आदावेको ययौ मुक्तिं, सर्वार्थे च ततस्त्रयः । ततो मुक्तौ ययुः पञ्च, सर्वार्थे सप्त ते ययुः ॥ ७८ ॥ एवं द्व्युत्तरया वृद्ध्या, मुक्तिसर्वार्थसिद्धयोः । यावद्भवन्त्यसङ्ख्येयास्तावद्वाच्या द्वयोरपि ॥ ७९ ॥ एकस्ततः परं मुक्तौ, सर्वार्थे च चतुष्टयम् । मुक्तौ जग्मुस्ततः सप्त, सर्वार्थे च ततो दश ॥ ८० ॥ एवं त्र्युत्तरया वृद्ध्याऽसङ्ख्येयाः स्युर्द्वयोरपि । तृतीया त्र्युत्तरैकादिः, स्याच्चित्रान्तरदण्डिका ॥ ८१ ॥ चतुर्थी च विचित्रा स्यात्तस्याः पूर्वमहर्षिभिः । उपायोऽयं वक्ष्यमाणः, परिज्ञानाय दर्शितः ॥ ८२ ॥ एक ऊर्द्ध्वमधश्चैकः, पुनरूर्द्ध्वमधः पुनः । ऊर्द्ध्वाधः परिपाट्यैवमेकोनत्रिंशतं त्रिकान् ॥ ८३ ॥ स्थापयेत्प्रथमे चात्र, प्रक्षिपेन्नैव किंचन । प्रक्षेपाः स्युः क्रमादेते, द्वितीयादित्रिकेषु तु ॥ ८४ ॥ युग्मम् । "दुग २ पण ५ नवगं ९ तेरस १३ सत्तरस १७ दुवीस २२ छच ६ अट्ठेव ८ । बारस १२ चउदस १४ तह अट्ठवीस २८ छवीस २६ पणवीसा २५ ॥ ८५ ॥ एक्कारस ११ तेवीसा २३ सीयाला ४७ सतर ७० सत्तहत्तरिया ७७ । इग १ दुग २ सत्तासीई ८७ इगहत्तरि ७१ मेव बावट्ठी ६२ ॥ ८६ ॥ अउणत्तरि ६९ चउवीसा २४ छायाल ४६ सयं १०० तहेव छवीसा २६ । एए किर पक्खेवा बीअतिगाईसु अणुकमसो ॥८७॥" क्षेपेष्वमीषु क्षिप्तेषु, यद्रूपाः स्युस्त्रिका इमे । क्रमात्तावन्तस्तावन्तः, सिद्धिसर्वार्थसिद्धयोः ॥८८॥ त्रयो

मुक्तौ ततः पञ्च, सर्वार्थेऽष्टौ ततः शिवे । ततो द्वादश सर्वार्थे, ततः षोडश निर्वृतौ ॥ ८९ ॥ इत्येवमेकोनत्रिंशत्तमे स्थाने ययुः शिवम् । एकोनत्रिंशदेषाऽऽद्या, विषमोत्तरदण्डिका ॥ ९० ॥ उक्तं च—"सिवगइसवट्ठेहिं दो दो ठाण विसमुत्तरा नेया । जाव उणतीसठाणे गुणतीसं पुण छवीसाए ॥ ९१ ॥" अत्र जावेत्यादि यावदेकोनत्रिंशत्तमे स्थाने त्रिकरूपे षड्विंशतौ प्रक्षिप्तायामेकोनत्रिंशद्भवन्ति । ततो भवेद् द्वितीयेह, विषमोत्तरदण्डिका । पूर्वाचार्योदिताम्नायात्, श्रूयतां सा विभाव्यते ॥ ९२ ॥ प्रथमाया दण्डिकाया, अङ्कस्थानं यदन्तिमम् । एकोनत्रिंशतं वारान्, तल्लिखित्वा यथाक्रमम् ॥ ९३ ॥ प्राग्वदाद्यं परित्यज्य, द्वितीयादिपदेषु च । प्रागुक्तक्षेपकक्षेपे, सङ्ख्या भवति यावती ॥ ९४ ॥ तावन्तः सर्वार्थसिद्धसिद्ध्योर्ज्ञेया यथाक्रमम् । एवं भवन्त्यसङ्ख्येया, विषमोत्तरदण्डिकाः ॥९५॥ त्रिभिर्विशेषकम् । आद्यायामादिमं स्थानं, निर्वाणगतसूचकम् । द्वितीयायां दण्डिकायां, सर्वार्थगतसूचकम् ॥९६॥ तृतीयायां दण्डिकायां, पुनर्मुक्तिनिरूपकम् । चतुर्थ्यां चादिमं स्थानं, पुनः सर्वार्थसूचकम् ॥ ९७ ॥ द्वितीयायां यथैकोनत्रिंशद्रूपेऽङ्कके क्रमात् । एकोनत्रिंशतं वारान्, लिखिते क्षेपकेषु च ॥ ९८ ॥ पूर्वोक्तेषु योजितेषु, सर्वार्थसिद्धमोक्षयोः । गतानां जायते संख्या, सा चैवं भाव्यते क्रमात् ॥९९॥ युग्मम् । एकोनत्रिंशदत्रादौ, सर्वार्थे प्रययुस्ततः । एकत्रिंशद्ययुः सिद्धिं, द्विकक्षेपकयोगतः ॥३००॥ सर्वार्थे च चतुस्त्रिंशदष्टात्रिंशत्ततः शिवे । पर्यन्ते पञ्चपञ्चाशत्, सर्वार्थेऽत्र ययुर्नृपाः ॥ १ ॥ एकोनत्रिंशतं वारान्, पञ्चपञ्चाशतं न्यसेत् । पूर्वोक्तक्षेपकक्षेपाद्भाव्या तृतीयदण्डिका ॥ २ ॥ क्षेपकास्तु सर्वास्वपि दण्डिकासु

'दुगपणनवगं' इत्यादयः पूर्वोक्ता एव ज्ञेयाः । भाव्या एवमसङ्ख्येया, विषमोत्तरदण्डिकाः । तावद्यावत्समुत्पन्नः, पिता श्रीअजिताईतः ॥ ३ ॥ उक्तं च—"विसमुत्तराए पढमा, एवमसंख विसमुत्तरा नेया । सव्वत्थवि अंतिल्लं अन्नाए आइमं ठाणं ॥ ४ ॥ अउणत्तीसं वारा ठावेउं नत्थि पढमि उक्खेवो । सेसे अडवीसाए सव्वत्थ दुगाइओ खेवो ॥ ५ ॥ सिवगइपढमादीए बीयाए तहय होइ सव्वट्ठे । इय एगंतरियाए सिवगइसव्वट्ठठाणाइं ॥ ६ ॥ एवमसंखिज्जाओ चित्तंतरगंडिया मुणेयव्वा । जाव जिअसत्तुराया अजिअजिणपिआ समुप्पन्नो ॥७॥" एवं—सर्वार्थसिद्धनिर्वाणे, विहायान्यगतिष्विति । ययौ न पट्टभृत् कोऽपि, वंशे श्रीवृषभप्रभोः ॥ ८ ॥ सर्वार्थसिद्धशब्दोऽत्र, रूढोऽनुत्तरपञ्चके । अवकाशो भवत्यत्रैतावतामन्यथा कथम् ? ॥ ९ ॥ उक्तं च—"सर्वार्थशब्देन पञ्चानुत्तरविमानानि लभ्यन्त" इति सिद्धदण्डिकास्तोत्रावचूर्णौ । एवं च-अनुलोमा १ विलोमा २ च, समसङ्ख्या ३ ततः परा । एकद्वित्र्युत्तरा ६ एकादिकाः स्युर्विषमोत्तराः ७ ॥ १० ॥ एताश्च सप्तधा सिद्धदण्डिकाः पूर्वमुक्तवान् । चक्रिणः सगराख्यस्य, सुबुद्धिः सचिवाग्रणीः ॥ ११ ॥ अष्टापदाद्रियात्रार्थं, गतैः सगरनन्दनैः । गतिं वृषभवंश्यानां, पृष्ट ऐतिह्यकोविदः ॥१२॥ एवं च-सनवाशीतिपक्षेषु, पञ्चाशल्लक्षकोटिषु । द्वासप्ततिपूर्वलक्षन्यूनेषु जलधिष्विह ॥ १३ ॥ अतिक्रान्तेषु वृषभप्रभोर्निर्वाणकालतः । अजायत जिनः श्रीमानजितो जितकल्मषः ॥ १४ ॥ अजायन्तारके तुर्ये, निर्वृते त्वजितप्रभौ । परिपूर्णाः पयोधीनां, पञ्चाशल्लक्षकोटयः ॥ १५ ॥



जम्बूद्वीपे पुराऽत्रैव, प्राग्विदेहविभूषणे । वत्साख्ये विजये शीतानद्या याम्यतटस्थिते ॥ १६ ॥ सुसीमायामभूत्पुर्यां, राजा विमलवाहनः । प्रवव्राजारिदमनगुरोः पार्श्वे स शुद्धधीः ॥ १७ ॥ मृत्वोत्पन्नश्च विजयविमानेऽमृतभुक्तया । त्रयस्त्रिंशत्सागरायुर्भुक्त्वाऽभूदजितो जिनः ॥ १८ ॥ पूरयोध्या कोशलेषु, जितशत्रुः प्रभोः पिता । विजया जननी राशिर्वृषो हस्ती च लाञ्छनम् ॥ १९ ॥ राधशुक्लत्रयोदश्यां, माघेऽष्टम्यां सितत्विषि । माघे नवम्यां पौषे चैकादश्यां विमलद्युतौ ॥ २० ॥ चैत्रस्य शुक्लपञ्चम्यां, पञ्च कल्याणकान्यथ । चतुर्षु रोहिणी भं स्यान्मृगशीर्षं च पञ्चमे ॥ २१ ॥ सर्वेषां च्यवनं स्वर्गाज्जायते जन्म चार्हताम् । अर्द्धरात्र एव वेला नैयत्यं न व्रतादिषु ॥ २२ ॥ अहोभिः पञ्चभिर्न्यूना, मासा गर्भस्थितौ नव । ततः कृतजनानन्दजन्माभूदजितप्रभोः ॥ २३ ॥ द्वासप्तत्या पूर्वलक्षैरधिके तेजसाऽधिकः । शेषे तुर्यारकस्यार्द्धे, जातोऽसौ जगदीश्वरः ॥ २४ ॥ अत्र तुर्यारकस्यार्द्धं द्वाचत्वारिंशद्वर्षसहस्रोनपञ्चाशल्लक्षकोटिसागरोपममानमवसेयं । रागाद्यैर्न जितो यस्माद्, गर्भस्थे वा प्रभौ प्रसूः । द्यूते यन्न जिता पत्या, ततोऽभूदजिताभिधः ॥ २५ ॥ अष्टादश पूर्वलक्षाः, कौमार्यमभवत्प्रभोः । त्रिपञ्चाशत्पूर्वलक्षाः, सपूर्वाङ्गा नरेन्द्रता ॥२६॥ धनुःशतानि सार्द्धानि, चत्वारि वपुरुच्छ्रयः । सुप्रभाख्या च शिबिका, व्रतकालेऽभवत् प्रभोः ॥ २७ ॥ ब्रह्मदत्तगृहेऽयोध्यापुरे प्रथमपारणा । छाद्मस्थ्यं द्वादशाब्दानि, ज्ञानं सप्तच्छदे तरौ ॥ २८ ॥ सपूर्वाङ्गाः पूर्वलक्षा, गृहे स्थित्वैकसप्ततिम् । पूर्वाङ्गोनं पूर्वलक्षमेकं संयमितां दधौ ॥ २९ ॥ द्वासप्ततिं पूर्वलक्षाण्यायुः सर्वमपालयत् । अभूवन् पञ्चनवतिः, प्रभोर्गणधरोत्तमाः ॥ ३० ॥

स्वदीक्षितानां साधूनां, लक्षमेकमभूत्प्रभोः । तिस्रो लक्षाश्च साध्वीनां, सहस्रैस्त्रिंशताऽधिकाः ॥ ३१ ॥ त्रिलक्षी द्विसहस्रोना, श्राद्धानां श्राविकाः पुनः । पञ्च लक्षाः पञ्चचत्वारिंशत्सहस्रकाधिकाः ॥ ३२ ॥ विंशतिश्च सहस्राणि, केवलज्ञानिनां प्रभोः । द्वाविंशतिः सहस्राणि, ते निर्दिष्टा मतान्तरे ॥ ३३ ॥ मनोविदां सहस्रा द्वादशाऽऽढ्याः पञ्चभिः शतैः । सार्द्धैर्वाऽवधिभाजां तु, स्युश्चतुर्नवतिः शताः ॥ ३४ ॥ सप्तत्रिंशच्छता विंशाः, स्युश्चतुर्दशपूर्विणाम् । विंशतिर्वैक्रियवतां, सहस्राः सचतुःशताः ॥ ३५ ॥ सहस्रा द्वादश चतुःशताढ्या वादिनां मताः । प्रत्येकबुद्धा विज्ञेयाः, स्वशिष्याणामसङ्ख्यकाः ॥ ३६ ॥ एवं सर्वेषामपि ज्ञेयं । सिंहसेनाभिधः श्रीमान्, गणभृत्प्रथमः प्रभोः । तथा प्रवर्त्तिनी फल्गुः, सगरो भक्तभूपतिः ॥ ३७ ॥ वरदं मुद्गरं चाक्षसूत्रं पाशं च दक्षिणे । दोष्णां चतुष्टये बिभ्रद्, वामे करचतुष्टये ॥ ३८ ॥ बीजपूरं चाभयं चाङ्कुशं शक्तिं समुद्वहन् । महायक्षाभिधो यक्षः, श्यामवर्णश्चतुर्मुखः ॥ ३९ ॥ करीन्द्रवाहनोऽष्टाभिर्भुजैः पात्वष्ट दिग्गजान् । द्वितीयस्याद्वितीयस्य, प्रभोश्चरणसेवकान् ॥ ४० ॥ त्रिभिर्विशेषकम् । दधाना दक्षिणे पाणिद्वये वरदपाशकौ । बीजपूराङ्कुशौ वामे, गौरवर्णा चतुर्भुजा ॥ ४१ ॥ लोहासनाधिरूढा च, नाम्नाऽजितबला सुरी । अजितप्रभुभक्तानां, कम्रा दिशति संपदः ॥ ४२ ॥ युग्मम् । इति श्रीअजितः

जम्बूद्वीपे प्राग्विदेहे, विजये रमणीयके । पुर्यां शुभायां विपुलबलोऽभूद् भूपतिः पुरा ॥ ४३ ॥ ग्रैवेयके सप्तमेऽभूत्, संभ्रान्तगुरुदीक्षितः । सैकोनत्रिंशदब्ध्यायुस्त्रिदशोऽथ च्युतस्ततः ॥ ४४ ॥ कुणालदेशे श्रावस्त्यां, जितारिनृपतेः सुतः । अभूत् सेनाकुक्षिरत्नं, तृतीयः संभवो जिनः ॥ ४५ ॥ फाल्गुनस्याष्टमी शुक्ला, शुक्ला सहचतुर्दशी । मार्गशीर्षस्य राका च, कार्त्तिकासितपञ्चमी ॥ ४६ ॥ चैत्रस्य पञ्चमी शुक्ला, कल्याणतिथयः प्रभोः । चतुर्षु मृगशीर्षं तदार्द्रा भवति पञ्चमे ॥ ४७ ॥ मासा नव दिनैः षड्भिरधिका गर्भस्थितिः । तुरगो लाञ्छनं राशिः, प्रभोर्मिथुनसंज्ञकः ॥ ४८ ॥ ऊनैः षष्ट्या पूर्वलक्षैस्त्रिंशता लक्षकोटिभिः । वार्द्धीनां श्रीमदजितनिर्वाणाच्छम्भवोऽभवत् ॥ ४९ ॥ युक्ताः षष्ट्या पूर्वलक्षैर्विंशतिर्लक्षकोटयः । तुर्यारकस्याशिष्यन्त, वार्द्धीनां प्रभुजन्मनि ॥ ५० ॥ सर्वेषामर्हतां जन्मन्युक्तस्तुर्यारकस्य यः । शेषः स स्वायुषा हीनः, शेषो भवति निर्वृतौ ॥ ५१ ॥ स्वाम्यभूत् संभवो नाम्ना, शुभातिशयसंभवात् । उत्पन्ने वा प्रभौ भूमौ, भूरिशस्यसमुद्भवात् ॥ ५२ ॥ पूर्वलक्षाः पञ्चदश, कुमारत्वेऽवसत् प्रभुः । राज्ये चतुश्चत्वारिंशच्चतुष्पूर्वाङ्गसाधिकाः ॥ ५३ ॥ धनुःशतानि चत्वारि, स्युः प्रभोर्वपुरुच्छ्रये । सिद्धार्था शिबिकाऽब्दानि, छाद्मस्थ्येऽस्य चतुर्दश ॥ ५४ ॥ सुरेन्द्रदत्तः श्रावस्त्यां, दाता प्रथमपारणे । तले सालतरोर्ज्ञानं, प्रादुरासास्य पञ्चमम् ॥ ५५ ॥ चतुष्पूर्वाङ्गोनमेकं, पूर्वलक्षं च साधुता । षष्टिश्च पूर्वलक्षाणि, सर्वमायुः प्रकीर्त्तितम् ॥ ५६ ॥ द्व्याढ्यं शतं गणभृतो, द्वे लक्षे साधवः स्मृताः । लक्षत्रयं च साध्वीनां, सषट्त्रिंशत्सहस्रकम् ॥ ५७ ॥ लक्षद्वयं त्रिनवतिः, सहस्राः श्रावकाः प्रभोः । षट् लक्षाणि सहस्राश्च, षट्त्रिंशत् श्राविकाः स्मृताः ॥ ५८ ॥ सहस्राणि पञ्चदश, केवलज्ञानशालिनाम् । सहस्रा द्वादश शतं, सार्द्धं मानसवेदिनाम् ॥ ५९ ॥ नवावधिज्ञानभाजां, सहस्राः षट्शताधिकाः ।

द्वे सहस्रे शतं सार्द्धं, स्युश्चतुर्दशपूर्विणः ॥ ६० ॥ वादिनां द्वादश सहस्रास्तथा वैक्रियस्पृशाम् । एकोनविंशतिः साष्टशताः स्युः सत्सहस्रकाः ॥ ६१ ॥ चारूरुर्गणभृन्मुख्यः, प्रभोः श्यामा प्रवर्त्तिनी । सदा भक्तो महीपालोऽमितसेनः प्रकीर्त्तितः ॥६२॥ दक्षिणे नकुलं दामाभयं बिभ्रत्करत्रये । मातुलिङ्गं नागमक्षसूत्रं वामे करत्रये ॥६३॥ त्रिनेत्रस्त्रिमुखः श्यामवर्णो बर्हिणवाहनः । षड्भुजस्त्रिमुखो जीयात्रिमुखो नाम यक्षराट् ॥६४॥ युग्मम् । वरदं चाक्षसूत्रं च, दक्षिणे करयामले । वामे फलं चाभयं च, दधानेति चतुर्भुजा ॥ ६५ ॥ दूरितारिर्गौरवर्णा, कल्याणं मेषवाहना । सदा ददाति भव्यानां, संभवप्रभुसेविनाम् ॥ ६६ ॥ युग्मम् । इति श्रीसंभवः ॥

जम्बूद्वीपे प्राग्विदेहे, विजयो मङ्गलावती । तत्र रत्नसञ्चयायां, पुर्यां राजा महाबलः ॥ ६७ ॥ स चादाय परिव्रज्यां, गुरोर्विमलवाहनात् । जयन्तेऽभूत्त्रयस्त्रिंशत्पयोधिस्थितिकः सुरः ॥ ६८ ॥ ततोऽयोध्यामहापुर्यां, देशे कोशलनामनि । सिद्धार्थासंवरक्ष्माभृत्सुतोऽभूदभिनन्दनः ॥ ६९ ॥ शुक्ला चतुर्थी वैशाखे, माघे शुक्ला द्वितीयिका । शुक्लैव द्वादशी माघे, पौषे शुक्ला चतुर्दशी ॥ ७० ॥ आवश्यके तु 'पोसे सुद्धचउद्दसि अभीइ-सभिनंदण जिणस्स'त्ति ज्ञानकल्याणकदिनं दृश्यते, न चेयं शुद्धचतुर्दश्येव भाविनीति वाच्यं, तस्या अभीचियोगासंभवात्पौषशुद्धचतुर्दश्यां हि पुनर्वस्वोरेव प्रायो योगः संभवेदिति[1] । शुक्लाष्टमी च वैशाखे, कल्याणतिथयः प्रभोः । चतुर्थे धिष्ण्यमादित्यः, पञ्चमे पुष्यमेव च ॥ ७१ ॥ अष्टौ मासा दिनान्यष्टाविंशतिर्गर्भस्थितिः । वानरो लाञ्छनं राशिर्मिथुनाख्योऽभवत्प्रभोः ॥ ७२ ॥ पञ्चाशत्पूर्वलक्षोनैर्दशभिर्लक्षकोटिभिः । सागरैर्भगवांस्तुर्योऽभवत्संभवमोक्षतः ॥ ७३ ॥ सपञ्चाशत्पूर्वलक्षा, दशाब्धिलक्षकोटयः । अशिष्यन्त प्रभोर्जन्मकाले तुर्यारकस्य च ॥ ७४ ॥ यतोऽभिनन्द्यते शक्रैः, स्तूयते गर्भगोऽप्यतः । अभिनन्दननामाऽभूद्, यद्वा विश्वप्रमोदकृत् ॥ ७५ ॥ लक्षा द्वादश पूर्वाणां, सार्द्धाः कौमार्यमष्ट च । पूर्वाङ्गाण्यथ षट्त्रिंशल्लक्षाः सार्द्धाश्च राजता ॥ ७६ ॥ पूर्वाङ्गैरष्टभिर्न्यूनं, पूर्वलक्षं च साधुता । पञ्चाशत्पूर्वलक्षाणि, सर्वमायुः प्रकीर्त्तितम् ॥ ७७ ॥ धनुःशतत्रयं सार्द्धं, प्रज्ञप्तो वपुरुच्छ्रयः । अभिनन्दनदेवस्याभिनन्दितशिवश्रियः ॥ ७८ ॥ व्रतेऽर्थसिद्धा शिबिका, प्रथमं पारणं प्रभोः । अयोध्यायामिन्द्रदत्तमन्दिरे समजायत ॥ ७९ ॥ छद्मस्थकालो विज्ञेयो, वर्षाण्यष्टादश प्रभोः । ज्ञानद्रुमः प्रियालः स्यात्, षोडशं गणिनां शतम् ॥ ८० ॥ लक्षास्तिस्रो भगवतः, संयतानां महात्मनाम् । षड् लक्षाः संयतीनां च, सहस्रैस्त्रिंशताऽधिकाः ॥ ८१ ॥ अष्टाशीतिः सहस्राणि, श्राद्धा लक्षद्वयं तथा । श्राविकाणां पञ्च लक्षाः, सहस्राः सप्तविंशतिः ॥ ८२ ॥ चतुर्दश सहस्राणि, केवलज्ञानशालिनाम् । एकादश सहस्राः षट्, शताः सार्द्धा मनोविदः ॥ ८३ ॥ अवधिज्ञानिनामष्टानवतिः स्युः शतानि च । शतानि पञ्चदश च, स्युश्चतुर्दशपूर्विणः ॥ ८४ ॥ सवैक्रियाणामेकोनविंशतिः स्युः सहस्रकाः । एकादश सहस्राणि, वादिनामभवन् विभोः ॥ ८५ ॥ वज्रनाभो गणधरः, प्रथमः प्रथितः प्रभोः । प्रवर्त्तिन्यजिता मित्रवीर्यो भक्तनृपोऽभवत् ॥ ८६ ॥ मातुलिङ्गाक्षसूत्राढ्यापसव्यकरयामलः । नकुलाङ्कुशयुग्वामकरयुग्मश्चतुर्भुजः

१ युगमध्ये पौषमासस्य वृद्धिभावात् द्वितीयपौषशुद्धचतुर्दश्यामभिजित् स्यात् न वेति ज्योतिर्विदः प्रमाणं ।

॥८७॥ ईश्वराख्यो यक्षराजः, श्यामाङ्गो गजवाहनः। अभिनन्दनभक्तानां, करोति कुशलं सदा॥८८॥ युग्मम्। बिभ्रती वरदं पाशमपसव्ये करद्वये। वामे नागाङ्कुशौ श्यामकायकान्तिश्चतुर्भुजा ॥ ८९ ॥ पद्मासना सुरी काली,नाम्ना धाम्नाऽतिभासुरा। वितनोति श्रियां नन्दिमभिनन्दनसेविनाम्॥९०॥युग्मम्। इति श्रीअभिनन्दनः॥

विजये पुष्कलावत्या, धातकीखण्डमण्डने। प्राग्विदेहेषु विदिता, नगरी पुण्डरीकिणी ॥ ९१ ॥ एवं श्रीवासुपूज्यान्ता, जिना अष्टौ विचक्षणैः। उत्पन्नाः प्राग्विदेहेषु, ज्ञेयाः प्राक्तनजन्मनि ॥ ९२ ॥ अभूदतिबलस्तत्र, राजा स्वीकृत्य स व्रतम्। सीमन्धरगुरोः पार्श्वे, जयन्ते निर्जरोऽभवत्॥ ९३ ॥ स्थितिं तत्र त्रयस्त्रिंशत्सागरामनुभूय च। देशेषु कोशलाख्येषु, पुरे साकेतनामनि ॥ ९४ ॥ मेघभूपालतनयो, मङ्गलाकुक्षिसंभवः । पञ्चमः सुमतिर्नाम्ना, जिनोऽभूत्क्रौञ्चलाञ्छनः ॥ ९५ ॥ शुक्ला द्वितीया नभसो, वैशाखस्य सिताष्टमी। तस्यैव नवमी शुक्ला, चैत्रस्यैकादशी सिता ॥ ९६ ॥ चैत्रस्य नवमी शुक्ला, कल्याणकदिनाः क्रमात्। स्याच्चतुर्षु मघाधिष्ण्यं, पञ्चमे च पुनर्वसुः ॥ ९७ ॥ प्रभोर्गर्भस्थितिर्मासा, नव षड्वासराधिकाः। धनुःशतत्रयं देहोच्छ्रयो राशिर्मृगाधिपः ॥ ९८ ॥ अभिनन्दननिर्वाणान्नवतिकोटिलक्षकैः। चत्वारिंशत्पूर्वलक्षन्यूनैः पाथोधिभिः किल ॥ ९९ ॥ सुमतेरभवज्जन्म, शेषे तुर्यारकस्य च । चत्वारिंशत्पूर्वलक्षाधिकेऽब्धिकोटिलक्षके ॥ ४०० ॥ हेतोरेकस्य पुत्रस्य, सपत्न्योरुभयोरभूत्। विवाद एकदा भूयान्, मृते पत्यौ धनाशया ॥ १ ॥ साक्षी न कोऽपि तत्रासीत्, पुत्रोऽपि न विवेद सः। विमातरं मातरं वा, ताभ्यां साम्येन लालितः॥२॥ कुण्ठेषु निर्णये तस्मिन्नरेन्द्रसचिवादिषु। अवादीन्मङ्गला राज्ञी, तदा चोत्पन्नया धिया ॥ ३ ॥ गृहसर्वस्ववत्पुत्रोऽप्येष द्वेधा विभज्यताम्। अनुमेने विमाता तन्माता प्रोचे च साश्रुदृक् ॥ ४ ॥ अस्या एवास्तु पुत्रोऽयं, गृहद्रव्यादिभिः सह। अस्मिंश्चिरायुषि प्राप्तं, सर्वमप्यखिलं मया॥५॥ युग्मम्। अदापयत्ततस्तस्यै, सुतं निश्चित्य मङ्गला। गर्भस्थस्य प्रभोरेवमनुभावाद्भून्मतिः ॥ ६ ॥ स्वयं च शोभनमतिस्तस्मात्सुमतिसंज्ञकः। कौमारं बिभरामास, पूर्वलक्षाण्यसौ दश ॥ ७ ॥ एकोनत्रिंशतं स्वामी, पूर्वलक्षाण्यपालयत्। सातिरेकाणि पूर्वाङ्गैः, राज्यं द्वादशभिर्भुवि ॥ ८ ॥ व्रतं द्वादशपूर्वाङ्गन्यूनं च पूर्वलक्षकम् । चत्वारिंशत्पूर्वलक्षाण्यायुश्छाद्मस्थ्येऽष्टविंशतिः ॥ ९ ॥ ज्ञानद्रुमः प्रियङ्गुः स्याद्व्रतार्थमभयङ्करा। शिबिका पारणं चाद्यं, पद्मोऽदाद्विजये पुरे ॥ १० ॥ प्रभोः शतं गणभृतां, सविंशतिसहस्रकम् । लक्षत्रयं स्युर्मुनयो, गुणमाणिक्यभूभृतः ॥ ११ ॥ पञ्च लक्षाः संयतीनां, सहस्रैस्त्रिंशताऽधिकाः। लक्षद्वयं श्रावकाणां, सैकाशीतिसहस्रकम् ॥ १२ ॥ पञ्च लक्षाः श्राविकाणां, सषोडशसहस्रकाः। त्रयोदश सहस्राणि, प्रभोः केवलशालिनाम् ॥ १३ ॥ शतैश्चतुर्भिरद्ध्यर्द्धैः, सहस्रा दश साश्रिकाः। मनोविदां सहस्राश्चैकादशावधिवेदिनाम् ॥ १४ ॥ शताश्चतुर्विंशतिश्च, स्युश्चतुर्दशपूर्विणाम् । अष्टादश वैक्रियाब्धसहस्राः सचतुःशताः ॥ १५ ॥ सार्द्धैः षड्भिः शतैर्युक्ताः, सहस्रा दश वादिनाम्। चमरो गणभृन्मुख्यः, काश्यपी च प्रवर्त्तिनी ॥ १६ ॥ मतान्तरे च निर्दिष्टाः, सहस्रा दश वादिनाम् । शतैश्चतुर्भिरद्ध्यर्द्धैरधिकाः श्रुतकोविदैः ॥ १७ ॥ सत्यवीर्यो नृपो भक्तो, यक्षः स्यात्तुम्बरुः स च। चतुर्भुजः श्वेतवर्णः, श्रीमान् गरुड-

॥५०२॥

वाहनः ॥१८॥ दधानो वरदं शक्तिमपसव्यकरद्वये । गदां च नागपाशं च, वामहस्तद्वये दधत् ॥१९॥ युग्मम् । देवी भवेन्महाकाली, स्वर्णवर्णाम्बुजासना । चतुर्भुजा सवरदपाशयाम्यकरद्वया ॥ २० ॥ मातुलिङ्गाङ्कुशोपेतवामहस्तद्वयाऽनिशम् । सुमतिप्रभुभक्तानां, पूरयन्ती मनोरथान् ॥ २१ ॥ युग्मम् । इति श्रीसुमतिः ॥

प्रागभूद्धातकीखण्डे, विजये वत्सनामनि । सुसीमायां महापुर्यां, नृपो नाम्नाऽपराजितः ॥ २२ ॥ सोऽभूत्प्रपद्य चारित्रं, सुगुरोः पिहिताश्रवात् । एकत्रिंशत्सागरायुर्देवो ग्रैवेयकेऽन्तिमे ॥२३॥ वत्सदेशे सुकोशायां, नगर्यां धरभूपतेः । अभूत्सुतः सुसीमायां, राज्ञ्यां पद्मप्रभस्ततः ॥ २४ ॥ माघस्य षष्ठी कृष्णाऽथ, द्वादशी च त्रयोदशी । कार्त्तिकस्यासिता चैत्रपौर्णमासी ततः पुनः ॥ २५ ॥ कृष्णा मार्गैकादशी च, कल्याणकदिनाः क्रमात् । धिष्ण्यं च पञ्चस्वप्येषु, चित्रासंज्ञकमीरितम् ॥ २६ ॥ षड्वासराधिका मासा, नव गर्भस्थितिः प्रभोः । कन्याराशिश्च विज्ञेयो, लाञ्छनं च सरोरुहम् ॥ २७ ॥ त्रिंशत्पूर्वलक्षहीनैर्नवत्याऽभूत्सहस्रकैः । पद्मप्रभोऽब्धिकोटीनामर्हत्सुमतिनिर्वृतेः ॥ २८ ॥ सहस्रा अब्धिकोटीनां, दश तुर्यारकस्य च । प्रभुजन्मन्यशिष्यन्त, सत्रिंशत्पूर्वलक्षकाः ॥ २९ ॥ पद्मवन्निर्मलो यस्मान्मातुर्गर्भस्थिते प्रभौ । पद्मप्रभाङ्कशय्यायां, दोहदात्ताद्दशाह्वयः ॥ ३० ॥ धनुःशतद्वयं सार्द्धं, स्वामिनो वपुरुच्छ्रयः । सार्द्धानि पूर्वलक्षाणि, सप्त ज्ञेया कुमारता ॥ ३१ ॥ राज्यैश्वर्यं पूर्वलक्षाण्यद्ध्यर्द्धान्येकविंशतिम् । सातिरेकाणि पूर्वाङ्गैः, पूर्णैः षोडशभिर्दधौ ॥ ३२ ॥ पूर्वलक्षं च पूर्वाङ्गैरूनं षोडशभिर्व्रतम् । त्रिंशत्पूर्वलक्षजीवी, मासांश्च षडकेवली ॥ ३३ ॥ शिबिका निर्वृतिकरा, प्रथमां पारणां ददौ । ब्रह्मस्थले सोमदेवश्छत्रौघो ज्ञानपादपः ॥ ३४ ॥ सप्तोत्तरं गणभृतां, शतं संयमिनां प्रभोः । तिस्रो लक्षाः सहस्राश्च, त्रिंशद्विमलचेतसाम् ॥ ३५ ॥ लक्षाश्चतस्रः साध्वीनां, सहस्राणि च विंशतिः । षट्सप्ततिः सहस्राणि, द्वे लक्षे श्रावकोत्तमाः ॥ ३६ ॥ लक्षाः पञ्च सहस्राश्च, पञ्च स्युः श्राविकाः प्रभोः । सहस्रा द्वादशाभूवन्, केवलज्ञानशालिनाम् ॥ ३७ ॥ सहस्राणि दश प्राहुस्तथा त्रीणि शतानि च । मनोविदामथ दश, सहस्राण्यवधिस्पृशाम् ॥ ३८ ॥ शतास्त्रयोविंशतिश्च, स्युश्चतुर्दशपूर्विणाम् । सहस्राश्च नव प्रोक्ता, वादिनां षट्शताधिकाः ॥ ३९ ॥ सहस्राः षोडश शतं, चाष्टाढ्यं वैक्रियस्पृशः । सूर्याख्यो गणभृन्मुख्यो, रतिसंज्ञा प्रवर्त्तिनी ॥४०॥ नृपश्चाजितसेनाख्यः, प्रभुभक्तिपरायणः । यक्षश्च कुसुमो नीलवर्णो हरिणवाहनः ॥४१॥ अभयं च फलं चायमपसव्ये करद्वये । नकुलं चाक्षसूत्रं च, धत्ते वामे चतुर्भुजः ॥४२॥ युग्मम् । देवी भवेदच्युताख्या, श्यामाख्येयं मतान्तरे । चतुर्भुजा श्यामवर्णा, भास्वरा नरवाहना ॥ ४३ ॥ युक्तं वरदबाणाभ्यां, स्याद्दक्षिणकरद्वयम् । कार्मुकाभययुक्तं च, वाममस्याः करद्वयम् ॥ ४४ ॥ युग्मम् ॥ इति पद्मप्रभः ॥

विजये रमणीयाख्ये, धातकीखण्डमण्डने । प्राग्विदेहेषु च शुभापुर्यां नन्दनरेश्वरः ॥४५॥ संयमं प्रतिपद्याभूत्, स चारिदमनाद्गुरोः । षष्ठे ग्रैवेयके देवोऽष्टाविंशत्यब्धिजीवितः ॥ ४६ ॥ काशीदेशे वाराणस्यां, प्रतिष्ठनृपतेस्ततः । राज्ञ्यां पृथिव्यां तनयः, श्रीसुपार्श्वजिनोऽभवत् ॥ ४७ ॥ भाद्रमासेऽष्टमी कृष्णा, ज्येष्ठे च द्वादशी सिता । ज्येष्ठे त्रयोदशी शुक्ला, कृष्णा षष्ठी च फाल्गुने ॥ ४८ ॥ श्यामा च सप्तमी भाद्रे, कल्याणतिथयः क्रमात् ।

चतुर्थे भं विशाखा स्यादनुराधा च पञ्चमे ॥ ४९ ॥ सैकोनविंशतिदिना, मासा गर्भस्थितिर्नव । तुलाराशिश्च विज्ञेयो, लाञ्छनं स्वस्तिकं प्रभोः ॥ ५० ॥ अभूत्सुपार्श्वो नवभिर्वार्द्धिकोटिसहस्रकैः । विंशतिपूर्वलक्षोनैः, श्रीपद्मप्रभमोक्षतः ॥ ५१ ॥ सहस्रमब्धिकोटीनां, विंशत्या पूर्वलक्षकैः । अशिष्यताधिकं तुर्यारकस्य प्रभुजन्मनि ॥ ५२॥ शुभपार्श्वः सुपार्श्वः स्यान्मातुर्गर्भस्थिते प्रभौ । सुपार्श्वताऽभवद्देहे, ततोऽयं तादृशाह्वयः ॥ ५३ ॥ मातुरेवं फणशय्यास्वप्नात्प्रोक्ताः फणाः प्रभोः । एको वा पञ्च नव वा, संप्रदायविशारदैः ॥ ५४ ॥ तथोक्तं सुपार्श्वचरित्रे पद्मानन्दे—"फणिन्येकफणे पञ्चफणे नवफणेऽपि च । सुप्तं स्वप्ने प्रभौ गर्भस्थिते माता स्वमैक्षत ॥ ५५ ॥" पृथ्व्या स्वप्नेक्षितं तादृक्सर्पं शीर्षोपरि स्थितम् । शक्रो विचक्रे समवसरणेषु सदा विभोः ॥ ५६ ॥ पूर्वाणां पञ्च लक्षाणि, कौमार्येऽथ नरेन्द्रता । पूर्वाङ्गविंशतियुताः, पूर्वलक्षाश्चतुर्दश ॥ ५७ ॥ एकं विंशतिपूर्वाङ्गन्यूनं च पूर्वलक्षकम् । श्रामण्यं तत्र छाद्मस्थ्यं, मासा नव विभोः स्मृताः ॥ ५८ ॥ विंशतिः पूर्वलक्षाणि, सर्वमायुरभूद्विभोः । अभूच्च वपुरौन्नत्यं, विभोश्चापशतद्वयम् ॥ ५९ ॥ मनोहरा स्याच्छिबिका, ददौ प्रथमपारणम् । महेन्द्रः पाडलीखण्डे, शिरीषो ज्ञानपादपः ॥ ६० ॥ गणेन्द्राः पञ्चनवतिर्लक्षाणि त्रीणि साधवः । लक्षाश्चतस्रः साध्वीनां, सहस्रैस्त्रिंशताऽधिकाः ॥ ६१ ॥ सहस्राः सप्तपञ्चाशल्लक्षे द्वे श्रावकोत्तमाः । सहस्राणि त्रिनवतिः, श्राद्धीलक्षचतुष्टयम् ॥ ६२ ॥ एकादश सहस्राणि, केवलज्ञानशालिनाम् । पञ्चाशानि शतान्येकनवतिश्च मनोविदाम् ॥ ६३ ॥ अवधिज्ञानभाजां च, सहस्रा नव कीर्त्तिताः । स्वगोचरानुसारेण, मूर्त्तद्रव्याणि पश्यताम् ॥ ६४ ॥ सहस्रौ त्रिंशदधिकौ, द्वौ चतुर्दशपूर्विणाम् । वैक्रियाणां पञ्चदश, सहस्रास्त्रिंशताऽधिकाः ॥ ६५ ॥ स्युः प्रभोर्वादिनामष्टौ, सहस्राः सचतुःशताः । विदर्भो मुख्यगणभृत्प्रभोः सोमा प्रवर्त्तिनी ॥ ६६ ॥ दानवीर्यो नृपो भक्तो, यक्षो मातङ्गसंज्ञकः । चतुर्भुजो नीलवर्णः, श्रीमान् कुञ्जरवाहनः ॥६७॥ स राजते बिल्वपाशयुग्दक्षिणकरद्वयः । नकुलाङ्कुशसंयुक्तवामहस्तद्वयोऽपि च ॥ ६८ ॥ युग्मम् । जात्यचामीकरज्योतिर्गजासीना चतुर्भुजा । धत्तेऽक्षसूत्रं वरदमपसव्ये करद्वये ॥ ६९ ॥ दधाति शूलमभयं, या च वामकरद्वये । सुपार्श्वसेविनां शान्तिं, देवी शान्ता करोतु सा ॥ ७० ॥ इति सुपार्श्वः ॥

श्रीवर्माख्यो नृपः पूर्वं, सौधर्मेऽभूत्सुरस्ततः । ततश्चाजितसेनाख्यो, विख्यातश्चक्रवर्त्त्यभूत् ॥ ७१ ॥ इन्द्रस्ततोऽच्युतेऽथायं, धातकीखण्डमण्डने । विजये मङ्गलावत्यां, प्राग्विदेहविभूषणे ॥ ७२ ॥ श्रीरत्नसंचयापुर्यां, पद्मनामा नृपोऽभवत् । युगन्धरगुरोः पार्श्वे, स प्रव्रज्यामुपाददे ॥७३॥ वैजयन्तविमानेऽभूत्ततो देवो महर्द्धिकः । त्रयस्त्रिंशत्सागरायुस्ततश्च्युत्वा स्थितिक्षये ॥ ७४ ॥ पूर्वदेशे चन्द्रपुर्यां, महसेनमहीपतेः । चन्द्रप्रभोऽभूद्भगवान्, लक्ष्मणाकुक्षिसम्भवः ॥ ७५ ॥ युग्मम् । अत्र चन्द्रप्रभजन्मपुर्या नाम 'चंदाणण'त्ति आवश्यके । चैत्रस्य पञ्चमी कृष्णा, पौषस्य द्वादशी शितिः । पौषफाल्गुनयोः कृष्णा, त्रयोदशी च सप्तमी ॥ ७६ ॥ भाद्रस्य सप्तमी श्यामा, कल्याणकदिना विभोः । अनुराधा चतुर्थे स्याद्धिष्ण्यं ज्येष्ठा च पञ्चमे ॥ ७७ ॥ प्रभोर्गर्भस्थितिर्मासा, नव सप्तदिनाधिकाः । शशभृल्लाञ्छनं राशिर्वृश्चिकाख्योऽभवत्प्रभोः ॥ ७८ ॥ वार्द्धीनां नवभिः कोटिशतैः

सुपार्श्वनिर्वृतेः । अभूत्प्रभोर्जन्म दशपूर्वलक्षोनकैः किल ॥ ७९ ॥ अधिकं दशभिः पूर्वलक्षैस्तुर्यारके तदा । शतमम्भोधिकोटीनां, शिष्यते सेशजन्मनि ॥ ८० ॥ प्रभौ गर्भगते मातुश्चन्द्रपानमनोरथात् । यद्वेन्दुसौम्यलेश्यत्वात्, स्वामी चन्द्रप्रभाभिधः ॥८१॥ पूर्वलक्षद्वयं सार्द्धं, सार्द्धाः षट् पूर्वलक्षकाः । चतुर्विंशतिपूर्वाङ्गाधिकाः कौमार्यराज्ययोः ॥ ८२ ॥ चतुर्विंशतिपूर्वाङ्गन्यूनं च पूर्वलक्षकम् । श्रामण्यं तत्र मासानां, त्रयं छद्मस्थतास्थितिः ॥ ८३ ॥ पूर्वाणां दश लक्षाणि, सर्वमायुरभूत्प्रभोः । धनुषां च शतं सार्द्धं, भगवद्वपुरुच्छ्रयः ॥ ८४ ॥ मनोरमाऽऽख्या शिबिका, प्रथमां पारणां ददौ । पद्मखण्डे सोमदत्तो, नागाख्यो ज्ञानभूरुहः ॥८५॥ गणेशाश्च त्रिनवतिरध्यर्द्धं लक्षयोर्द्वयम् । संयतानां संयतीनां, लक्षास्तिस्रस्तथोपरि ॥ ८६ ॥ स्युरशीतिः सहस्राणि, श्राद्धा मुनिमिता मताः । पञ्चलक्षी नवसहस्रोनाश्चोपासिका मताः ॥ ८७ ॥ सर्वज्ञानां सहस्राणि, दशाष्टौ च मनोविदाम् । अष्टावधिस्पृशां वैक्रियाढ्यानां च चतुर्दश ॥ ८८ ॥ सहस्रे द्वे भगवतः, स्याच्चतुर्दशपूर्विणाम् । अभूवन् वादिनां सप्त, सहस्राः षट्शताधिकाः ॥ ८९ ॥ दिन्नो गणधरो मुख्यः, सुमनाश्च प्रवर्त्तिनी । भक्तश्च मघवा भूमान्, यक्षः स्याद्विजयाभिधः ॥ ९० ॥ स च त्रिनेत्रो हरितवर्णाङ्गो हंसवाहनः । चक्रयुग्दक्षिणकरो, वामपाणौ समुद्गरः ॥ ९१ ॥ प्रभोर्ज्वालाऽभिधा देवी, भृकुटिश्च मतान्तरे । चतुर्भुजा पीतवर्णा, वरालकाख्यवाहना ॥ ९२ ॥ वरालको जीवविशेषः ॥ सा खड्गमुद्गरौ धत्ते, हस्तयोरपसव्ययोः । फलकं परशुं चैव, सव्ययोः करपद्मयोः ॥ ९३ ॥ इति चन्द्रप्रभः ॥



विजये पुष्कलावत्यां, प्राग्विदेहेषु पुष्करे । नगर्यां पुण्डरीकिण्यां, महापद्मोऽभवन्नृपः ॥ ९४ ॥ स सर्वजगदानन्दगुरुपार्श्वे धृतव्रतः । एकोनविंशत्यब्ध्यायुरानते त्रिदशोऽभवत् ॥९५॥ शून्ये देशेऽथ काकन्द्यां, पुर्यां सुग्रीवभूपतेः । रामाराज्ञीकुक्षिभवः, पुत्रोऽभूत् सुविधिर्जिनः ॥ ९६ ॥ फाल्गुने नवमी श्यामा, कृष्णा मार्गस्य पञ्चमी । श्यामा षष्ठी च तस्यैव, तृतीया कार्त्तिकेऽसिता ॥ ९७ ॥ भाद्रस्य नवमी शुक्ला, कल्याणतिथयः प्रभोः । पञ्चस्वप्येषु नक्षत्रं, मूलं राशिर्धनुर्भवेत् ॥ ९८ ॥ अष्टौ मासाः स्थितिर्गर्भे, षड्विंशतिदिनाधिकाः । मकरो लाञ्छनं देहोच्छ्रयश्च धनुषां शतम् ॥ ९९ ॥ नवत्याऽम्भोधिकोटीनां, पूर्वलक्षद्वयोनया । श्रीचन्द्रप्रभनिर्वाणाज्जातः श्रीसुविधिर्जिनः ॥ ५०० ॥ दश कोट्यः सागराणां, पूर्वलक्षद्वयाधिकाः । तुर्यारके स शिष्यन्ते, श्रीमत्सुविधिजन्मनि ॥ १ ॥ शुभक्रियापरत्वेन, विख्यातः सुविधिः प्रभुः । माता वा गर्भकालेऽभूत्, सुविधिर्यत्ततस्तथा ॥ २ ॥ पञ्चाशदेव पूर्वाणां, कुमारत्वे सहस्रकाः । अष्टाविंशतिपूर्वाङ्गाधिकास्ते राज्यसंस्थितौ ॥ ३ ॥ अष्टाविंशतिपूर्वाङ्गन्यूनं च पूर्वलक्षकम् । व्रते छद्मस्थता तत्र, प्रभोर्मासचतुष्टयम् ॥ ४ ॥ पूर्वलक्षद्वयं सर्वमायुरासीज्जगत्पतेः । सूरप्रभाख्या शिबिका, मल्लिः स्याद् ज्ञानभूरुहः ॥ ५ ॥ पुष्याभिख्यः श्वेतपुरे, पारणां प्रथमां ददौ । अष्टाशीतिर्गणभृतो, द्वे लक्षे मुनिसत्तमाः ॥ ६ ॥ लक्षमेकं च साध्वीनां, सहस्राणि च विंशतिः । एकोनत्रिंशत्सहस्रा, द्वे लक्षे श्रावकोत्तमाः ॥ ७ ॥ श्राविकाणां चतुर्लक्षी, सहस्राण्येकसप्ततिः । केवलज्ञानभाजां स्युः, शतानि पञ्चसप्ततिः ॥ ८ ॥ शताः पञ्च सप्ततिश्च, मनःपर्यायशालिनाम् । अवधिज्ञानिनामष्टौ,

सहस्राः सचतुःशताः ॥ ९ ॥ शताः पञ्चदशाभूवन्, सचतुर्दशपूर्विणाम् । लसद्वैक्रियलब्धीनां, सहस्राणि त्रयोदश ॥ १० ॥ वादिनां षट् सहस्राणि, गणी ज्येष्ठो वराहकः । प्रवर्त्तिनी वारुणीति, युद्धवीर्यो नृपोऽर्चकः ॥ ११ ॥ अजिताख्यो यक्षराजः, श्वेतश्रीः कूर्मवाहनः । मातुलिङ्गाक्षसूत्राढ्यवामेतरकरद्वयः ॥ १२ ॥ तथा च कुन्तनकुलशालिवामकरद्वयः । एवं चतुर्भुजः प्रीतिं, दत्ते सुविधिसेविनाम् ॥ १३ ॥ युग्मम् । देवी सुतारा गौराङ्गी, धत्ते वृषभवाहना । अक्षसूत्रं च वरदमपसव्यकरद्वये ॥ १४ ॥ दधती कलशं चैवाङ्कुशं वामकरद्वये । सुविधिप्रभुभक्तानां, पिपर्त्ति द्रुतमीप्सितम् ॥ १५ ॥ इति सुविधिः ॥

पुष्करस्थप्राग्विदेहे, विजये वत्सनामनि । अभूत्पुर्यां सुसीमायां, पद्मनामा महीपतिः ॥ १६ ॥ सार्थवाहगुरोः पार्श्वे, स च स्वीकृत्य संयमम् । देवोऽभूत्प्राणतस्वर्गे, विंशत्यर्णवजीवितः ॥ १७ ॥ ततो मलयदेशेऽभूत्पुरे भद्दिलनामनि । श्रीशीतलो दृढरथोर्वीशनन्दात्मजो जिनः ॥ १८ ॥ वैशाखषष्ठ्यां श्यामायां, च्युतः स्वर्गाज्जिनेश्वरः । माघस्य कृष्णद्वादश्यां, जातो दीक्षामवाप च ॥ १९ ॥ पौषश्यामचतुर्दश्यां, लेभे केवलमुज्ज्वलम् । राधकृष्णद्वितीयायां, प्रभुः प्रापापुनर्भवम् ॥ २० ॥ पूर्वाषाढा च नक्षत्रं, कल्याणेष्वेषु पञ्चसु । नव मासा दिनैः षड्भिर्युक्ता गर्भस्थितिः प्रभोः ॥ २१ ॥ न्यूनाभिः पूर्वलक्षेण, नवभिर्वार्द्धिकोटिभिः । सुविधिप्रभुनिर्वाणाज्जातः श्रीशीतलो जिनः ॥ २२ ॥ एका कोटी सागराणां, पूर्वलक्षाधिका किल । अशिष्यतारके तुर्ये, शीतलप्रभुजन्मनि ॥ २३ ॥ शेषस्तुर्यारकस्योक्तो, नवानां जन्मनीह यः । स द्विचत्वारिंशदब्दसहस्रन्यून ऊह्यताम् ॥ २४ ॥ इतः परेषामष्टानां, यश्च जन्मनि वक्ष्यते । शेषस्तुर्यस्यारकस्य, सातिरेकः स ऊह्यताम् ॥ २५ ॥ सचतुरशीतिसहस्रैः, शरदां लक्षैश्च पञ्चषष्टिमितैः । अरनाथावधि विज्ञेयमन्तरमेवं धियां निधिभिः ॥ २६ ॥ ( आर्या ) युग्मम् ॥ प्रशशाम पितुर्दाहो, गर्भस्थेशानुभावतः । नन्दाराज्ञीकरस्पर्शात्, शीतलः प्रथितस्ततः ॥ २७ ॥ जगत्तापहरत्वेन, भगवान् शीतलोऽथवा । अभूद्राशिर्धनुर्नामा, श्रीवत्सो लाञ्छनं प्रभोः ॥ २८ ॥ कुमारत्वं सहस्राणि, पूर्वाणां पञ्चविंशतिः । पञ्चाशच्च सहस्राणि, पूर्वाणां राज्यवैभवम् ॥ २९ ॥ व्रते पूर्वसहस्राणि, पूर्णानि पञ्चविंशतिः । सर्वमायुः पूर्वलक्षं, छाद्मस्थ्यं च त्रिमासिकम् ॥ ३० ॥ शुक्रप्रभाख्या शिबिका, प्रथमां पारणां ददौ । पुनर्वसू रिष्टपुरे, प्लक्षो ज्ञानद्रुमः प्रभोः ॥ ३१ ॥ एकाशीतिर्गणधरा, लक्षमेकं च साधवः । आर्याः षट्काधिकं लक्षमेकं साध्व्योऽभवन् विभोः ॥ ३२ ॥ लक्षद्वयं श्रावकाणां, नवाशीतिसहस्रयुक् । सहस्राण्यष्टपञ्चाशच्चतुर्लक्षी तथाऽऽस्तिकाः ॥ ३३ ॥ सर्वज्ञानां सहस्राणि, सप्त चेतोविदां पुनः । सहस्राः सप्त कथिता, अधिकाः पञ्चभिः शतैः ॥३४॥ द्विसप्ततिः शतान्यासन्नवधिज्ञानशालिनाम् । चतुर्दश पूर्वभृतां, चतुर्दश शतानि च ॥३५॥ लसद्वैक्रियलब्धीनां, द्वादशैव सहस्रकाः । सहस्राः पञ्चसंयुक्ता, वादिनामष्टभिः शतैः ॥ ३६ ॥ धनूंषि नवतिर्देहो, नन्दो मुख्यो गणाधिपः । प्रवर्त्तिनी च सुयशा, भक्तः सीमन्धरो नृपः ॥ ३७ ॥ ब्रह्मा यक्षश्चतुर्वक्त्रः, श्वेतवर्णस्त्रिलोचनः । पद्मासनो दिशोऽष्टापि, पालयन्नष्टभिर्भुजैः ॥ ३८ ॥ मुद्गरं मातुलिङ्गं च, पाशकं चाभयं तथा । अपसव्ये दधात्येव, स्पष्टं पाणिचतुष्टये ॥ ३९ ॥ नकुलं च गदामेवमङ्कुशं चाक्षसूत्र-

कम् । दधाति धीरधुर्योऽयं, वामे पाणिचतुष्टये ॥ ४० ॥ त्रिभिर्विशेषकम् । देव्यशोका नीलवर्णा, पद्मासीना चतुर्भुजा । दधाना वरदं पाशमपसव्यकरद्वये ॥ ४१ ॥ वामपाणिद्वये चैषा, दधती फलमङ्कुशम् । शीतलप्रभुभक्तानां, वितनोति समीहितम् ॥ ४२ ॥ युग्मम् ॥ इति श्रीशीतलः ॥

बभूव पुष्करद्वीपे, विजये रमणीयके । प्राग्विदेहे शुभापुर्यां, नलिनीगुल्मभूपतिः ॥ ४३ ॥ वज्रदत्तगुरोः पार्श्वे, स स्वीकृत्य व्रतं सुधीः । देवोऽभूदच्युतस्वर्गे, द्वाविंशत्यर्णवस्थितिः ॥ ४४ ॥ शून्यदेशे सिंहपुर्यां, प्रेयस्यां विष्णुभूपतेः । विष्णुनाम्न्यां सुतो जज्ञे, श्रेयांस इति विश्रुतः ॥ ४५ ॥ ज्येष्ठस्य श्यामला षष्ठी, द्वादशी च त्रयोदशी । फाल्गुनस्यासिते माघमासस्य च कुहूः किल ॥ ४६ ॥ तृतीया श्रावणे कृष्णा, कल्याणकदिनाः प्रभोः । चतुर्षु श्रवणं धिष्ण्यं, धनिष्ठा पञ्चमे पुनः ॥ ४७ ॥ गर्भे स्थितिः प्रभोर्मासा, नव षड्वासराधिकाः । खड्गी जीवः प्रभोर्लक्ष्म, राशिर्मकरसंज्ञकः ॥ ४८ ॥ चतुरशीत्याऽब्दलक्षैः, पूर्वोक्ताब्दैः शतेन च । अब्धीनासूनया वार्द्धिकोट्या शीतलनिर्वृतेः ॥ ४९ ॥ श्रेयांसस्याभवज्जन्म, तदा तुर्यारकस्य च । शिष्यते स्मार्णवशतं, स्वायुःपूर्वोक्तवर्षयुक् ॥ ५० ॥ शय्यामाक्रामत्सुराधिष्ठितां गर्भस्थिते प्रभौ । निर्विघ्नमम्बेति श्रेयस्करत्वात्तादृशाभिधः ॥ ५१ ॥ कुमारत्वेऽब्दलक्षाणि, निर्दिष्टान्येकविंशतिः । द्विचत्वारिंशदब्दानां, लक्षाणि राज्यवैभवे ॥ ५२ ॥ लक्षाणि व्रतपर्याये, चाशब्दानामेकविंशतिः । एवं लक्षाणि चतुरशीतिः सर्वायुराहितम् ॥ ५३ ॥ छाद्मस्थ्यं मासयोर्युग्मं, शिबिका विमलप्रभा । सिद्धार्थाख्यपुरे नन्दः, पारणां प्रथमां ददौ ॥ ५४ ॥ तिन्दुको ज्ञानवृक्षः

स्यादशीतिधनुरुच्छ्रितम् । वपुः षट्सप्ततिश्चोक्ताः, प्रभोर्गणभृतः श्रुते ॥ ५५ ॥ प्रभोश्चतुरशीतिश्च, सहस्राणि मुमुक्षवः । लक्षमेकं च साध्वीनां, सहस्रत्रितयाधिकम् ॥ ५६ ॥ श्राद्धा लक्षद्वयमथैकोनाशीतिसहस्रकाः । चतुर्लक्ष्यष्टचत्वारिंशत्सहस्राण्युपासिकाः ॥ ५७ ॥ शतानि पञ्चषष्टिश्चाभूवन्निःशेषवेदिनाम् । षट् सहस्राणि शमिनां, मनःपर्यायवेदिनाम् ॥ ५८ ॥ स्फुरद्वैक्रियलब्धीनामेकादश सहस्रकाः । सहस्रा वादिनां पञ्चावधिज्ञानभृतां च षट् ॥ ५९ ॥ सचतुर्दशपूर्वाणां, शतान्यासंस्त्रयोदश । कौस्तुभो मुख्यगणभृद्धारिणी च प्रवर्त्तिनी ॥ ६० ॥ त्रिपृष्ठवासुदेवोऽभूत्प्रभुभक्तनृपः प्रभोः । यक्षश्च मनुजाभिख्य, ईश्वराख्यो मतान्तरे ॥ ६१ ॥ स त्रिनेत्रः श्वेतवर्णो, वृषारूढश्चतुर्भुजः । मातुलिङ्गगदायुक्तसदक्षिणकरद्वयः ॥ ६२ ॥ नकुलं चाक्षसूत्रं च, दधद्वामकरद्वये । श्रियं श्रेयांसभक्तानां, वितनोति समीहिताम् ॥ ६३ ॥ युग्मम् । श्रीवत्साख्या प्रभोर्देवी, मानवी वा मतान्तरे । सिंहासीना गौरवर्णा, सा निर्दिष्टा चतुर्भुजा ॥ ६४ ॥ धत्ते दक्षिणयोः पाण्योर्वरदं मुद्गरं च सा । धत्ते च वामयोः पाण्योः, क्रमात्कलशमङ्कुशम् ॥ ६५ ॥ युग्मम् । इति श्रेयांसः ॥

विजये मङ्गलावत्यां, पुष्करप्राग्विदेहगे । सद्रत्नसंचयापुर्यां, राजा पद्मोत्तरोऽभवत् ॥ ६६ ॥ गुरोः श्रीवज्रनाभस्य, पार्श्वे स प्राप्य संयमम् । सुरोऽभूत्प्राणतस्वर्गे, विंशत्यर्णवजीवितः ॥ ६७ ॥ चम्पापुर्यामङ्गदेशे, वसुपूज्यमहीपतेः । राज्ञ्या जयायास्तनुजो, वासुपूज्यस्ततोऽभवत् ॥ ६८ ॥ उज्ज्वला नवमी ज्येष्ठे, भूतेष्टा फाल्गुनेऽसिता । फाल्गुनेऽमावसी माघे, द्वितीया च समुज्ज्वला ॥ ६९ ॥ शुक्लाऽऽषाढस्य भूतेष्टा, कल्याणकदिनाः

प्रभोः । आहिर्बुध्नं पञ्चमे भं, चतुर्षु शततारिका ॥ ७० ॥ दिनानि विंशतिर्मासाश्चाष्टौ गर्भस्थितिः प्रभोः । राशिः कुम्भो लाञ्छनं च, महिषः किल कीर्त्तितः ॥ ७१ ॥ पूज्यते वसुभिः शक्रैर्वासुपूज्यः स्मृतस्ततः । वसुपूज्यनृपापत्यमिति वा तादृशाह्वयः ॥ ७२ ॥ द्विसप्तत्यब्दलक्षोनैश्चतुष्पञ्चाशताऽब्धिभिः । जन्माभूद्वासुपूज्यस्य, श्रीमच्छ्रेयांसनिर्वृतेः ॥ ७३ ॥ षट्चत्वारिंशदब्धीनां, शेषस्तुर्यारके तदा । वेदनाग ( ८४ ) सहस्राब्धबाणर्त्तु ( ६५ ) लक्षवर्षयुक् ॥ ७४ ॥ अष्टादशाब्दलक्षाणि, कुमारत्वेऽवसद्विभुः । ततः प्रपेदे चारित्रं, पृथिवीशिबिकां श्रितः ॥ ७५ ॥ चतुष्पञ्चाशदब्दानां, लक्षाणि व्रतमादधौ । द्विसप्तत्यब्दलक्षायुर्धनुस्सप्ततिमुच्छ्रितः ॥ ७६ ॥ महापुरे सुनन्दाख्यः, प्रथमां पारणां ददौ । छाद्मस्थ्यमेको मासोऽभूद्, ज्ञानद्रुः पाटलाभिधः ॥ ७७ ॥ जगत्प्रभोर्गणभृतः, षट्षष्टिः साधवः पुनः । द्विसप्ततिः सहस्राणि, साध्वीनां लक्षमेव च ॥ ७८ ॥ सहस्राः पञ्चदश च, द्वे लक्षे श्रावकोत्तमाः । चतुर्लक्षी श्राविकाणां, षट्त्रिंशच्च सहस्रकाः ॥ ७९ ॥ सर्वज्ञानां सहस्राः षट्, मनोज्ञानवतामपि । अवधिज्ञानिनां पञ्च, सहस्राः सचतुःशताः ॥ ८० ॥ चतुर्दशपूर्वभृतां, सहस्रं द्विशतोत्तरम् । स्फुरद्वैक्रियलब्धीनां, सहस्राणि दशाभवन् ॥ ८१ ॥ वादिनां सप्तचत्वारिंशच्छतानि मतान्तरे । द्विचत्वारिंशच्छतानि, तत्त्वं जानाति केवली ॥ ८२ ॥ सुभूमो गणभृन्मुख्यो, धरणी च प्रवर्त्तिनी । द्विपृष्ठवासुदेवश्च, नृपश्चरणसेवकः ॥ ८३ ॥ यक्षः कुमारः श्वेताङ्गः, श्वेतयानश्चतुर्भुजः । मातुलिङ्गबाणशालिसद्दक्षिणकरद्वयः ॥ ८४ ॥ कोदण्डनकुलाभ्यां च, शोभितो वामहस्तयोः । पिपर्त्ति श्रीवासुपूज्य-



जिनसेविसमीहितम् ॥ ८५ ॥ युग्मम् । प्रवराख्या प्रभोर्देवी, चंडाख्या च मतान्तरे । चतुर्भुजा श्यामवर्णा, सत्तुरङ्गमवाहना ॥ ८६ ॥ दधाति वरदं शक्तिं, भुजयोरपसव्ययोः । दधाति सव्ययोः पुष्पं, गदां चैषा महाशया ॥ ८७ ॥ युग्मम् । इति श्रीवासुपूज्यः ॥

धातकीखण्डभरते, महापुर्यां नृपोऽभवत् । पद्मसेनाह्वयः सर्वगुरुर्षेः सोऽग्रहीद्व्रतम् ॥ ८८ ॥ ततः सुरः सहस्रारेऽष्टादशार्णवजीवितः । भूत्वा पाञ्चालदेशेऽभूत्, पुरे काम्पील्यनामनि ॥ ८९ ॥ श्यामाराज्ञीकुक्षिरत्नं, कृतवर्ममहीपतेः । पुत्रः पवित्रचारित्रविमलो विमलाह्वयः ॥ ९० ॥ वैशाखे द्वादशी शुक्ला, माघे शुक्ला तृतीयिका । माघे चतुर्थी शुक्ला च, पौषे षष्ठी तथोज्ज्वला ॥ ९१ ॥ आषाढे सप्तमी कृष्णा, कल्याणकदिनाः प्रभोः । आहिर्बुध्नं चतुर्षु स्याद्धिष्ण्यं पौष्णं च पञ्चमे ॥ ९२ ॥ मासा अष्टौ दिनान्येकविंशतिर्गरभस्थितिः । राशिर्मीनाह्वयो लक्ष्म, शूकरः कीर्त्तितः प्रभोः ॥ ९३ ॥ गर्भस्थेऽस्मिन्मातुरास्तां, मत्यङ्गे विमले इति । अन्तर्बहिश्च विमलतया वा विश्ववर्यया ॥९४॥ विमलो नामधेयेनादेयनामा स कीर्त्तितः । षष्टिचापोन्नतः षष्टिलक्षाब्दायुर्जगद्विभुः ॥ ९५ ॥ युग्मम् ॥ श्रीवासुपूज्यनिर्वाणात्त्रिंशता सागरोपमैः । षष्टिलक्षशरद्न्यूनैर्जन्माभूद्विमलप्रभोः ॥ ९६ ॥ तुर्यारकेऽब्धयः शेषाः, षोडश प्रभुजन्मनि । पूर्वोदितैर्वर्षलक्षैस्तत्सहस्रैश्च साधिकाः ॥९७॥ तुर्यारकस्य शेषो यो, जिनजन्मनि वक्ष्यते । इतः प्रभृति स स्वस्वायुषाऽभ्यधिक ऊह्यताम् ॥ ९८ ॥ लक्षाः पञ्चदशाब्दानां, कुमारत्वेऽवसद्विभुः । लक्षाणि त्रिंशतं राज्ये, लक्षाः पञ्चदश व्रते ॥ ९९ ॥ तत्र द्विमासी

छाद्मस्थ्यं, शिबिका च व्रतक्षणे। देवदिन्ना जयो धान्यकटे प्रथमदायकः ॥ ६०० ॥ जम्बूतरुतले स्वामी, पञ्चमज्ञानमाप सः । निर्दिष्टाः सप्तपञ्चाशद्भिर्भोर्गणधरोत्तमाः ॥ १ ॥ अयमावश्यकाभिप्रायः, समवायाङ्गे तु षट्पञ्चाशद्गणधरा उक्ता इति ज्ञेयं। अष्टषष्टिः सहस्राणि, साधूनां शीलशालिनाम्। लक्षमेकं च साध्वीनां, शतैः साधिकमष्टभिः ॥ २ ॥ लक्षद्वयं च श्राद्धानां, सहस्रैरष्टभिर्युतम्। चतुर्लक्षी श्राविकाणां, सहस्रा जिनसंमिताः ॥ ३ ॥ शतानि पञ्चपञ्चाशत्, केवलज्ञानशालिनाम्। मनःपर्यायचिद्भाजां, तावन्त्येव शतानि च ॥ ४ ॥ अष्टचत्वारिंशदेव, शतान्यवधिशालिनाम्। एकादश शतान्यस्य, सचतुर्दशपूर्विणाम् ॥ ५ ॥ लसद्वैक्रियलब्धीनां, सहस्राणि नवाभवन्। वादिनां च सहस्राणि, त्रीणि षट् च शताः किल ॥ ६ ॥ मन्दरो मुख्यगणभृद्धराख्या च प्रवर्त्तिनी। स्वयम्भूर्वासुदेवश्चाभवद्भक्तो नृपः प्रभोः ॥ ७ ॥ यक्षश्च षण्मुखः श्वेतवर्णाङ्गः शिखिवाहनः। स द्वादशभुजस्तीर्थाधिष्ठाता विमलप्रभोः ॥ ८ ॥ फलं चक्रं च बाणं च, खड्गं पाशाक्षसूत्रके। स भुजेष्वपसव्येषु, षट्सु धत्ते महाबलः ॥ ९ ॥ नकुलं चक्रमिष्वासं, फलकं चाङ्कुशाभये। भुजेषु षट्सु वामेषु, धत्ते मत्तेभविक्रमः ॥ १० ॥ त्रिभिर्विशेषकम्। देव्यभूद्विजयाभिख्या, विदिता च मतान्तरे। वर्णतो हरितालाभा, पद्मासीना चतुर्भुजा ॥११॥ तनोति शं बाणपाशयुग्दक्षिणकरद्वया। धार्मिकाणां धनुर्नागशालिवामकरद्वया ॥ १२ ॥ युग्मम्। इति श्रीविमलः ॥ ॥५०८॥

१ तीर्थंकरवत् गणभृतामायुषो नियमाभावात् अल्पायुष्टादिकारणान्नैको विवक्षितः स्यात्।

नृप ऐरावतक्षेत्रे, धातकीखण्डवर्तिनि। रिष्टपुर्यामभूत् पद्मरथश्चित्ररथान्मुनेः ॥१३॥ संप्राप्य संयमं विंशत्यब्ध्यायुः प्राणतेऽभवत्। सुरः स पुर्ययोध्यायां, देशे कोशलनामनि ॥ १४ ॥ सिंहसेनस्य नृपतेः, सुयशाकुक्षिसंभवः। तनयोऽनन्तजिन्नाम्ना, जिनेन्द्रोऽभूच्चतुर्दशः ॥ १५ ॥ त्रिभिर्विशेषकम्। श्रावणे सप्तमी कृष्णा, वैशाखस्य त्रयोदशी। भूतेष्टा चासिते पक्षे, वैशाखस्य चतुर्दशी ॥ १६ ॥ चैत्रस्य पञ्चमी शुभ्रा, कल्याणकदिनाः प्रभोः। पञ्चस्वप्येषु नक्षत्रं, रेवती परिकीर्त्तितम् ॥१७॥ नव गर्भस्थितिर्मासाः, प्रभोः षड्दिवसाधिकाः। अङ्कः श्येनो मीनराशिर्धनुः पञ्चाशदुच्छ्रयः ॥१८॥ ज्ञानादीनामनन्तत्वादनन्त इति कीर्त्यते। अनन्तमणिदाम्नां वा, मात्रा स्वप्ने निरीक्षणात् ॥ १९ ॥ विमलस्वामिनिर्वाणान्नवभिः सागरोपमैः। त्रिंशल्लक्षशरद्न्यूनैरनन्तोऽजायत प्रभुः ॥ २० ॥ शिष्यन्ते स्म तदा तुर्यारके सप्त पयोधयः। लक्षैः सहस्रैर्वर्षाणां, पूर्वोक्तैरधिकाः किल ॥ २१ ॥ सप्त सार्द्धा वर्षलक्षाः, कुमारत्वेऽवसद्विभुः। भूपालत्वं पञ्चदश, वर्षलक्षाण्यपालयत् ॥२२॥ सार्धानि सप्त वर्षाणां, लक्षाणि व्रतमादधौ। लक्षाणि त्रिंशदब्दानां, सर्वमायुरभूत्प्रभोः ॥ २३ ॥ व्रते सागरदत्ताख्या, शिबिका विजयाभिधः। वर्द्धमानग्रामवासी, प्रभोः प्रथमदायकः ॥ २४ ॥ मासत्रयं च छाद्मस्थ्येऽश्वत्थश्च ज्ञानभूरुहः। प्रभोर्गणभृतः श्रेष्ठाः, पञ्चाशत्परिकीर्त्तिताः ॥ २५ ॥ इत्यावश्यकाभिप्रायः, समवायाङ्गे तु चतुष्पञ्चाशद्गणधरा उक्ता इति ज्ञेयं। षट्षष्टिश्च सहस्राणि, साधूनां सत्त्वशालिनाम्। द्वाषष्टिः संयतीनां च, सहस्राण्यभवन् विभोः ॥ २६ ॥ लक्षद्वयं च श्राद्धानां, षट्सहस्राधिकं प्रभोः। श्राविकाणां चतुर्लक्षी, सहस्राश्च

चतुर्दश ॥ २७ ॥ तथा पञ्च सहस्राणि, केवलज्ञानशालिनाम् । तावन्त्येव सहस्राणि, मनोज्ञानवतामपि ॥ २८॥ चत्वारोऽवधिभाजां च, सहस्रास्त्रिशताधिकाः । सहस्रमेकं पूर्णं च, सचतुर्दशपूर्विणाम् ॥ २९ ॥ लसद्वैक्रियलब्धीनां, सहस्राण्यष्ट जज्ञिरे । द्वाभ्यां शताभ्यामधिका, त्रिसहस्री च वादिनाम् ॥ ३० ॥ यशोनामाद्यगणभृत्, पद्माख्या च प्रवर्त्तिनी । पुरुषोत्तमो विष्णुश्च, सदा चरणसेवकः ॥३१॥ दधत्पद्मखड्गपाशानपसव्ये करत्रये । नकुलं फलकं चाक्षसूत्रं वामकरत्रये ॥३२॥ पातालयक्षस्त्रिमुखो, रक्तो मकरवाहनः । षड्भुजः कुरुते प्रीतिमनन्तप्रभुसेविनाम् ॥३३॥ युग्मम् ॥ आदधाना खड्गपाशौ, वामेतरकरद्वये । वामे करद्वये शश्वद्दधाना फलकाङ्कुशौ ॥३४॥ पद्मासना गौरवर्णा, देव्यङ्कुशा चतुर्भुजा ।अनन्तप्रभुभक्तानां, दत्तेऽनन्तां सुखश्रियम् ॥३५॥ युग्मम् । इत्यनन्तजित् ॥

भारते भद्दिलपुरे, धातकीखण्डमण्डने । नृपो दृढरथोऽसौ च, गुरोर्विमलवाहनात् ॥ ३६ ॥ आदाय संयमं जज्ञे, विजयेऽनुत्तरे सुरः । द्वात्रिंशदर्णवायुष्कस्ततः शून्याख्यनीर्वृति ॥ ३७ ॥ पुरे रत्नपुरे सानोर्नृपस्य तनयोऽभवत् । सुव्रतायाः कुक्षिरत्नं, धर्मनाथो जिनेश्वरः ॥३८॥ त्रिभिर्विशेषकम् । वैशाखे सप्तमी शुक्ला, तृतीया माघजोज्ज्वला । माघे त्रयोदशी शुक्ला, तथा पौषस्य पूर्णिमा ॥ ३९ ॥ ज्येष्ठस्य पञ्चमी शुक्ला, कल्याणकदिनाः प्रभोः । पुष्यं च पञ्चस्वप्येषु, भं राशिः कर्क एव च ॥ ४० ॥ अनन्तस्वामिनिर्वाणाच्चतुर्भिः सागरोपमैः । जातो दशाब्दलक्षोनैः, श्रीधर्मो जगदीश्वरः ॥४१॥ शिष्यन्तेऽस्मात्तदा तुर्यारकस्याम्भोधयस्त्रयः । पञ्चषष्टिश्चाब्दलक्षा, वेदनाग (८४) सहस्रकाः ॥ ४२ ॥ स्वयं धर्मस्वभावत्वाद्गर्भस्थे वाऽभवद्विभौ । माताऽतिधार्मिकी तस्माद्धर्मनाथ

इति स्मृतः ॥४३॥ देहोच्छ्रयः पञ्चचत्वारिंशच्चापमितः स्मृतः । वज्रं च लाञ्छनं वर्षलक्षाणि दश जीवितम् ॥४४॥ वर्षलक्षद्वयं सार्द्धं, कुमारत्वे व्रतेऽपि च । राज्ये पुनः प्रभुः पञ्चवर्षलक्षाण्यपूरयत् ॥ ४५ ॥ शिबिका नागदत्ताख्या, छाद्मस्थ्यं मासयोर्द्वयम् । धर्मसिंहः सौमनसग्रामेऽदादाद्यपारणाम् ॥ ४६ ॥ ज्ञानवृक्षश्च निर्दिष्टो, दधिपर्ण इति प्रभोः । द्विचत्वारिंशदादिष्टाः, श्रीजिनस्य गणाधिपाः ॥ ४७॥ चतुःषष्टिः सहस्राणि, संयतानां जिनेशितुः । तथा सहस्रा द्वाषष्टिः, साध्वीनां सचतुःशताः ॥४८॥ चतुस्सहस्राभ्यधिके, द्वे लक्षे श्राद्धपुङ्गवाः । चतुर्लक्षी श्राविकाणां, सहस्राश्च त्रयोदश ॥ ४९ ॥ शतानि पञ्चचत्वारिंशत्केवलजुषां विभोः । तावन्त्येव शतान्येवं, मनःपर्यायिणामपि ॥ ५० ॥ त्रयोऽवधिज्ञानभाजां, सहस्राः षट्शताधिकाः । वर्यवैक्रियलब्धीनां, सहस्राः सप्त कीर्त्तिताः ॥ ५१ ॥ शतानि नव चोक्तानि, सचतुर्दशपूर्विणाम् । वादिनां च सहस्रे द्वे, शतैरष्टभिरन्विते ॥ ५२ ॥ अरिष्टो मुख्यगणभृत्, शिवार्या च प्रवर्त्तिनी । विष्णुः पुरुषसिंहश्च, नृपश्चरणसेवकः ॥ ५३ ॥ बीजपूराभयगदास्त्रिषु दक्षिणपाणिषु । गदापद्माक्षनकुलान्, दधद्वामेषु च त्रिषु ॥ ५४ ॥ त्रिमुखः किन्नरो यक्षो, रक्ताङ्गः कूर्मवाहनः । षड्भुजोऽभीष्टमाधत्ते, श्रीधर्मप्रभुसेविनाम् ॥५५॥ युग्मम् । देवी च पन्नगाभिख्या, सा कन्दर्पा मतान्तरे । चतुर्भुजा गौरवर्णा, राजते मत्स्यवाहना ॥ ५६ ॥ उत्पलाङ्कुशसंयुक्तसद्दक्षिणकरद्वया । पद्माभयाश्रिता वामपाण्योर्दत्ते सुखं सताम् ॥ ५७ ॥ युग्मम् । इति श्रीधर्मनाथः ॥

श्रीषेणभूपतिः पूर्वं, तद्राज्ञी चाभिनन्दिता । उभौ युगलिनौ जातौ, ततो जातौ सुधाभुजौ ॥ ५८ ॥ तत-

॥५०९॥

श्रामिततेजःश्रीविजयाख्यौ महर्धिकौ । ततश्च प्राणतस्वर्गे, सुपर्वाणौ बभूवतुः ॥ ५९ ॥ बलदेववासुदेवौ, ततो जातौ महाभुजौ । बलोऽभूदच्युताधीशो, हरिस्त्वाद्यां भुवं ययौ ॥ ६० ॥ उद्धृतस्तु ततोऽवाप्य, खेचराधीशतां हरिः । परिव्रज्याच्युतस्वामिसामानिकसुरोऽभवत् ॥ ६१ ॥ ततश्च्युत्वाऽऽदिमो वज्रायुधाह्वश्चक्रवर्त्यभूत् । तदङ्गजोऽपरस्त्वासीत्, सहस्रायुधसंज्ञकः ॥ ६२ ॥ ग्रैवेयकतृतीये तौ, जग्मतुर्जनकाङ्गजौ । मतान्तरे च नवमे, गतौ ग्रैवेयकेऽथ तौ ॥६३॥ विजये पुष्कलावत्यां, जम्बूद्वीपे ततश्च्युतौ । नगर्यां पुण्डरीकिण्यामभूतां सोदरावुभौ ॥ ६४ ॥ मेघरथदृढरथौ, श्रीमेघरथमेकदा । प्रशशंस मुदेशानसुरेन्द्रः सुरपर्षदि ॥ ६५ ॥ अहो मेघरथस्यान्तः, स्फुरन् जीवदयारसः । न शक्यते शोषयितुं, कृतयत्नैः सुरैरपि ॥ ६६ ॥ अश्रद्दधानस्तत्कश्चिद्देवः शूलभृतो वचः । परीक्षितुं नृपं दक्षंमन्यो भूलोकमाययौ ॥ ६७ ॥ पूर्ववैराद्युध्यमानौ, श्येनपारापतावथ । अधिष्ठाय सदम्भेनाजगाम नृपसन्निधौ ॥६८॥ ऊचे पारापतस्तत्र, रक्ष रक्ष कृपानिधे ! । श्येनो हिनस्ति मां पीनो, दीनं निःशरणं हहा ॥ ६९ ॥ ऊचे वीक्ष्य भयार्त्तं तं, समुत्पन्नकृपो नृपः । यमादपि प्रकुपितान्मा भैषीर्नाथ ते भयम् ॥ ७० ॥ कम्पमाने खगे तस्मिन्नृपोत्सङ्गमुपाश्रिते । श्येनोऽपि सहसाऽऽगत्य, क्षुधाक्षामोऽब्रवीदिति ॥ ७१ ॥ रक्ष रक्ष क्षुधा मार्यमाणं मां दक्षपुङ्गव ! । देहि देहि चिरात्प्राप्तं, भक्ष्यं पारापतं मम ॥ ७२ ॥ एकस्योपेक्षसे प्राणांस्तानन्यस्य च रक्षसि । तुल्येऽपि कोऽयं जीवत्वे, पङ्क्तिभेदः किलावयोः ? ॥ ७३ ॥ श्येनमूचे नृपः पक्षिन् !, दीनोऽयं मुच्यतां खगः । गृहाण नानापक्वान्नं, दयाधर्मोऽस्तु ते महान् ॥७४॥

श्येनः प्रोचे च भूपाल !, धर्माधर्मविचारणा । भवादृशां स्यात्तृप्तानां, क्षुधार्त्तानां तु सा कुतः ? ॥ ७५ ॥ विना सद्यस्कमांसं च, नाहारोऽस्मादृशां परः । तद् द्रुतं दीयतामेष, हत्वा वा गृह्यतां मम ॥ ७६ ॥ नृपोऽथाचिन्तयत्पारापतोऽयं सर्वथा मया । रक्षणीयोऽयमप्यङ्गी, तर्पणीयो बुभुक्षितः ॥ ७७ ॥ श्येनं तत्तर्पयाम्येनं, निजैर्मांसैर्यथोभयोः । दया स्यान्ननु देहेऽस्मिन्, कः स्नेहः क्षणभङ्गुरे ? ॥ ७८ ॥ ततस्तुलायामारोप्य, मायापारापतं नृपः । उत्कृत्य स्वोरुमांसानि, तोलयामास सात्त्विकः ॥ ७९ ॥ यथा यथा स्वमांसानि, तुलायां भूधवो न्यधात् । तथा तथा प्रववृधे, कपोतो वीवधेन सः ॥ ८० ॥ दीनानने पुरजने, क्रन्दत्यन्तःपुरेऽखिले । तुलामारुह्य सोत्साहं, रसेनः श्येनमित्यवक् ॥ ८१ ॥ गृहाण श्येन ! देहं मे, कृतार्थं जीवरक्षणात् । तृप्तिस्तवाभयं चास्य, भूयान्मम च निर्जरा ॥ ८२ ॥ तं देहेऽपि गतस्नेहं, निस्संदेहं जिनागमे । नृपं वीक्ष्य दयावीरं, तुष्टस्तुष्टाव निर्जरः ॥ ८३ ॥ साधु साधु महाधीर !, वीरकोटीर साम्प्रतम् । ईशानेशोऽनिशं स्तौति, सत्त्वं ते देवपर्षदि ॥ ८४ ॥ शंसितोऽसि दयावीर !, यादृशः शूलपाणिना । ततः शतगुणोत्साहो, वीक्षितोऽसि परीक्षणे ॥ ८५ ॥ खेदितोऽसि वृथा राजन्नपराधं क्षमस्व मे । इति ब्रुवाणः पुष्पाणां, वृष्टिं हृष्टस्ततान सः ॥ ८६ ॥ प्रादुष्कृत्य स्वरूपं स्वं, सज्जीकृत्य च भूपतिम् । चमत्कारचलन्मौलिः, सुरः स्वर्गं जगाम सः ॥ ८७ ॥ करुणावज्रायुधनाटके उत्तराध्ययनलघुवृत्तौ च वज्रायुधचक्रवर्त्तिभवेऽयं देवपरीक्षणादिर्व्यतिकर उक्तोऽस्तीति ध्येयं, तथा करुणावज्रायुधे परीक्षकौ द्वौ देवावुक्तौ इति ज्ञेयं। गुरोर्घनरथात्प्राप्य, दीक्षां मेघरथो नृपः । मृत्वा सर्वा-

॥५१०॥

सिद्धेऽभूत्परमस्थितिकः सुरः ॥ ८८ ॥ जीवो दृढरथस्यापि, भविष्यन् गणभृद्विभोः । मृत्वा तत्रैव देवोऽभूच्च्युत्वा मेघरथोऽथ च ॥ ८९ ॥ कुरुदेशशिरोरत्ने, पुरे श्रीहस्तिनापुरे । विश्वसेनस्य भूभर्त्तुः, पुत्रोऽभूदचिराङ्गजः ॥ ९० ॥ प्रभौ गर्भे समुत्पन्ने, शशामोपद्रवोऽखिले । देशे जनानां मार्यादिस्ततः शान्तिरिति स्मृतः ॥ ९१ ॥ अथवा--शान्तिः स्यात्क्रोधविजयः, शान्तिर्वोपद्रवक्षयः । शान्तिः शान्तरसो वा तत्प्रधानत्वात्तथाभिधः ॥ ९२ ॥ भाद्रस्य सप्तमी श्यामा, ज्येष्ठे कृष्णा त्रयोदशी । ज्येष्ठे चतुर्दशी कृष्णा, पौषे च नवमी सिता ॥ ९३ ॥ ज्येष्ठे त्रयोदशी कृष्णा, कल्याणकदिनाः प्रभोः । धिष्ण्यं च पञ्चस्वप्येषु, कीर्त्तितं यमदैवतम् ॥ ९४ ॥ नव मासाः स्थितिर्गर्भे, स्वामिनः षड्दिनाधिकाः । चत्वारिंशत्कार्मुकानि, प्रज्ञप्तो वपुरुच्छ्रयः ॥९५॥ पादत्रयेण पल्यस्य, वर्षलक्षेण चोनितैः । त्रिभिः पयोधिभिः शान्तिर्धर्मनिर्वाणतोऽभवत् ॥ ९६ ॥ पल्यपादत्रयी शेषा, तदा तुर्यारकेऽभवत् । पूर्वोक्तैः शरदां लक्षैः, सहस्रैश्च समन्विता ॥ ९७ ॥ राशिर्मेषो मृगो लक्ष्म, वर्षलक्षं च जीवितम् । तुल्यैश्चतुर्भिर्भागैस्तत्पूरयामास विश्वजित् ॥ ९८ ॥ पञ्चविंशतिमब्दानां, सहस्राणि कुमारताम् । तावत्कालं च बुभुजे, मण्डलाधीशतामपि ॥ ९९ ॥ पञ्चविंशतिमेवाब्दसहस्रान् सार्वभौमताम् । कालं तावन्तमेवायं, व्रतपर्यायमाश्रयत् ॥ ७०० ॥ सर्वार्था शिबिका वर्षमेकं छद्मस्थता मता । सुमित्रो मन्दिरपुरे, पारणां प्रथमां ददौ ॥ १ ॥ अत्र वर्षमेकं छद्मस्थता मता इत्यावश्यकापेक्षया सप्ततिशतस्थानकापेक्षया च पाठः, ननु ज्येष्ठासितचतुर्दश्याः पौषसितनवमीं यावद्गणने साधिकाः सप्त मासाः स्युः, यदि

चाधिकमासः संभवेत्तदापि साधिका अष्ट मासा एव स्युः, तत्कथं वर्षं संभवति छाद्मस्थ्यकालमानमिति चेत्, सत्यं, परमर्द्धाधिक्ये रूपं देयमिति गणितज्ञवचनानुवृत्त्येदमप्युक्तं भावीति संभाव्यते, ग्रन्थान्तरे तु तदनपेक्षणादधिकमासापेक्षणाच्च साधिकमासाष्टकसंभवे नव मासा अप्युक्ता दृश्यन्ते इति ध्येयं । नन्दीनामा ज्ञानवृक्षः, प्रज्ञप्तोऽस्य जिनेशितुः । षट्त्रिंशदेव गणभृद्वरा भगवतः स्मृताः ॥ २ ॥ इदं गणधरमानमावश्यकानुसारेण, समवायाङ्गे तु श्रीशान्तेर्नवतिर्गणधरा इति दृश्यते । द्वाषष्टिश्च सहस्राणि, साधवः शुद्धसंयमाः । संयतीनां चैकषष्टिः, सहस्राः षट्शताधिकाः ॥ ३ ॥ श्रावकाणां सनवतिसहस्रं लक्षयोर्द्वयम् । श्राविकाणां त्रिलक्ष्याढ्या, त्रिनवत्या सहस्रकैः ॥ ४ ॥ सर्वज्ञानां सहस्राश्च, चत्वारस्त्रिशताधिकाः । शतानि चत्वारिंशच्च, मनःपर्यायशालिनाम् ॥ ५ ॥ सहस्राणि त्रीण्यभूवन्नवधिज्ञानधारिणाम् । अष्टौ शतानि प्रोक्तानि, सचतुर्दशपूर्विणाम् ॥ ६ ॥ बिभ्रतां वैक्रियां लब्धिं, सहस्राः षड् महात्मनाम् । वादिनां च सहस्रे द्वे, निर्दिष्टे सचतुःशते ॥ ७ ॥ जीवो दृढरथस्याथ, च्युत्वा सर्वार्थसिद्धितः । प्रथमः प्रथमानश्रीः, श्रीशान्तेर्योऽङ्गजोऽभवत् ॥ ८ ॥ गणाधिपाग्रणीः सोऽभूच्चक्रायुध इति प्रभोः । प्रवर्त्तिनी च सुमतिर्भक्तः कोणाचलो नृपः ॥९॥ अर्थतो युग्मम् । वराहवाहनः क्रोडवदनः श्यामलद्युतिः । बीजपूरकसत्पद्मयुग्दक्षिणकरद्वयः ॥१०॥ नकुलं चाक्षसूत्रं च, दधद्वामकरद्वये । यक्षो विजयते दक्षो, गरुडाख्यश्चतुर्भुजः ॥ ११ ॥ युग्मम् । पुस्तकोत्पलसंयुक्त-

सदक्षिणकरद्वया । कमण्डलुं च कमलं, दधत्यन्यकरद्वये ॥ १२ ॥ पद्मासना चतुष्पाणिर्निर्वाणी कनकच्छविः । श्रीशान्तिनाथभक्तानां, कुरुते मङ्गलावलीम् ॥ १३ ॥ युग्मम् । इति श्रीशान्तिः ॥

आवर्त्तनाम्नि विजये, जम्बूद्वीपस्य मण्डने । प्राग्विदेहे खड्गिपुर्यां, नृपः सिंहाह्वयोऽभवत् ॥ १४ ॥ स संवरगुरोः पार्श्वे, प्रतिपद्य शुभव्रतम् । त्रयस्त्रिंशत्सागरायुः, सर्वार्थे त्रिदशोऽभवत् ॥ १५ ॥ कुरुदेशे गजपुरे, ततः सूरमहीपतेः । सुतोऽभूत् कुन्थुनामाऽर्हन्, श्रीदेवीकुक्षिमौक्तिकम् ॥ १६ ॥ श्रावणे नवमी कृष्णा, राधे कृष्णा चतुर्दशी । चैत्रे च पञ्चमी कृष्णा, तृतीया च मधोः सिता ॥ १७ ॥ वैशाखकृष्णप्रतिपत्, कल्याणकदिनाः प्रभोः । नक्षत्रं कृत्तिकासंज्ञं, पञ्चस्वप्येषु कीर्त्तितम् ॥ १८ ॥ नव गर्भस्थितिर्मासाः, प्रभोः पञ्चदिनाधिकाः । पञ्चत्रिंशत्कार्मुकानि, ख्यातो देहोच्छ्रयः प्रभोः ॥ १९ ॥ मेषो लक्ष्म वृषो राशिः, स्तूपो यद्रत्नजो भुवि । मात्रा निरीक्षितः स्वप्ने, ततः कुन्थुरिति श्रुतः ॥ २० ॥ श्रीशान्तिनाथनिर्वाणात्पल्यार्द्धेनाभवत्प्रभुः । श्रीकुन्थुः पञ्चनवतिसहस्राब्दोनताजुषा ॥ २१ ॥ पादः पल्योपमस्यैकः, शेषस्तुर्यारके तदा । पञ्चषष्ट्या वर्षलक्षैः, सहस्रैश्चोदितैर्युतः ॥ २२ ॥ त्रयोविंशतिमब्दानां, सहस्रान् पर्यपूरयत् । चतुर्ष्वंशेषु प्रत्येकं, सार्द्धसप्तशताधिकान् ॥२३॥ कौमार्ये मण्डलेशत्वे, चक्रित्वे संयमे च सः । सर्वायुः पञ्चनवतिः, सहस्राः शरदां प्रभोः ॥२४॥ अर्थतो युग्मम् । विजया शिबिकाऽब्दानि, च्छाद्मस्थ्ये षोडश प्रभोः । प्रथमां पारणां व्याघ्रसिंहश्चक्रपुरे ददौ ॥२५॥ ज्ञानवृक्षश्च तिलकाभिधानः कीर्त्तितः प्रभोः । पञ्चत्रिंशद्गणभृतः, श्रीकुन्थुस्वामिनः स्मृताः ॥२६॥ षष्टिः सहस्राः

साधूनां, साध्वीनां षट्शताधिकाः । श्रावकाणां लक्षमेकोनाशीतिश्च सहस्रकाः ॥ २७ ॥ लक्षास्तिस्रः श्राविकाणां, सैकाशीतिसहस्रकाः । द्वात्रिंशद् द्वाविंशतिर्वा, केवलज्ञानिनां शताः ॥ २८ ॥ त्रयस्त्रिंशच्छताश्चत्वारिंशा मानसवेदिनाम् । अवधिज्ञानभाजां च, शतानि पञ्चविंशतिः ॥ २९ ॥ सचतुर्दशपूर्वाणां, शताः षट् ससतिस्पृशः । शतान्यथैकपञ्चाशत्, सद्वैक्रियजुषामिह ॥ ३० ॥ वादिनां च सहस्रे द्वे, शम्बो गणधरोऽग्रिमः । प्रवर्त्तिनी दामिनी च, कुबेरो भक्तभूपतिः ॥ ३१ ॥ गन्धर्वयक्षः श्यामाङ्गो, हंसगामी चतुर्भुजः । अपसव्ये करद्वन्द्वे, दधद्वरदपाशकौ ॥३२॥ मातुलिङ्गाङ्कुशौ वामे, दधानः पाणियामले । श्रीकुन्थुनाथभक्तानां, समर्थयति वाञ्छितम् ॥३३॥ युग्मम् । बीजपूरकशूलाढ्यसदक्षिणकरद्वया । मुसण्ढिपद्मसंशोभिवामहस्ताम्बुजद्वया ॥ ३४ ॥ चतुर्भुजाऽच्युता देवी, बलाख्या च मतान्तरे । मयूरवाहना स्वर्णद्युतिः शं कुरुते सताम् ॥ ३५ ॥ युग्मम् । इति श्रीकुन्थुनाथः ॥

जम्बूद्वीपे प्राग्विदेहे, वत्साख्ये विजये नृपः । सुसीमायां धनपतिः, प्रव्रज्य संवराद्गुरोः ॥ ३६ ॥ त्रयस्त्रिंशत्सागरायुः, सर्वार्थे निर्जरोऽभवत् । ततः कुरुषु देशेषु, नगरे हस्तिनापुरे ॥ ३७ ॥ सुदर्शनस्य नृपतेर्देवीकुक्षिसमुद्भवः । अरनामाऽभवन्नन्द्यावर्त्ताङ्कोऽष्टादशो जिनः ॥३८॥ त्रिभिर्विशेषकम् । द्वितीया फाल्गुने शुक्ला, मार्गे च दशमी सिता । उज्ज्वलैकादशी मार्गे, द्वादशी कार्त्तिके सिता ॥३९॥ मार्गे च दशमी शुक्ला, कल्याणकदिना इमे । एषु पञ्चसु नक्षत्रं, रेवती परिकीर्त्तितम् ॥४०॥ अष्टघस्राधिका मासा, नव गर्भस्थितिर्विभोः । राशिर्मीनस्तथा त्रिंशच्चापानि वपुरुच्छ्रयः ॥४१॥ वंशादिवृद्धिकरणादरो नाम्ना जिनोऽभवत् । महारत्नारकस्वप्नानुसाराद्वा तथाऽ-

भिधः ॥४२॥ पल्योपमस्य पादेन, न्यूनेन शरदामिह । एककोटिसहस्रेण, वेदनाग (८४) सहस्रकैः ॥४३॥ श्रीकुन्थुस्वामिनिर्वाणाज्जन्माभवदरप्रभोः । तदा तुर्यारेऽब्दकोटिसहस्रमवशिष्यते ॥४४॥ पूर्वोक्तैः शरदां लक्षैः, सहस्रैश्च समन्वितम् । युक्तं चायुष्ककालेन, श्रीमदष्टादशार्हतः ॥४५॥ त्रिभिर्विशेषकम् । अपूरयत्कुमारत्वे, सहस्राण्येकविंशतिम् । वर्षाणां मण्डलेशत्वे, चक्रित्वे संयमेऽपि च ॥ ४६ ॥ शरत्सहस्रांश्चतुरशीतिमेवमपालयत् । आयुः सर्वं तत्र वर्षत्रयं छद्मस्थता विभोः ॥ ४७ ॥ शिबिका वैजयन्त्याद्यभिक्षां राजपुरे ददौ । नाम्नाऽपराजितश्चूताख्यस्तु ज्ञानतरुः प्रभोः ॥४८॥ त्रयस्त्रिंशद्गणभृतः, पञ्चाशत्संयतात्मनाम् । सहस्राः संयतीनां च, निर्दिष्टाः षष्टिरागमे ॥ ४९ ॥ एकं लक्षं सहस्राश्चतुरशीतिरुपासकाः । लक्षत्रयं श्राविकाणां, द्वासप्ततिसहस्रयुक् ॥५०॥ शतान्यष्टाविंशतिश्च, केवलज्ञानशालिनाम् । द्वे सहस्रे शताः पञ्चैकपञ्चाशा मनोविदाम् ॥ ५१ ॥ अवधिज्ञानिनां द्वे च, सहस्रे षट्शताधिके । शतानि षट् दशाढ्यानि, सचतुर्दशपूर्विणाम् ॥५२॥ शतास्त्रिसप्ततिश्चोक्ता, बिभ्रतां वैक्रियश्रियम् । वादिनां षोडश शताः, शिष्टैर्व्यक्तीकृताः श्रुते ॥ ५३ ॥ कुम्भो गणभृतां मुख्यो, रक्षिताख्या प्रवर्त्तिनी । सुभूमनामा नृपतिः, सदा चरणसेवकः ॥५४॥ बीजपुरं शरं खड्गं, मुद्गरं पाशकं तथा । अभयं च क्रमाद्बिभ्रत्, षट्सु दक्षिणपाणिषु ॥५५॥ दधानो नकुलं चापं, फलकं शूलमङ्कुशम् । अक्षसूत्रं च वामेषु, करेषु षट्स्वपि क्रमात् ॥५६॥ त्रिलोचनः श्यामवर्णः, षडास्यः शङ्खवाहनः । सद्वादशभुजो यक्षेन्द्राख्यो यक्षो ह्यरप्रभोः ॥५७॥ त्रिभिर्विशेषकम् । मातुलिङ्गोत्पलोपेतसद्दक्षिणकरद्वया । पद्माक्षसूत्रसंयुक्तावामवामकरद्वया ॥५८॥

देवी श्रीधारणी नीलवर्णा पद्मवरासना । चतुर्भुजा क्षिणोत्यारमरस्वाम्यंह्रिसेविनाम् ॥५९॥ युग्मम् । इति श्रीअरः ॥

विजये सलिलावत्यां, जम्बूद्वीपस्य मण्डने । प्रत्यग्विदेहे पूर्वीतशोका तत्राभवन्नृपः ॥ ६० ॥ नाम्ना वैश्रमणः पञ्चमित्रयुक्तः स संयमम् । वरधर्मर्षितः प्राप्य, मनस्येवमचिन्तयत् ॥ ६१ ॥ प्रव्रज्याऽवसरे स्नेहातिरेकादनुयायिभिः । तुल्यं कार्यं तपोऽस्माभिरिति संधाविधायिभिः ॥ ६२ ॥ मित्रैरमीभिः सदृशं, करिष्यामि तपो यदि । तुल्य एव भविष्यामि, तदाऽमीभिर्भवान्तरे ॥६३॥ युग्मं । ततः केनाप्युपायेन, करोम्येभ्यस्तपोऽधिकम् । ज्येष्ठो येन भवाम्यत्रामुत्राप्येभ्यस्तपोबलात् ॥ ६४ ॥ ततो वृथा व्यथाशंसी, मायया वर्धयंस्तपः । मुधा बबन्ध स्त्रीवेदं, धिग्मायां स्वोपघातिनीम् ॥६५॥ अर्जितार्हत्पदः स्थानैर्विंशत्याऽऽराधितैस्ततः । मित्रैस्सह जयन्तेऽभूत्, परमस्थितिकः सुरः ॥ ६६ ॥ मिथिलायां विदेहेषु, ततः कुम्भमहीपतेः । कुक्षौ राज्याः प्रभावत्याः, पुत्रीत्वेनोदपद्यत ॥ ६७ ॥ जेत्री मोहादिमल्लानां, ततो मल्लिरिति श्रुता । मातुर्वा माल्यशय्यायां, दोहदात्तादृशाह्वया ॥ ६८ ॥ चतुर्थी फाल्गुने शुक्ला, मार्गे चैकादशी सिता । मार्गे एकादशी शुभ्रा, मार्गे चैकादशी सिता ॥ ६९ ॥ फाल्गुने द्वादशी शुभ्रा, कल्याणकदिना अमी । चतुर्ष्वेष्वश्विनी धिष्ण्यं, भरणी पञ्चमे पुनः ॥ ७० ॥ प्रभोर्गर्भस्थितिर्मासा, नव सप्तदिनाधिकाः । राशिर्मेषो भगवत्याः, कुम्भो लक्ष्म प्रकीर्त्तितम् ॥ ७१ ॥ पञ्चपञ्चाशता वर्षसहस्रैरूनके गते । सहस्रे वर्षकोटीनां, निर्वाणात् श्रीअरप्रभोः ॥७२॥ जन्म मल्लिजिनस्याभूच्छेषं तुर्यारके तदा । जिनायुः शरदां लक्षाः ( ६५ ), सहस्राश्च ( ४ ) पुरोदिताः ॥ ७३ ॥ शरच्छतं कुमारत्वे, व्रते

नवशताधिकाः। चतुष्पञ्चाशत्सहस्रा, अहोरात्रमकेवली ॥ ७४ ॥ सहस्राः पञ्चपञ्चाशच्छरदां सर्वजीवितम्। समुच्छ्रयः शरीरस्य, धनुषां पञ्चविंशतिः ॥ ७५ ॥ अयोध्यानगरीनेता, चम्पावाराणसीनृपौ। श्रावस्तीहस्तिनागेशौ, काम्पील्यपुरनायकः ॥ ७६ ॥ एतान् प्राग्जन्मसुहृदो, विज्ञातस्वामिनीगुणान्। चित्रकृत्प्रमुखोदन्तैर्भूरिस्नेहवशीकृतान् ॥ ७७ ॥ समेतान् युगपत्पाणिग्रहाय प्रतिबोध्य च। स्वर्णस्वप्रतिमोपायात्सार्द्धं प्राव्राजयत्प्रभुः ॥ ७८ ॥ त्रिभिर्विशेषकं। जयन्ती शिबिका विश्वसेनोऽदादाद्यपारणाम्। मिथिलानगरीवासी, अशोको ज्ञानपादपः ॥ ७९ ॥ अष्टाविंशतिरादिष्टाः, स्वामिन्या गणधारिणः। चत्वारिंशत्सहस्राणि, साधूनां विशदात्मनाम् ॥ ८० ॥ साध्वीनां पञ्चपञ्चाशत्सहस्राः कीर्त्तिताः श्रुते। श्रावकाणां लक्षमेकं, सत्र्यशीतिसहस्रकम् ॥ ८१ ॥ त्रिलक्षी श्राविकाणां च, ससप्ततिसहस्रकाः। एवं चतुर्विधः सङ्घः, सद्गुणाढ्यः प्रभोरभूत् ॥ ८२ ॥ सर्वज्ञानां सहस्रे द्वे, श्रीमल्लेर्द्विशताधिके। मनोविदां सहस्रं च, सार्द्धसप्तशताधिकम् ॥ ८३ ॥ द्वाविंशतिं शतान्याहुरवधिज्ञानशालिनाम्। शतानि साष्टषष्टीनि, षट् चतुर्दशपूर्विणाम् ॥ ८४ ॥ अत्रेयं मनोज्ञानिनामवधिज्ञानिनां संख्या सप्ततिशतस्थानकाभिप्रायेण, षष्ठाङ्गे तु अष्ट शतानि मनोविदां, द्वे सहस्रे चावधिज्ञानिनां, तुर्याङ्गे तु सप्तपञ्चाशच्छतानि मनोविदामेकोनषष्टिश्च शतान्यवधिज्ञानिनामुक्तानीति ज्ञेयं। सवैक्रियाणामेकोनत्रिंशतं प्रोचिरे शतान्। शतैश्चतुर्भिः सहितं, सहस्रं वादिनां मतम् ॥ ८५ ॥ भिषग्ज्येष्ठो गणी बन्धुमती चाभूत्प्रवर्त्तिनी। अजिताख्यो महीपालोऽभवद्भक्तो जगत्प्रभोः ॥ ८६ ॥ वरदं परशुं शूलमभयं दक्षिणे दधत्।

॥ ५१४ ॥

दोष्णां चतुष्टये वामे, पुनः पाणिचतुष्टये ॥ ८७ ॥ बीजपूरं तथा शक्तिं, मुद्गरं चाक्षसूत्रकम्। दधानोऽष्टभुजो हस्तिवाहनश्चतुराननः ॥ ८८ ॥ इन्द्रायुधद्युतिर्यक्षः, कूबरः कुरुते श्रियम्। श्रीमल्लिनाथभक्तानां, कुबेरोऽसौ मतान्तरे ॥ ८९ ॥ त्रिभिर्विशेषकम्। वरदं चाक्षसूत्रं च, या दक्षिणकरद्वये। बीजपूरं तथा शक्तिं, धत्ते वामकरद्वये ॥९०॥ पद्मासना श्यामवर्णा, सा वैरोट्या चतुर्भुजा। पिपर्त्ति प्रार्थितं प्रीता, श्रीमल्लिजिनसेवनात् ॥ ९१ ॥ युग्मम्। इति श्रीमल्लिः ॥

शिवकेतुरभूत्पूर्वं, सौधर्मे त्रिदशस्ततः। ततः कुबेरदत्तोऽथ, सुरः स्वर्गे तृतीयके ॥९२॥ वज्रकुण्डलनामाथ, ब्रह्मस्वर्गे सुरस्ततः। ततोऽस्मिन् भरतक्षेत्रे, चम्पापुर्यां रमाजुषि ॥९३॥ नृपः श्रीवर्मनामासौ, सुनन्दगुरुसन्निधौ। प्रव्रज्य परमायुष्को, देवोऽभूदपराजिते ॥ ९४॥ युग्मम्। ततो मगधदेशेऽभूत्पुरे राजगृहे जिनः। पद्मावतीकुक्षिजन्मा, सुमित्रनृपतेः सुतः ॥ ९५ ॥ पौर्णमासी श्रावणस्य, कृष्णा ज्येष्ठस्य चाष्टमी। फाल्गुने द्वादशी शुक्ला, द्वादशी फाल्गुने सिता ॥ ९६ ॥ कृष्णा च ज्येष्ठनवमी, कल्याणकदिना अमी। एषु सर्वेषु नक्षत्रं, निर्दिष्टं श्रवणाह्वयम् ॥ ९७ ॥ नव गर्भस्थितिर्मासाः, प्रभोरष्टदिनाधिकाः। कूर्मोऽङ्को मकरो राशिर्धनुर्विंशतिरुच्छ्रयः ॥ ९८॥ प्रभौ गर्भस्थिते माता, मुनिवत्सुव्रताऽभवत्। स्वयं च सुव्रतस्तस्मान्नाम्नाऽर्हन्मुनिसुव्रतः ॥ ९९ ॥ चतुष्पञ्चाशता वर्षलक्षैः श्रीमल्लिनिर्वृतेः। त्रिंशद्वर्षसहस्रोनैर्जन्माभूत्सुव्रतप्रभोः ॥ ८०० ॥ लक्षाण्येकादशाब्दानां, वेदनाग(८४)सहस्रकाः। तुर्यारके स्म शिष्यन्ते, युताः श्रीसुव्रतायुषा ॥ १ ॥ कौमार्येऽब्दसहस्राणि, सप्त सार्द्धा-

न्यथोषितः । राज्ये पञ्चादशाब्दानां, सहस्राणि ततः पुनः ॥ २ ॥ सार्द्धान्यब्दसहस्राणि, सप्त व्रतमपालयत् । त्रिंशदब्दसहस्राणि, सर्वमायुरपालयत् ॥ ३ ॥ मोहापराजितस्यास्य, शिबिका त्वपराजिता । पुरे राजगृहे ब्रह्मदत्तोऽदादाद्यपारणाम् ॥ ४ ॥ मासा एकादश च्छद्मस्थताऽमुष्य विभोर्मता । ज्ञानवृक्षश्चम्पकोऽभूदष्टादश गणाधिपाः ॥ ५ ॥ त्रिंशत्सहस्राः साधूनां, साध्वीनां खशरै ( ५० ) र्मिताः । श्राद्धानां लक्षमेकं च, द्वासप्ततिसहस्रयुक् ॥ ६ ॥ सार्द्धास्त्रिलक्षाश्चार्हत्यः, सर्वज्ञानां तथा शताः । अष्टादश पञ्चदश, मनःपर्यायवेदिनाम् ॥ ७ ॥ अवधिज्ञानभाजामप्यष्टादश शताः स्मृताः । शतानि पञ्च दधतां, पूर्वाणि च चतुर्दश ॥८॥ सवैक्रियाः सहस्रे द्वे, वादिनां द्विशताधिकम् । सहस्रमेकं गणभृन्मुख्यो मल्लिरिति श्रुतः ॥ ९ ॥ प्रवर्त्तिनी पुष्पवती, सदा भक्तो नृपः प्रभोः । विजिताख्योऽभवद्यक्षो, वरुणश्चतुराननः ॥ १० ॥ बीजपूरं गदां बाणं, शक्तिं करचतुष्टये । दक्षिणे नकुलं पद्मं, धनुः पर्शुं च वामके ॥ ११ ॥ दधानोऽष्टभुजः सौख्यं, कुर्याद्वृषभवाहनः । त्रिलोचनः श्वेतवर्णो, जटामुकुटभूषितः ॥१२॥ त्रिभिर्विशेषकम् । वरदं चाक्षसूत्रं च, या दक्षिणकरद्वये । धत्ते तथा बीजपूरं, शक्तिं वामकरद्वये ॥ १३ ॥ सा भद्रासनमारूढा, स्वर्णवर्णा चतुर्भुजा । तस्याच्छुप्ता बभौ देवी, नरदत्ता मतान्तरे ॥ १४ ॥ युग्मम् । इति श्रीमुनिसुव्रतः ॥

जम्बूद्वीपस्य भरते, कौशाम्ब्यां पुरि भूपतिः । सिद्धार्थो नन्दगुर्वन्ते, परिव्रज्यामुपाददे ॥ १५ ॥ ततोऽभूत्प्राणतः स्वर्गे, विंशत्यर्णवजीवितः । उदात्तवैभवो देवस्ततश्च्युत्वा स्थितिक्षये ॥ १६ ॥ विदेहदेशे मिथिलापुर्यां विजयभूपतेः । वप्राराज्ञीकुक्षिरत्नं, नमिनामा जिनोऽभवत् ॥ १७ ॥ युग्मम् । आश्विनस्य पौर्णमासी, श्रावणस्यासिताऽष्टमी । नवम्याषाढस्य कृष्णा, मार्गस्यैकादशी सिता ॥ १८ ॥ राधस्य दशमी कृष्णा, कल्याणकदिना इति । सर्वेष्वप्यश्विनी धिष्ण्यं, राशिर्मेषः स्मृतः प्रभोः ॥ १९ ॥ अष्टघस्राधिका मासा, नवाभूद्गर्भस्थितिः । नीलाब्जं लक्ष्म चापानि, देहः पञ्चदशोच्छ्रितः ॥ २० ॥ गर्भस्थिते प्रभौ द्रङ्गरोधिनो रिपवो नताः । तस्मान्नाम्ना नमी रागाद्यरीणां नमनेन वा ॥२१॥ षड्भिश्च शरदां लक्षैर्मुनिसुव्रतनिर्वृतेः । दशवर्षसहस्रोनैरजायत नमिप्रभुः ॥ २२ ॥ लक्षाणि पञ्च वर्षाणां, सहस्रा वार्द्धिदिग्मिताः (८४) । जिनायुश्चावशिष्यन्ते, तदा तुर्यारके ध्रुवम् ॥ २३ ॥ सार्द्धे वर्षसहस्रे द्वे, कुमारत्वेऽवसद्विभुः । पञ्च वर्षसहस्राणि, प्राज्यं राज्यमपालयत् ॥ २४ ॥ पुनः सार्द्धे सहस्रे द्वे, पालयामास संयमम् । दशाब्दानां सहस्राणि, सर्वमायुरपूपुरत् ॥ २५ ॥ शिबिका देवकुर्वाख्या, श्रीनमिस्वामिनो व्रते । आद्यां वीरपुरे भक्त्या, दिन्नो दत्ते स्म पारणाम् ॥ २६ ॥ मासा नवैव च्छाद्मस्थ्यं, बकुलो ज्ञानभूरुहः । प्रभोर्गणभृतः सप्तदश पेशलसंयमाः ॥ २७ ॥ महर्षीणां सहस्राणि, विंशतिः कीर्त्तितान्यथ । साध्वीनामेकचत्वारिंशदेव च सहस्रकाः ॥ २८ ॥ लक्षं सहस्रैः सप्तत्या, समन्वितमुपासकाः । लक्षास्तिस्रोऽष्टचत्वारिंशत्सहस्राण्युपासिकाः ॥ २९ ॥ केवलज्ञानिनामेकं, सहस्रं षट्शताधिकम् । शता द्वादश पञ्चाशाः, षष्ट्याढ्या वा मनोविदाम् ॥३०॥ अवधिज्ञानिनां षड्भिः, सहस्रमधिकं शतैः । चतुर्दशपूर्वभृतामद्ध्यर्द्धा च चतुःशती ॥ ३१ ॥ सहस्रं वादिनां पञ्च, सहस्रा वैक्रियस्पृशाम् । शुभाख्यो गणभृन्मुख्योऽनिलाख्या च प्रवर्त्तिनी ॥ ३२ ॥

प्रभोर्भक्तो नृपश्चक्री, हरिषेणाभिधोऽभवत् । यक्षश्च भृकुटिर्जीयाचतुर्वक्त्रस्त्रिलोचनः ॥ ३३ ॥ सुवर्णवर्णो वृषभवाहनो दक्षिणैर्भुजैः । बीजपूरं तथा शक्तिं, मुद्गरं चाभयं दधत् ॥ ३४ ॥ वामैश्च नकुलं पर्शुं, वज्रमेवाक्षसूत्रकम् । दधानोऽष्टभुजः सम्यग्दृष्टिः प्रीणाति धार्मिकान् ॥३५॥ त्रिभिर्विशेषकम् । दधाना वरदं खड्गमपसव्ये करद्वये । बीजपूरककुन्ताभ्यां, व्यग्रवामकरद्वया ॥ ३६ ॥ चतुर्भुजा श्वेतवर्णा, गान्धारी हंसवाहना । देवी दिशति कल्याणं, श्रीनमिस्वामिसेविनाम् ॥ ३७ ॥ युग्मम् । इति श्रीनमिः ॥

अभूद्राजा धनस्तस्य, नाम्ना धनवती प्रिया । दम्पती तावभूतां द्वौ, सुरौ सौधर्मताविषे ॥ ३८ ॥ खेटश्चित्रगतिस्तस्य, प्रिया रत्नवतीति तौ । भवे तृतीये जज्ञाते, सौधर्मस्वर्गतश्च्युतौ ॥ ३९ ॥ ततो माहेन्द्रनाके तौ, देवौ जातौ प्रियौ मिथः । ततो धनस्य जीवोऽभूद्राजा नाम्नाऽपराजितः ॥ ४० ॥ धनवत्याश्च जीवोऽभूदपराजितभूपतेः । राज्ञी प्रीतिमती जातौ, ततो द्वावारणे सुरौ ॥ ४१ ॥ ततोऽपराजितस्यात्मा, सुप्रतिष्ठाभिधो नृपः । मतान्तरेऽभूच्छङ्खाख्यो, जम्बूद्वीपस्य भारते ॥ ४२ ॥ पुरे राजगृहेऽथास्य, प्रियैवाभूद्यशोमती । जीवश्च्युत्वा प्रीतिमत्याः, स्वर्गादारणसंज्ञकात् ॥ ४३ ॥ गुरोरतियशःपार्श्वात्तावुरीकृत्य संयमम् । ज्येष्ठायुष्कौ सुहृद्देवौ, जातौ द्वावपराजिते ॥ ४४ ॥ जीवोऽथ यो यशोमत्याः, स च च्युत्वाऽपराजितात् । अजायतोग्रसेनस्य, नाम्ना राजीमती सुता ॥ ४५ ॥ सुप्रतिष्ठस्य जीवोऽथ, ततश्च्युत्वाऽपराजितात् । समुत्पेदे कुशार्त्ताख्ये, देशे शौर्यपुरे पुरे ॥४६॥ समुद्रविजयाख्यस्य, दशार्हस्य महीपतेः । सुतोऽभवच्छिवादेवीकुक्षिजन्मा जिनेश्वरः ॥४७॥ युग्मम् ।

कार्त्तिके द्वादशी कृष्णा, श्रावणे पञ्चमी सिता । षष्ठी च श्रावणे शुक्लाऽमावास्याऽऽश्विनमासि च ॥ ४८ ॥ आषाढस्याष्टमी शुक्ला, कल्याणकदिनाः प्रभोः । चित्रानक्षत्रमेतेषु, राशिः कन्याऽऽह्वयः स्मृतः ॥ ४९ ॥ दिनैरष्टाभिरधिका, मासा गर्भस्थितिर्नव । शङ्खो लक्ष्म दशोष्वासप्रमितो वपुरुच्छ्रयः ॥ ५० ॥ रिष्टरत्नमयीं चक्रधारामैक्षत यत्प्रसूः । प्रभौ गर्भस्थिते रिष्टनेमिरित्याख्यया ततः ॥ ५१ ॥ अमङ्गलव्यपोहायाऽकारोऽत्र परिभाव्यताम् । पापवृक्षे चक्रधारातुल्यो वा तत्तथाऽऽह्वयः ॥५२॥ एकवर्षसहस्रोनैः, पञ्चभिः शरदां गतैः । लक्षैः श्रीनमिनिर्वाणात्, श्रीनेमिरुदपद्यत ॥ ५३ ॥ श्रीनेमिगर्भावसरे, पञ्चाशीतिः सहस्रकाः । शेषास्तुर्यारकेऽब्दानां, जिनायुर्युक्तयाऽभवन् ॥ ५४ ॥ कदाचित्कौतुकान्नेमिर्वयस्यप्रेरितो ययौ । हरेरायुधशालायां, तत्रास्त्राण्यखिलान्यपि ॥ ५५ ॥ लीलया कलयामास, पाञ्चजन्ये च वादिते । त्रस्तातुराश्वेभनरा, सा पुरी चुक्षुभेऽखिला ॥ ५६ ॥ कृष्णोऽपि द्रुतमागत्य, परीक्ष्य च विभोर्बलम् । विषसादेति राज्यं मे, सुखेनैष ग्रहीष्यति ॥ ५७ ॥ तत आकाशवागेवमभून्नेमिरयं जिनः । प्रव्रजिष्यति कौमार्य, इत्युक्तं नमिनाऽर्हता ॥ ५८ ॥ अभ्यर्थितो विवाहाय, जलक्रीडामिषात्ततः । सान्तःपुरेण कृष्णेन, नर्ममर्मचटूक्तिभिः ॥५९॥ कृतेमौने भगवता, सर्वैरुद्घोषितं ततः । वीवाहः स्वीकृत इति, न निषिद्धं हि संगतम् ॥ ६० ॥ ततः साडम्बरं राजीमत्याः कर्त्तुं करग्रहम् । ययौ मुक्त्यासिसंकेतमिव कर्त्तुं प्रियस्त्रियाः ॥६१॥ ततो जन्यजनातिथ्यं, कर्त्तुमार्त्तान्नियन्त्रितान् । पशून् वीक्ष्य परावृत्तः, स प्राव्राजीद्दयामयः ॥ ६२ ॥ शतानि शरदां त्रीणि, कुमारत्वेऽथ संयमे । शतानि सप्त सर्वायुः, सहस्रं शरदां प्रभोः ॥६३॥ चतु-

ऽपञ्चाशद्दिनानि, च्छाद्मस्थ्यमभवद्विभोः । वरदत्तो द्वारिकायामाद्यभिक्षां प्रभोर्ददौ ॥ ६४ ॥ शिबिका द्वारवत्या-
ख्या, वेतसो ज्ञानभूरुहः । अष्टादश गणाधीशा, एकादश मतान्तरे ॥ ६५ ॥ अष्टादश सहस्राः स्युः, साधूनां
गुणशालिनाम् । चत्वारिंशत्सहस्राश्च, साध्वीनां विमलात्मनाम् ॥ ६६ ॥ श्रावकाणां लक्षमेकोनसप्ततिसहस्र-
युक् । लक्षास्तिस्रः सहस्राः षट्, त्रिंशच्चोपासिका मताः ॥ ६७ ॥ सातिरेकं पञ्चशत्या, सहस्रं सर्ववेदिनाम् ।
सहस्रमेकं संपूर्णं, मनःपर्यायवेदिनाम् ॥ ६८ ॥ सहस्रमवधिज्ञानभाजां पञ्चाशताऽधिकम् । शतानि तस्य
चत्वारि, सचतुर्दशपूर्विणाम् ॥ ६९ ॥ लसद्वैक्रियलब्धीनां, शताः पञ्चदशोदिताः । वादिनां स्युः शतान्यष्टाव-
जय्यानां सुरैरपि ॥ ७० ॥ वरदत्तो गणी मुख्यो, यक्षदिन्ना प्रवर्त्तिनी । पितृव्यपुत्रः कृष्णाख्यो, वासुदेवश्च
सेवकः ॥ ७१ ॥ मातुलिङ्गं च परशुं, बिभ्रचक्रं च दक्षिणे । करत्रयेऽथ नकुलं, शूलं शक्तिं च वामके ॥ ७२ ॥
गोमेधयक्षस्त्रिमुखः, श्यामः पुरुषवाहनः । षड्भुजो नेमिभक्तानां, वितनोति समीहितम् ॥ ७३ ॥ युग्मम् ।
आम्रलुम्बिपाशयुक्तापसव्यकरयामला । पात्राङ्कुशव्यग्रवामकरयुग्माऽधिकद्युतिः ॥ ७४ ॥ मृगेन्द्रवाहना
जात्यस्वर्णज्योतिश्चतुर्भुजा । श्रीनेमिभक्तान् पात्यम्बादेव्यम्बेव हितावहा ॥ ७५ ॥ युग्मम् । इति श्रीनेमिः ॥

कमठो मरुभूतिश्च, द्वावभूतां सहोदरौ । ब्राह्मणौ कमठस्तत्र, भ्रातुर्जायामरीरमत् ॥ ७६ ॥ ज्ञातः कुर्वंस्त-
मन्यायं, कदाचिन्मरुभूतिना । भूपाय ज्ञापितस्तेनाप्यन्यायीति विडम्बितः ॥७७॥ अनात्मज्ञस्ततश्चासौ, भ्रातरि
द्वेषमुद्वहन् । तापसोऽभूत्सोदरेण, खिंस्यमानश्च तं न्यहन् ॥ ७८ ॥ मरुभूतिरभून्मृत्वा, श्वेतेभः कमठः पुनः ।



महाविषः कुर्कुटाहिर्दष्टस्तेनाहिना मृतः ॥ ७९ ॥ गजः सुरः सहस्रारे, स सर्पोऽभूच्च नारकः । नारकोऽभूत्पुनः
सर्पः, स देवोऽभूच्च खेचरः ॥ ८० ॥ खेचरोऽथाच्युतस्वर्गे, सर्पश्च नरके ययौ । ततोऽच्युतसुरः पृथ्वीनाथोऽभू-
च्छबरः परः ॥ ८१ ॥ राजा ग्रैवेयके देवः, शबरोऽभूच्च नारकः । नारकोऽसौ मृगेन्द्रोऽभूद्, ग्रैवेयकः सुरः पुनः
॥ ८२ ॥ अयोध्यायां महापुर्यां, जम्बूद्वीपस्य भारते । आनन्दनामा भूपोऽभूद्दामोदरगुरोः स च ॥ ८३ ॥ पार्श्व-
चरित्रे तु महाविदेहे सुवर्णबाहुनामा चक्री अष्टमभवे भगवानासीदिति दृश्यते । चारित्रं प्राप्य सिंहेन, तेन
क्षुण्णोऽपि स क्षमः । देवोऽभूत्प्राणतस्वर्गे, विंशत्यम्भोनिधिस्थितिः ॥ ८४ ॥ युग्मम् । सिंहश्च मृत्वा नरके,
ययावेवं च पञ्चसु । भवेषु मरुभूत्यात्मा, मारितः कमठात्मना ॥८५॥ ततः कमठजीवोऽसावुद्धृत्य नरकात्ततः । कठो
दरिद्रविप्रोऽभूत्, क्रमाद्दुःखेन तापसः ॥८६॥ मरुभूतेरथो जीवश्च्युत्वा प्राणतताविषात् । काशीदेशे वाराणस्यां,
पुर्यामाश्चर्यकृच्छ्रियाम् ॥ ८७ ॥ अश्वसेनस्य भूभर्त्तुः, सुतोऽद्भुतगुणोत्तरः । वामाराज्ञीकुक्षिशुक्तिमुक्ताफलम-
भूज्जिनः ॥८८॥ युग्मम् । कृष्णा चतुर्थी चैत्रस्य, पौषस्य दशमी सितिः । पौषस्यैकादशी कृष्णा, चतुर्थी चासिता
मधौ ॥ ८९ ॥ श्रावणस्याष्टमी शुक्ला, कल्याणानां दिना इमे । विशाखा धिष्ण्यमेतेषु, राशिश्च स्वामिनस्तुला
॥ ९० ॥ प्रभोर्गर्भस्थितिर्मासा, नव षड्भिर्दिनैर्युताः । भुजगो लाञ्छनं हस्ता, नवैव वपुरुच्छ्रयः ॥ ९१ ॥ रात्रौ
यान्तमहिं पार्श्वेऽपश्यद्गर्भक्षणे प्रसूः । ततः पार्श्वाभिधः स्वामी, त्रैलोक्यं पश्यतीति वा ॥ ९२ ॥ श्रीनेमिनाथ-
निर्वाणात्, त्र्यशीत्याऽब्दसहस्रकैः । अद्ध्यर्द्धषट्शतोपेतैः, श्रीपार्श्वोऽजायत प्रभुः ॥ ९३ ॥ वामेयगर्भकालेऽस्य,

चतुर्थस्यारकस्य च । सार्द्धाः शतास्त्रयोऽब्दानामवशिष्टतया स्थिताः ॥९४॥ त्रिंशदब्दानि कौमार्ये, व्रते वर्षाणि सप्ततिः । दिनानि तत्र चतुरशीतिश्छाद्मस्थ्यमीरितम् ॥ ९५ ॥ सर्वायुः शतमब्दानां, विशाला शिबिका व्रते । धन्यः कोपकटग्रामे, पारणां प्रथमां ददौ ॥ ९६ ॥ पञ्चाग्नीन् साधयन् कष्टं, सासहिः कठतापसः । प्रभुणा दर्शिते सर्पे, प्रज्वलत्काष्ठकोटरात् ॥ ९७ ॥ लज्जितस्तपसा तेन, मेघमाली सुरोऽभवत् । ववर्षातितरां रोषादुपद्रोतुं जिनेश्वरम् ॥ ९८ ॥ युग्मम् । धरणेन्द्रत्वमासाद्य, स सर्पो विचलासनः । भक्त्याऽऽच्छाद्य फणैरेनमुपसर्गं न्यवर्त्तयत् ॥९९॥ ततस्त्रयोऽथवा सप्त, फणा एकादशापि च । भवन्ति पार्श्वनाथस्येत्युक्तं पूर्वमहर्षिभिः ॥९००॥ धातकी ज्ञानवृक्षः स्यात्, श्रीपार्श्वस्य जगत्प्रभोः । प्रभोरष्टौ गणभृतो, नामतः कीर्त्तयामि तान् ॥ १ ॥ शुभ १-स्तथाऽऽर्यघोषश्च २, वसिष्ठो ३ ब्रह्मचार्यपि ४ । सोमश्च ५ श्रीधरश्चैव ६, वीरभद्रो ७ यशोऽभिधः ८ ॥ २ ॥ अयं श्रीकल्पसूत्रस्याभिप्रायः, आवश्यकसप्ततिशतस्थानकादिषु च दश गणभृत उक्ताः [1] सन्ति, किंच-श्रीकल्पसूत्रपार्श्वचरित्रादौ श्रीपार्श्वस्य धातकी ज्ञानवृक्ष उक्तः, श्रीउत्तराध्यनबृहद्वृत्तौ तु अशोक उक्त इति [2] ज्ञेयं । षोडशैव सहस्राणि, साधूनां भावितात्मनाम् । अष्टात्रिंशत्सहस्राणि, साध्वीनां च शुभात्मनाम् ॥ ३ ॥ श्राद्धानां सचतुःषष्टिसहस्रं लक्षमीरितम् । अग्रेसरः श्रावकश्च, प्रभोः सूर्य इति स्मृतः ॥ ४ ॥ लक्षास्तिस्रस्तथैकोनचत्वारिंशत्सहस्रकाः । श्राविकाणां तासु मुख्या, सुनन्दा नामतः स्मृता ॥ ५ ॥ सर्वज्ञानां सहस्रं च,



१ आवश्यकटीप्पणादौ समाहितमेतत् अल्पायुष्टादिहेतोः, स्थानाङ्गवृत्तावपि । २ अशोकस्योपरि ज्ञानवृक्षस्य भावादशोकोक्तिर्न विरोधावहा

मनःपर्यायवेदिनाम् । पञ्चाशदधिकाः सप्त, शताः प्रोक्ता मनीषिभिः ॥ ६ ॥ अवधिज्ञानभाजां च, चतुर्दश शताः प्रभोः । सचतुर्दशपूर्वाणामद्ध्यर्द्धा त्रिशती मता ॥ ७ ॥ विकुर्वणासमर्थानां, शतान्येकादशाथ च । सुरासुरैरजय्यानां, षट्शती वादिनामभूत् ॥ ८ ॥ शुभाभिधो गणी मुख्य, आर्यदिन्नो मतान्तरे । प्रवर्त्तिनी पुष्पचूला, भक्तभूपः प्रसेनजित् ॥ ९ ॥ बीजपूरोरगोपेतापसव्यकरयामलः । नकुलं च भुजङ्गं च, दधद्वामकरद्वये ॥ १० ॥ श्यामवर्णः फणिफणाचक्रमण्डितमस्तकः । चतुर्भुजश्चतुर्वक्त्रो, गजास्यः कूर्मवाहनः ॥ ११ ॥ नाम्ना श्रीवामनोः यक्षः, पार्श्वाख्यश्च मतान्तरे । श्रीपार्श्वनाथभक्तानां, सान्निध्यं कुरुते सदा ॥१२॥ त्रिभिर्विशेषकम् । आबिभ्रती पद्मपाशावपसव्ये करद्वये । सव्ये करद्वये कम्रौ, दधती च फलाङ्कुशौ ॥ १३ ॥ चतुर्भुजा हेमवर्णा, कुर्कुटोरगवाहना । श्रीपार्श्वं स्मरतां दत्ते, देवी पद्मावती श्रियम् ॥ १४ ॥ युग्मम् । इति श्रीपार्श्वः ॥

पश्चिमेषु विदेहेषु, नयसाराभिधोऽभवत् । ग्रामनाथः स काष्ठार्थं, वनेऽगात् स्वाम्यनुज्ञया ॥ १५ ॥ भोजनावसरे वाञ्छन्नतिथीनां समागमम् । सार्द्धभ्रष्टान् ददर्शर्षीन्, क्षुधार्त्तान्मार्गविच्युतान् ॥ १६ ॥ ततस्तान् परमप्रीत्या, प्रणम्य परिचर्य च । शुद्धाशनादिभिः पश्चात्, स्वयं मार्गमदर्शयत् ॥ १७ ॥ प्रापितस्तत्र सम्यक्त्वं, योग्योऽयमिति साधुभिः । ततो भवे द्वितीयेऽसौ, सौधर्मे त्रिदशोऽभवत् ॥१८॥ ततो मरीचिनामाऽभूत्, पुत्रो भरतचक्रिणः । स प्रवव्राज वैराग्यात्, समीपे वृषभप्रभोः ॥१९॥ अधीतैकादशाङ्गोऽपि, सोऽथ तापादिपीडया ।

१ यद्यपि न तस्य सम्यक्त्वं, न चेदृश्याकाङ्क्षा सूत्रोक्ता, तथापि भोजनकालेऽतिथीनां स्मरणं सद्गृहस्थलक्षणमित्युक्तं ।

पीडितो भृशमुद्विग्नश्चेतस्येवं व्यचिन्तयत् ॥ २० ॥ मया न शक्यते वोढुं, दुर्वहः संयमो न च । गृहेऽपि शक्यते गन्तुं, गर्हितेनावकीर्णिना ॥ २१ ॥ ततस्त्रिदण्डिनामेष, नव्यं वेषमकल्पयत् । विजहाराऽर्हता सार्द्धं, शुद्धं धर्मं प्ररूपयन् ॥२२॥ अनेकान् राजपुत्रादीन्, प्रतिबोध्येति शास्त्यसौ । जैनधर्मं प्रपद्यध्वं, गत्वा श्रीजिनसन्निधौ ॥ २३ ॥ कदाचित्समवासार्षीदयोध्यायां जिनेश्वरः । तत्रागतो नमस्यार्थं, पप्रच्छ भरतः प्रभुम् ॥ २४ ॥ एतस्यामवसर्पिण्यामस्मिंश्च भरते प्रभो ! । भविष्यति जिनः कोऽपि, जनोऽस्यां पर्षदि स्थितः ? ॥ २५ ॥ तदोचे भगवानेष, मरीचिस्तनयस्तव । चतुर्विंशोऽत्र भाव्यर्हन्, महावीराह्वयो नृप ! ॥ २६॥ चक्री च प्रियमित्राख्यो, विदेहेषु भविष्यति । प्रथमो वासुदेवोऽपि, भरतेऽत्रैष एव च ॥ २७ ॥ भरतोऽपि ततो गत्वेत्यूचे नत्वा कृताञ्जलिः । जिनश्चक्री हरिर्भावी, मरीचे ! भाग्यवानसि ॥ २८ ॥ पारिव्राज्यं न ते वन्दे, न च ते चक्रिशार्ङ्गिताम् । भविष्यसि जिनो हि त्वं, प्रणमामि ततो मुदा ॥ २९ ॥ एवमुक्त्वा विनीतान्तर्विनीते नृपतौ गते । मरीचिर्मानसाविष्टाऽमानमानोऽब्रवीदिति ॥३०॥ आद्योऽहं वासुदेवानां, पिता मे चक्रवर्त्तिनाम् । पितामहो जिनेन्द्राणां, ममाहो उत्तमं कुलम् ॥ ३१ ॥ प्रथमो वासुदेवोऽहं, मूकायां चक्रवर्त्यहम् । चरमस्तीर्थराजोऽहं, पर्याप्तमियतैव मे ॥ ३२ ॥ कुर्वन्नेवमहङ्कारं, नीचैर्गोत्रं बबन्ध सः । जातिलाभकुलादीनामहङ्कारो हि पातयेत् ॥ ३३ ॥ कदाचित्कपिलं राजकुमारं प्रत्यबूबुधत् । प्रैरयच्चापि चारित्रं, ग्रहीतुं साधुसन्निधौ ॥ ३४ ॥ ततो बहुलकर्माऽयं, मरीचिमवदद्विभो ! । किं सर्वथा न धर्मोऽस्ति, भवदीयेऽत्र दर्शने ? ॥ ३५ ॥ ततो मरीचिरूचे तं, भाविताभद्रवस्थितिः । मार्गे ममापि धर्मोऽस्ति, मार्गे जैनेऽपि विद्यते ॥३६॥ उत्सूत्रवचसाऽनेन, मरीचिः समुपार्जयत् । संसारमेकपाथोधिकोटाकोटिमितं तदा ॥ ३७ ॥ ततस्तुर्ये भवे ब्रह्मलोकस्वर्गेऽभवत्सुरः । कोल्लाकसन्निवेशेऽथ, विप्रोऽभूत्पञ्चमे भवे ॥ ३८ ॥ ततश्च मृत्वा भूयांसं, कालं संसारमाटिटत् । भवास्ते च न गण्यन्ते, भवानां सप्तविंशतौ ॥ ३९ ॥ षष्ठे भवे च स्थूणायां, नगर्यां ब्राह्मणोऽभवत् । सौधर्मकल्पे देवोऽभूद्, भवे मृत्वा च सप्तमे ॥ ४० ॥ भवेऽष्टमे ततश्चैत्यसन्निवेशेऽभवद् द्विजः । ईशानदेवलोकेऽथ, निर्जरो नवमे भवे ॥ ४१ ॥ मन्दराख्ये सन्निवेशे, ब्राह्मणो दशमे भवे । एकादशे भवे देवोऽभवत्स्वर्गे तृतीयके ॥ ४२ ॥ भवे च द्वादशे पुर्यां, श्वेताम्ब्यां ब्राह्मणोऽभवत् । त्रयोदशे च माहेन्द्रे, कल्पेऽभूत्त्रिदशो भवे ॥ ४३ ॥ ततः कियन्तं कालं च, भ्रान्तोऽसौ भवसागरे । चतुर्दशे ततो राजगृहेऽभूद्ब्राह्मणो भवे ॥ ४४ ॥ भवे पञ्चदशे ब्रह्मलोकस्वर्गे सुरोऽभवत् । मरीच्यादिनृभवानां, षट्के सोऽभूत्त्रिदण्डिकः ॥ ४५ ॥ षोडशे च भवे विश्वभूत्याख्यो युवराजसूः । संभूतिमुनिपादान्ते, प्रपेदे संयमं स च ॥ ४६ ॥ अन्यदा मासतपसः, पारणायां स जग्मिवान् । मुनिर्गोचरचर्यायां, तत्र धेनुहतोऽपतत् ॥ ४७ ॥ दृष्टः पितृव्यपुत्रेण, हसितः कुपितो भृशम् । गां शृङ्गयोर्गृहीत्वा द्राग्, नभस्यभ्रमयद्रुषा ॥ ४८ ॥ निदानं कृतवांश्चैवं, भूयासं तपसाऽमुना । भूयिष्ठवीर्यो मृत्वा च, महाशुक्रेऽभवत्सुरः ॥ ४९ ॥ वासुदेवस्त्रिपृष्ठाख्योऽजायताष्टादशे भवे । बाल्येऽप्यदारयत्सिंहं, यः स्वाम्ना जीर्णवस्त्रवत् ॥ ५० ॥ नरके सप्तमेऽथैकोनविंशतितमे भवे । सिंहोऽभूद्विंशतितमे, चतुर्थे नरके गतः ॥ ५१ ॥ निर्गत्य नरकात्तुर्यात्, स बभ्राम भवान्

बहून् । द्वाविंशेऽथ भवे नृत्वं, प्राप्य पुण्यान्युपार्जयत् ॥ ५२ ॥ भवे ततस्त्रयोविंशे, प्रियमित्राभिधोऽभवत् । चक्रभृत् स च चारित्रं, धृत्वा शुक्रेऽभवत्सुरः ॥ ५३ ॥ ततश्च्युत्वेह भरतक्षेत्रेऽहिच्छत्रिकापुरे । जितशत्रुमहीपालभद्रादेव्योः सुतोऽभवत् ॥ ५४ ॥ पञ्चविंशतिलक्षाब्दजीवितो नन्दनाह्वयः । दीक्षां लक्षाब्दशेषायुराददे पोट्टिलाद्गुरोः ॥ ५५ ॥ अयमावश्यकाभिप्रायः, समवायाङ्गसूत्रवृत्त्योस्तु भगवान् पोट्टिलाभिधानो राजपुत्रो बभूव, तत्र वर्षकोटिं प्रव्रज्यां पालितवान्, ततो नन्दनाभिधानो राजसूरित्युक्तमस्तीति ज्ञेयं । यावज्जीवं ततो मासक्षपणानि निरन्तरम् । कुर्वन् स विंशतिस्थानान्याराध्यार्हन्त्यमार्जयत् ॥ ५६ ॥ सुरोऽभूत्प्राणतस्वर्गे, षड्विंशतितमे भवे । विंशत्यब्ध्यायुर्विमाने, पुष्पोत्तरावतंसके ॥ ५७ ॥ भवे ततः सप्तविंशे, ग्रामे ब्राह्मणकुण्डके । विप्रस्यर्षभदत्तस्य, देवानन्दाह्वयस्त्रियाः ॥ ५८ ॥ मरीचिभववद्धेन, स नीचैर्गोत्रकर्मणा । कुक्षौ प्रभुक्तशेषेण, विश्वेशोऽप्युदपद्यत ॥५९॥ युग्मम् । अर्हतश्चक्रिणश्चैव, सीरिणः शार्ङ्गिणोऽपि च । तुच्छान्वयेषूत्पद्यन्ते, कदाचित्कर्मदोषतः ॥ ६० ॥ जायन्ते तु कदाप्येते, तादृग्वंशेषु नोत्तमाः । इति दत्तोपयोगस्य, सुरेन्द्रस्यानुशासनात् ॥६१॥ पुरे क्षत्रियकुण्डाख्ये, सिद्धार्थस्य महीपतेः । त्रिशलाया महाराज्ञ्याः, कुक्षावक्षीणसंपदः ॥ ६२ ॥ मुक्तो द्व्यशीत्यहोरात्रातिक्रमे नैगमेषिणा । अजायत सुतत्वेन, चतुर्विंशो जिनेश्वरः ॥ ६३ ॥ त्रिभिर्विशेषकम् । एवं च— ॥५२०॥
"उसह १ ससि २ संति ३ सुव्वय ४ नेमीसर ५ पास ६ वीर ७ सेसाणं ८ । तेर १ सग २ बार ३ नव ४ नव ५ दस ६ सगवीसा य ७ तिन्नि ८ भवा ॥६४॥" इति समर्थितं ॥ श्रीसमवायाङ्गे कोटिसमवाये 'तित्थकरभवग्गहणातो छट्ठे पोट्टिलभवग्गहणे' इति सूत्रे श्रीवीरस्य देवानन्दागर्भस्थितिस्त्रिशलाकुक्ष्यागतिश्चेति भवद्वयं विवक्षितमस्तीति ज्ञेयं । आषाढे धवला षष्ठी, चैत्रे शुक्ला त्रयोदशी । मार्गस्य दशमी कृष्णा, वैशाखे दशमी सिता ॥६५॥ कार्त्तिकस्यामावसीति, कल्याणकदिनाः प्रभोः । अभूद्गर्भापहारे तु, त्रयोदश्याश्विने सितिः ॥ ६६ ॥ फाल्गुन्य उत्तरा धिष्ण्यं, कल्याणकचतुष्टये । तथा गर्भापहारेऽपि, निर्वाणे स्वातिरिष्यते ॥ ६७ ॥ द्वयोर्महिलयोर्गर्भे, स्थितिः संकलिता विभोः । नव मासाः सातिरेकाः, सप्तभिः किल वासरैः ॥ ६८ ॥ श्रीपार्श्वनाथनिर्वाणादभूज्जन्मान्तिमार्हतः । साधिकेनाष्टसप्तत्या, शतेन शरदामिह ॥६९॥ श्रीवीरगर्भकाले च, वर्षाणां पञ्चसप्ततिः । तुर्यारकेऽवशिष्टाऽऽसीत्, सार्द्धमासाष्टकाधिका ॥७०॥ राशिरासीद्विभोः कन्या, लाञ्छनं च मृगाधिपः । देहोच्छ्रयः सप्त हस्ताः, प्रशस्ताङ्गद्युतिश्रियः ॥ ७१ ॥ गुणागतानि नामानि, त्रीण्यभूवन् जगद्विभोः । वर्द्धमानः श्रमणश्च, महावीर इति स्फुटम् ॥ ७२ ॥ अवतीर्णे प्रभौ ग्रामराष्ट्रादि यदवर्द्धत । ततः पितृभ्यां विहितमादिमं नाम सार्थकम् ॥ ७३ ॥ तपस्यति श्राम्यतीति, नाम श्रमण इत्यभूत् । तृतीयं नाम शक्रेण, विहितं तन्निशम्यताम् ॥ ७४ ॥ प्रशशंसान्यदा शक्रः, स्वामिधैर्यं स्वपर्षदि । अश्रद्दधानस्तत्कश्चिद्देवो भूलोकमीयिवान् ॥ ७५ ॥ क्रीडति स्वामिनि क्रूरसर्परूपमदीदृशत् । निक्षिप्ते स्वामिना दूरं, तस्मिन्निर्भीकचेतसा ॥ ७६ ॥ कुमाररूपमाधाय, चिक्रीड प्रभुणा सह । छलेन स्कन्दमारोप्य, प्रभुं स ववृधे भृशम् ॥ ७७ ॥ युग्मम् । तथाप्यभीतो भगवान्, शनैर्मुष्ट्या जघान तम् । ततः शक्रो व्यधात्तुष्टो, महावीराभिधं विभुम् ॥७८॥ तथोक्तं—"बालत्तणेवि सूरो, पयइए

गुरुपरक्कमो भयवं । वीरुत्ति कयं नामं सक्केणं तुट्ठचित्तेणं ॥ ७९ ॥" श्रीयोगशास्त्रगच्छाचारवृत्त्यादौ तु यदा प्रभुणा जन्मोत्सवे मेरुः कम्पितस्तदा शक्रेणैतन्नाम कृतमित्यस्तीति ज्ञेयं, पूर्ववैरिसङ्गमसुरोपहितकालचक्राप्रधृष्यत्वादिन्द्रादयो वीरनामानमुच्चैरुचेरुरिति तत्त्वार्थवृ० । स्वामी कनकवर्णाङ्गस्तथा पञ्चदशापरे । पद्मप्रभवासुपूज्यौ, पद्मरागारुणद्युती ॥१॥ नीलवर्णौ मल्लिपार्श्वावुज्ज्वलौ नवमाष्टमौ । सजलाम्भोधरश्यामौ, श्रीनेमिमुनिसुव्रतौ ॥२॥ अनङ्गीकृतसाम्राज्यो, गृहवासेऽवसद्विभुः । त्रिंशद्वर्षाणि चारित्रं, ततश्च प्रत्यपद्यत ॥८०॥ षड्भिर्मासैः किलाब्दयद्वैः, शरदो द्वादशाधिकाः । छद्मस्थता प्रभोस्तत्र, यत्तपोऽभूत्तदुच्यते ॥ ८१ ॥ द्वे षण्मासक्षपणके, तत्रैकं पञ्चभिर्दिनैः । न्यूनं नव चतुर्मासक्षपणान्यकरोद्विभुः ॥८२॥ सार्द्धद्विमासक्षपणे, त्रिमासक्षपणे अपि । द्वे द्वे द्विमासक्षपणान्यकार्षीत् षड् जिनेश्वरः ॥८३॥ सार्द्धैकमासक्षपणे, द्वे मासक्षपणानि च । द्वादश द्वासप्ततिश्च, पक्षक्षपणकान्यथ ॥ ८४ ॥ द्विघस्रा भद्रप्रतिमा, महाभद्रा चतुर्दिना । प्रतिमा सर्वतोभद्रा, दशभिर्दिवसैर्मिता ॥ ८५ ॥ एकोनत्रिंशदधिकं, षष्ठभक्तशतद्वयम् । त्रिशल्येकोनपञ्चाशा, पारणानां समुचिता ॥ ८६ ॥ अष्टमानि द्वादशैकं, प्रव्रज्यादिनमित्यसौ । सर्वसंकलने छद्मस्थताद्धा स्यात्पुरोदिता ॥ ८७ ॥ सर्वं चतुर्विधाहारं, स्वामिनेदं तपः कृतम् । द्वित्राण्यपि दिनानीह, न च भुक्तं निरन्तरम् ॥ ८८ ॥ नाप्रीतिमद्गृहे वासः १, स्थेयं प्रतिमया

१ अत्र मेरुकम्पसुरताडनकालचक्रोपसर्गेषु मेरुकम्पे कृतं महावीरेति नाम शेषयोर्द्वयोरनुदितं स्यात् तदा न काचिद्धानिः । २ यद्यपि श्रीवीरेण चतुर्थभक्तं न कृतं तथापि दीक्षायां षष्ठभक्तस्य प्रथमो दिवसो गार्हस्थ्ये ज्ञेयः

सदा २ । न गेहिविनयः कार्यो ३, मौनं ४ पाणौ च भोजनम् ५ ॥ ८९ ॥ अभिग्रहानिमान् पञ्चाभिगृह्य परमेश्वरः । आर्यानार्येषु देशेषु, विजहार क्षमानिधिः ॥ ९० ॥ एवं विजह्रुर्वृषभनेमिपार्श्वजिनेश्वराः । आर्यानार्येषु शेषास्तु, सदाऽऽर्येष्वेव विंशतिः ॥ ९१ ॥ एकोनत्रिंशतं वर्षाण्यब्दयर्द्धान्यन्तिमो जिनः । पक्षोनानि च सर्वज्ञपर्यायं पर्युपूरयत् ॥ ९२ ॥ बभार व्रतपर्यायं, द्विचत्वारिंशदब्दकम् । एवं द्विसप्ततिर्वर्षाण्यायुः सर्वमभूद्विभोः ॥ ९३ ॥ अयं कल्पसूत्राद्यभिप्रायः, समवायाङ्गे तु साधिकानि द्विचत्वारिंशद्वर्षाणि व्रतपर्यायः, साधिकानि द्विसप्ततिवर्षाणि सर्वायुरित्युक्तमिति ज्ञेयं ।

तपो वृषभतीर्थेऽभूदुत्कृष्टं वार्षिकं तथा । षाण्मासिकं वीरतीर्थे, शेषेषु चाष्टमासिकम् ॥ ९४ ॥ प्रमादकालोऽहोरात्रप्रमितो वृषभेशितुः । अन्तर्मुहूर्त्तं वीरस्य, शेषाणां स न विद्यते ॥ ९५ ॥ श्रीवीरनेतुर्भूयांसः, श्रीपार्श्वस्य च तेऽल्पकाः । द्वाविंशतेश्च शेषाणामुपसर्गा न जज्ञिरे ॥ ९६ ॥ शक्रन्यस्तं देवदूष्यं, स्कन्धे वृषभवीरयोः । संवत्सरं सातिरेकं, शेषाणां सर्वदा स्थितम् ॥ ९७ ॥ अत्र श्रीजम्बूद्वीपप्रज्ञप्तिसूत्रे श्रीवृषभदेवस्य श्रीकल्पसूत्रे श्रीमहावीरस्य साधिकं वर्षं देवदूष्यस्थितिरुक्ता, श्रीसप्ततिशतस्थानकग्रन्थे च—"सक्को य लक्खमुल्लं सुरदूसं ठवइ सव्वजिणखंधे । वीरस्स वरिसमहिअं सयावि सेसाण तस्स ठिई ॥१॥" इत्युक्तमिति ज्ञेयं । चन्द्रप्रभाख्या शिबिका, बहुलो भैक्ष्यमादिमम् । कोल्लाकसन्निवेशोऽदात्,

१ तुर्यांगे विवक्षितं सर्वं, अन्यत्र तु अल्पस्याविवक्षेति

सालो ज्ञानतरुः प्रभोः ॥ ९८ ॥ अष्टाद्यास्तद्भवे सिद्धा, अर्हत्प्रथमभैक्ष्यदाः । शेषास्तृतीये सेत्स्यन्ति, सिद्धाः केऽपि च तद्भवे ॥९९॥ वासुपूज्यमल्लिनेमिपार्श्ववीरजिनेश्वराः । प्रवव्रजुर्वयस्याद्येऽनुपात्तराज्यसंपदः ॥ १००० ॥ प्रवव्रजुर्भुक्तराज्याः, शेषा वयसि पश्चिमे । मण्डलेशाः परे तेषु, चक्रिणः शान्तिकुन्थ्वराः ॥ १ ॥ अभोगफलकर्माणौ, मल्लिनेमिजिनेश्वरौ । निरीयतुरनुद्वाहौ, कृतोद्वाहाः परे जिनाः ॥ २ ॥ सार्वभौमोऽभवत्पूर्वं, श्रीनाभेयजिनेश्वरः । इतो भवे तृतीयेऽन्ये, जिनाः सर्वेऽपि पार्थिवाः ॥ ३ ॥ श्रीपार्श्वोऽपि तच्चरित्रानुसारेण चक्र्यासीदिति दृश्यते ॥ सुमतिर्नित्यभक्तेन, मल्लिपार्श्वौ कृताष्टमौ । चतुर्थेन द्वादशान्ये, कृतषष्ठाः प्रवव्रजुः ॥ ४ ॥ वासुपूज्यः शतैः षड्भिर्मल्लिपार्श्वौ त्रिभिः शतैः । एको वीरः सहस्रैश्च, चतुर्भिर्वृषभो नृणाम् ॥ ५ ॥ व्रतं भेजुः सहस्रेण, सह शेषा वृषध्वजः । विनीतायां द्वारिकायां, नेमिर्जन्मपुरे परे ॥ ६ ॥ सिद्धार्थवन उद्याने, प्राव्राजीद्वृषभः प्रभुः । वने विहारगेहाख्ये, वासुपूज्यो जिनेश्वरः ॥ ७ ॥ श्रीधर्मो वप्रकाभिख्ये, विंशो नीलगुहाह्वये । श्रीपार्श्व आश्रमपदे, ज्ञातखण्डेऽन्तिमो जिनः ॥८॥ सहस्राम्रवणे शेषाश्चतुर्भिर्मुष्टिभिस्तथा । नाभेयः कृतवान् लोचं, मुष्टिभिः पञ्चभिः परे ॥ ९ ॥ पंचभिः कुलकम् ॥ मल्लिश्रेयांससुमतिनेमिपार्श्वजिनेश्वराः । पूर्वाह्णे जगृहुर्दीक्षां, पश्चिमाह्णे परे जिनाः ॥१०॥ आद्येनाद्यपारणायां, लब्धोऽब्दैनैक्षवो रसः । परमान्नं द्वितीयेऽह्नि, लेभे सर्वैः परैर्जिनैः ॥११॥ बाल्ये सुधाभुजः सर्वे, शुद्धाहाराशिनो व्रते । आद्यः कल्पद्रुफलभुग्, गार्हस्थ्येऽन्येऽन्नभोजिनः ॥ १२ ॥ विनीतायाः पुरः शाखापुरे पुरिमतालके । उद्याने शकटमुखे, वृषभः प्राप केवलम् ॥ १३ ॥ बहिः श्रीजृम्भि-

॥५२२॥

काग्रामादृजुवालिकातटम् । केवलं प्राप वीरोऽन्ये, स्वस्वदीक्षावनेषु च ॥ १४ ॥ श्रीपार्श्वनेमिनाभेयमल्लीनामष्टमस्पृशाम् । केवलं वासुपूज्यस्य, चतुर्थभक्तशालिनः ॥ १५ ॥ शेषाणां कृतषष्ठानामुत्पन्नं सन्नकल्मषम् । सर्वेषामपि पूर्वाह्णे, पश्चिमाह्णेऽन्तिमप्रभोः ॥ १६ ॥ आद्ये समवसरणे, सर्वेषामर्हतामिह । उत्पन्नं तीर्थमन्त्यस्य, जिनेन्द्रस्य द्वितीयके ॥ १७ ॥ यावदुत्पद्यते तीर्थमग्रिमस्य जिनेशितुः । तावत्पूर्वस्य पूर्वस्य, भवेत्तीर्थमखण्डितं ॥ १८ ॥ अस्यामवसर्पिण्यां तु–आद्यात्सुविधिपर्यन्तं, शान्तेश्चान्त्यजिनावधि । अष्टस्वष्टस्वन्तरेषु, तीर्थमासीन्निरन्तरम् ॥ १९ ॥ मध्ये सप्तस्वन्तरेषु, नवमात्षोडशावधि । यावत्कालमभूत्तीर्थविच्छेदः स निरूप्यते ॥ २० ॥ पुष्पदन्तशीतलयोः, शीतलश्रेयसोरपि । एकैकः पल्यतुर्यांशस्तीर्थमत्रुट्यदन्तरे ॥ २१ ॥ त्रयः पल्यचतुर्थांशाः, श्रेयांसवासुपूज्ययोः । वासुपूज्यविमलयोस्तुर्यः पल्योपमांशकः ॥ २२ ॥ त्रयः पल्यस्य तुर्यांशा, विमलानन्तयोरपि । एकः पल्यचतुर्थांशो, मध्ये चानन्तधर्मयोः ॥ २३ ॥ एकः पल्यस्य तुर्यांशो, धर्मशान्त्योः किलान्तरे । केचित्पल्योपमान्याहुः, पल्यतुर्यांशकास्पदे ॥ २४ ॥ तथाहुः सप्ततिस्थानके–“इगइगतिगेगतिगइग इगं स इइगार पलिअचउभागे । बिंतऽन्ने इअ पलिए सुविहाइसु सत्ततित्थन्ते ॥ २५ ॥” दुष्षमारकपर्यन्तं, तीर्थं वीरजिनेशितुः । प्रवर्त्ततेऽव्यवच्छिन्नं, छिन्नजन्मजरामयम् ॥ २६ ॥ द्वाविंशतिसहस्राब्दन्यूनैकपूर्वलक्षयुक् । तीर्थं वीरस्याब्धिकोटाकोटीनाभेयतीर्थतः ॥२७॥ कालमानमिदं चादिजिनतीर्थप्रवृत्तितः । श्रीवीरतीर्थपर्यन्तं, यावद् ज्ञेयं विचक्षणैः ॥ २८ ॥

उपसर्गा १ स्तथा गर्भापहारो २ ऽभाविता सभा ३। चमरोत्पतनं ४ चन्द्रसूर्यावतरणं ५ तथा ॥ २९ ॥ हरेरमरकङ्कायां, गमनं ६ स्त्रीजिनेश्वरः ७। हरिवंशकुलोत्पत्ति ८ रर्चा चासंयतात्मनाम् ९ ॥ ३० ॥ साष्टकशतस्य सिद्धिर्ज्येष्ठावगाहनावताम् । अनन्तकालभावीनि, दशाश्चर्याण्यमून्यहो ॥ ३१ ॥ आद्यानि पञ्चाश्चर्याणि, तीर्थेऽन्त्यस्यापराणि तु । नेमिमल्लिशीतलश्रीसुविधिप्रथमार्हताम् ॥ ३२ ॥ नाभेयोऽष्टापदे वीरोऽपापायां पुरि निर्वृतः । वासुपूज्यश्च चम्पायां, नेमी रैवतकाचले ॥ ३३ ॥ अन्ये संमेतशिखरे, पर्यङ्कासनसंस्थिताः । श्रीनेमिवीरवृषभाः, कायोत्सर्गासनाः परे ॥ ३४ ॥ आद्यः षड्भिरुपवासैर्द्वाभ्यां वीरः शिवं गतः । शेषा मासक्षपणेन, तपसा निर्वृतिं ययुः ॥ ३५ ॥ आद्यः सहस्रैर्दशभिः, षड्भिस्तैर्विमलो जिनः । अनन्तजित्सप्तभिस्तैः, श्रीशान्तिर्नवभिः शतैः ॥ ३६ ॥ सप्तमैकोनविंशौ च, पञ्चभिः पञ्चभिः शतैः । सिद्धः पद्मप्रभः सार्द्धं, त्रिभिरष्टोत्तरैः शतैः ॥ ३७ ॥ नेमिः षट्त्रिंशदधिकैः, साधूनां पञ्चभिः शतैः । षड्भिः शतैर्वासुपूज्यो, धर्मः साष्टशतेन च ॥ ३८ ॥ त्रयस्त्रिंशत्साधुयुक्तः, पार्श्वनाथः शिवं ययौ । एकाकी चरमः स्वामी, सहस्रेणान्विताः परे ॥ ३९ ॥ अष्टात्रिंशत्सहस्राणि, पञ्चाशीतिसमन्विता । चतुःशती जिनैः सार्द्धं, निर्वृता सर्वसंख्यया ॥ ४० ॥ तृतीयषष्ठनवमद्वादशा अपराह्णके । शेषाः श्रेयांसपर्यन्ताः, पूर्वाह्णे वृषभादयः ॥ ४१ ॥ धर्मारनमिवीराश्चापररात्रे शिवं गताः । शेषास्तु पूर्वरात्रेऽष्टौ, सिद्धाः श्रीविमलादयः ॥ ४२ ॥

इन्द्रभूतिरग्निभूतिर्वायुभूतिरमी त्रयः । सहोदरास्तथा व्यक्तसुधर्माणौ द्विजोत्तमौ ॥ ४३ ॥ षष्ठो मण्डितपुत्राख्यो, मौर्यपुत्रश्च सप्तमः । अकम्पितोऽचलभ्राता, मेतार्यश्च प्रभासकः ॥ ४४ ॥ अमी गणधरा एकादश श्रीचरमप्रभोः । अथैषां परिवारादिस्वरूपं किञ्चिदुच्यते ॥ ४५ ॥ वसुभूतिसुताः पृथ्वीकुक्षिजाः प्रथमे त्रयः । गोर्बरग्रामवास्तव्या, वेदवेदाङ्गपारगाः ॥ ४६ ॥ कोल्लाकाख्यसन्निवेशवास्तव्यौ तुर्यपञ्चमौ । वारुणीमातृकस्तत्र, तुरीयो धनमित्रभूः ॥४७॥ पञ्चमो भद्दिलाकुक्षिरत्नं धम्मिलनन्दनः । उपास्यमानौ द्वावेतौ, शिष्याणां पञ्चभिः शतैः ॥४८॥ तथा मौर्यसन्निवेशवासिनौ षष्ठसप्तमौ । धनदेवसुतः षष्ठः, सप्तमो मौर्यनन्दनः ॥४९॥ विजयातनुजौ सार्द्धशतत्रयपरिच्छदौ । देशाचाराद्विरुद्धा, पृथक्पितृकता तयोः ॥ ५० ॥ तत्र देशे कुले ह्यस्मिन्, मृते भर्त्तरि योषिताम् । आचीर्णत्वाद्विरुद्धो, धवान्तरपरिग्रहः ॥५१॥ जयन्तीतनुजो देवनन्दनोऽकम्पिताह्वयः । मिथिलापुरवास्तव्यः, शतत्रयपरिच्छदः ॥ ५२ ॥ नवमो कोशलावासी, नन्दाभूर्वसुवप्तृकः । तुङ्गिकाख्यसन्निवेशवास्तव्यो दशमो गणी ॥ ५३ ॥ स दत्तपुत्रो वरुणदेवागर्भसमुद्भवः । एकादशो राजगृहवासी द्विजकुलध्वजः ॥ ५४ ॥ सोऽतिभद्राकुक्षिरत्नं, सर्वेऽपि नवमादयः । उपासिता व्यक्तभक्तिसक्तैः शिष्यशतैस्त्रिभिः ॥५५॥ ज्येष्ठा १ च कृत्तिका २ स्वातिः ३ श्रुति ४ रर्यमदैवतम् ५ । मघा ६ ब्राह्म्यु ७ त्तराषाढा ८, मार्गा ९-श्विन्यौ १० च पुष्यभम् ॥ ५६ ॥ एकादशानां जन्मर्क्षाण्येतानि गणधारिणाम् । गृहस्थत्वादिपर्यायपरिमाणमथ ब्रुवे ॥ ५७ ॥ गार्हस्थ्येऽब्दानि पंचाशत्, छाद्मस्थ्ये त्रिंशदेव च । सर्वज्ञत्वे द्वादशाब्दा, नवतिश्चायुरादिमे ॥ ५८ ॥ अग्निभूतौ च षट्चत्वारिंशद् द्वादश षोडश । गार्हस्थ्यादिषु सर्वायुः, स्युश्चतुःसप्ततिः समाः ॥ ५९ ॥

॥ ५२४ ॥

वायुभूतौ द्विचत्वारिंशद्दशाब्दा दशापि च । गृहस्थत्वादिभावेषु, सर्वायुः सप्ततिः समाः ॥६०॥ व्यक्तस्वामिनि पञ्चाशद् , द्वादशाब्दा दशापि च । त्रिषु भावेषु सर्वायुरशीतिः शरदः स्मृताः ॥ ६१ ॥ पञ्चाशच्च द्विचत्वारिंशदष्टौ शरदः क्रमात् । सुधर्मस्वामिनो गार्हस्थ्यादिष्वायुश्च तच्छतम् ॥६२॥ संवत्सरास्त्रिपञ्चाशच्चतुर्दश च षोडश । गार्हस्थ्यादिषु षष्ठस्य, त्र्यशीतिरखिलं जनुः ॥६३॥ मौर्यस्याब्दाः पञ्चषष्टिश्चतुर्दश च षोडश । गृहित्वादिषु भावेषु, शतं पञ्चोनमन्वितम् ॥६४॥ अकम्पितस्याष्टचत्वारिंशन्नवैकविंशतिः । गृहित्वादिषु वर्षाणि, सर्वायुरष्टसप्ततिः ॥ ६५ ॥ नवमस्य षट्चत्वारिंशद् द्वादश चतुर्दश । त्रिषु भावेषु वर्षाणि, सर्वमायुर्द्विसप्ततिः ॥ ६६ ॥ मेतार्यस्य च षट्त्रिंशद्दश षोडश वत्सराः । त्रिषु पर्यायेषु प्रोक्तं, द्वाषष्टिः सर्वजीवितम् ॥ ६७ ॥ प्रभासस्य षोडशाष्टौ, क्रमात् षोडश वत्सराः । पर्यायेषु त्रिष्वशेषं, चत्वारिंशच्च जीवितम् ॥ ६८ ॥ सिद्धा एकादशाप्येते, गिरौ वैभारनामनि । विहितानशना मासं, पुरे राजगृहाभिधे ॥ ६९ ॥ नव सिद्धिं गता वीरे, नाथे जीवत्यथादिमः । सिद्धे प्रभौ द्वादशभिर्विंशत्याऽब्दैश्च पञ्चमः ॥७०॥ सुधर्मस्वामिनः शिष्यः, प्रशिष्यस्त्रिशलाभुवः । चरमः केवली जम्बूस्वामी चामीकरच्छविः ॥ ७१ ॥ स राजगृहवास्तव्य, ऋषभदत्तनन्दनः । धारणीकुक्षिसंभूत, आजन्म ब्रह्मचार्यभूत् ॥ ७२ ॥ षोडशाब्दानि गार्हस्थ्यं, छद्मस्थत्वं च विंशतिम् । सर्वज्ञत्वं चतुश्चत्वारिंशतं पर्यपालयत् ॥ ७३ ॥ वर्षाण्यशीतिं सर्वायुः, परिपूर्यान्तिमप्रभौ । शिवं गते चतुःषष्ट्या, वर्षैर्भेजे शिवश्रियम् ॥ ७४ ॥ अत्र च—अकम्पिताचलभ्रात्रोर्यन्मेतार्यप्रभासयोः । एकाऽभूद्वाचना तस्माद्वीरनेतुर्गणा नव ॥ ७५ ॥ एकवाचनिकः साधुसमुदायो भवेद्गणः । तेऽन्येषामर्हतां ज्ञेया, गणभृत्संख्यया समाः ॥ ७६ ॥ समुचिता गणाधीशाः, सर्वेषामर्हतां समे । स्युर्द्विपञ्चाशदधिकाश्चतुर्दश शता इह ॥ ७७ ॥ श्रीवीरस्वामिनः साधुसहस्राणि चतुर्दश । षट्त्रिंशच्च सहस्राणि, संयतीनां महात्मनाम् ॥ ७८ ॥ इदं किल चतुरशीतिसहस्रादिकमृषभादीनां तीर्थकृतां श्रमणपरिमाणं प्रधानसूत्रविरचनसमर्थान् श्रमणानधिकृत्य वेदितव्यं, इतरथा पुनः सामान्यश्रमणाः प्रभूततरा अपि तस्मिन् तस्मिन् ऋषभादिके आसीरन् इति नन्दीवृत्तौ गच्छाचारवृत्तौ च । श्राद्धानां लक्षमेकोनषष्ट्या युक्तं सहस्रकैः । लक्षत्रयं श्राविकाणामष्टादशसहस्रयुक् ॥ ७९ ॥ सर्वज्ञानां शताः सप्त, पञ्च मानसवेदिनाम् । सहस्रमेकमवधिज्ञानिनां त्रिशतान्वितम् ॥ ८० ॥ वैक्रियाणां शताः सप्त, सचतुर्दशपूर्विणाम् । त्रयः शता वादिवरमुनीनां च चतुःशती ॥ ८१ ॥

सर्वेऽष्टाविंशतिर्लक्षाः, सर्वेषां साधवोऽर्हताम् । अष्टाचत्वारिंशता च, सहस्रैरधिकाः स्मृताः ॥ ८२ ॥ संयतीनां चतुश्चत्वारिंशल्लक्षाः सहस्रकाः । षट्चत्वारिंशदेवाथ, षट्संयुक्ता चतुःशती ॥ ८३ ॥ लक्षाणि पञ्चपञ्चाशत्, श्रावकाणां गुणौकसाम् । सहस्रैरष्टचत्वारिंशतोपेतानि निश्चितम् ॥ ८४ ॥ एका कोटी पञ्च लक्षाण्यष्टात्रिंशत्सहस्रकाः । सर्वाग्रं श्राविकाणां च, सर्वेषामर्हतामिह ॥ ८५ ॥ षट्सप्ततिसहस्राढ्यं, लक्षमेकं शताधिकम् । सर्वेषामर्हतामुक्तं, सर्वाग्रं सर्ववेदिनाम् ॥ ८६ ॥ लक्षमेकं तथा पञ्चचत्वारिंशत्सहस्रकाः । शताः पञ्चैकनवतियुक्ता मानसवेदिनाम् ॥ ८७ ॥ लक्षमेकं त्रयस्त्रिंशत्सहस्राः सचतुःशताः । उक्ता जिनानां

सर्वेषामवधिज्ञानशालिनः ॥ ८८ ॥ त्रयस्त्रिंशत्सहस्राणि, शतानि नव चोपरि । अष्टानवत्युपेतानि, स्युश्चतुर्दशपूर्विणः ॥ ८९ ॥ लक्षद्वयं तथा पञ्चचत्वारिंशत्सहस्रकाः । अष्टाढ्ये द्वे शते सर्वे, लसद्वैक्रियलब्धयः ॥ ९० ॥ षड्विंशतिः सहस्राणि, लक्षमेकं शतद्वयम् । वादिनो मुनयः सर्वे, भवन्त्येवं समुचिताः ॥ ९१ ॥ उक्ता विशेषमुनयो, येऽमी गणधरादयः । तैर्वर्जिताः सर्वसाधुसंख्याः पूर्वनिरूपिताः ॥ ९२ ॥ सामान्यमुनिसंख्याः स्युः, सर्वेषामर्हतामिह । यथायोगं भावनीयास्ताः सर्वास्तात्त्विकैः स्वयम् ॥ ९३ ॥ एकोनविंशतिर्लक्षाः, षडशीतिः सहस्रकाः । एकपञ्चाशदधिकाः, सामान्यमुनयोऽखिलाः ॥ ९४ ॥ तथोक्तं—"गणहर १ केवलि २ मण ३ ओहि ४ पुव्वि ५ वेउव्वि ६ वाइ ७ मुणिसंखं । मुणिसंखाए सोहिय नेया सामन्नमुणिसंखा ॥ ९५ ॥" द्वाविंशतिः सहस्राणि, तथा नव शतानि च । वृषभस्यानुत्तरौपपातिका मुनयो मताः ॥ ९६ ॥ श्रीनेमिपार्श्ववीराणां, षोडश द्वादशाष्ट च । क्रमाच्छतास्ते शेषाणां, न ज्ञायन्तेऽधुनाऽर्हताम् ॥ ९७ ॥ येषां जिनानां यावन्तः, शिष्यास्तै रचितानि च । प्रकीर्णकानि तावन्ति, तेषामित्युदितं श्रुते ॥ ९८ ॥ तावन्त एव प्रत्येकबुद्धा अपि निरूपिताः । प्रकीर्णकानां ब्रूमोऽथ, स्वरूपं किंचिदागमात् ॥ ९९ ॥ अर्हदुक्तानुसारेण, श्रमणा यन्महाधियः । रचयन्तीह तत्सर्वं, शास्त्रं ज्ञेयं प्रकीर्णकम् ॥ ११०० ॥ उत्कालिकमङ्गबाह्यं, दशवैकालिकादिदिकम् । अङ्गबाह्यं कालिकं यच्चोत्तराध्ययनादिकम् ॥ १ ॥ प्रकीर्णकानि सर्वाणि, तानि ज्ञेयानि धीधनैः । प्रत्येकबुद्धैरन्यैर्वा, रचितानि गणिव्रजैः ॥ २ ॥ अत्र च मतत्रयं—श्रीऋषभादिजिनानां चतुरशीतिसहस्रादि-

प्रमाणैः स्वस्वतीर्थभाविभिश्चतुर्विधबुद्ध्युपेतैरपरिमितैः साधुभिर्विरचितानि अपरिमितान्येव प्रकीर्णकानीत्यन्ये, ऋषभादिजिनानां स्वस्वतीर्थभाविभिरपरिमितैः प्रत्येकबुद्धैर्विरचितानि अपरिमितान्येव प्रकीर्णकानीत्यपरे, इत्याद्यर्थतो नन्दीसूत्रवृत्तितोऽवसेयं, गच्छाचारवृत्तिर्वा विलोकनीयेति । पट्टाधिपानसंख्येयान्, यावत् श्रीवृषभप्रभोः । अविच्छिन्ना गतिर्मोक्षे, प्रावर्त्तत महात्मनाम् ॥ ३ ॥ तानष्टौ चतुरो यावत्, क्रमात् श्रीनेमिपार्श्वयोः । त्रीन् वीरस्य परेषां तु, संख्येयान्निखिलार्हताम् ॥ ४ ॥ अन्तर्मुहूर्त्तेऽतिक्रान्ते, श्रीनाभेयस्य केवलात् । प्रावर्त्तत गतिर्मोक्षे, नेमेर्वर्षद्वये गते ॥ ५ ॥ पार्श्वस्य त्रिषु वर्षेषु, चतुर्षु चरमप्रभोः । शेषाणां पुनरेकादिदिवसातिक्रमे सति ॥ ६ ॥ अभूत्प्रवृत्तिः पूर्वाणामाद्यात्कुन्थुजिनावधि । असंख्यकालं संख्येयकालं पार्श्वजिनावधि ॥ ७ ॥ एकं सहस्रं वर्षाणां, महावीरस्य साऽभवत् । एतावान् पूर्वविच्छेदकालोऽपि सकलार्हताम् ॥ ८ ॥ परं वर्षसहस्राणां, विंशतिश्चरमेशितुः । पार्श्वस्य नासौ सर्वेषामातीर्थं परमं श्रुतम् ॥ ९ ॥ श्रुतेष्वङ्गादिष्वबद्धा, ज्ञानिभिश्च प्रकाशिताः । आदेशास्ते शताः पश्चान्त्यस्यान्येषामनेकधा ॥ १० ॥ कुरुटोत्कुरुटौ साधू, सप्तमं नरकं गतौ । बाल्येऽङ्गुष्ठाग्रसंपर्कान्मेरुर्वीरेण कम्पितः ॥ ११ ॥ विहाय वलयाकारं, स्वयंभूरमणाम्बुधौ । सन्ति पद्मानि मत्स्याश्च, समग्राकारशालिनः ॥ १२ ॥ अत्यन्तं स्थावरा सिद्धा, मरुदेवा महासती । असंदब्धाः श्रुते ज्ञेया, आदेशा एवमादयः ॥ १३ ॥ श्रेयांसः श्रावको मुख्यः, श्रीनाभेयजिनेशितुः । ते नन्दसूर्यशङ्खा-

१ महानिशीथे (३-९४) एतस्याधिकारस्य 'जह जिणवरो गिरिं चाले' इत्यादिना स्पष्टमुक्तत्वात् नावद्धता ।

ख्यास्त्रयाणां नेमितोऽर्हताम् ॥ १४ ॥ सुभद्रा महासुव्रता, सुनन्दा सुलसापि च । मुख्याः स्युः श्राविका
आद्यनेमिपार्श्वान्तिमार्हताम् ॥ १५ ॥ शेषाणां त्वप्रसिद्धा इति । इन्द्रभूतिर्गणी मुख्यश्चन्दना च प्रवर्तिनी ।
श्रेणिको नृपतिर्भक्तः, सम्यक्त्वं क्षायिकं दधत् ॥ १६ ॥ यक्षः श्रीवर्द्धमानस्य, मातङ्गो गजवाहनः । द्विभुजो १५
नकुलोपेतापसव्यकरपङ्कजः ॥ १७ ॥ वामे करे च रुचिरं, दधानो बीजपूरकम् । श्यामाङ्गकान्तिः पुष्णाति,
श्रियं श्रीवीरसेविनाम् ॥१८॥ युग्मम् । देवी सिद्धायिका सिंहवाहनाढ्या चतुर्भुजा । पुस्तकाभयसंयुक्तापसव्यक-
रयामला ॥ १९ ॥ बीजपूरकवीणाढ्यवामपाणिद्वया सताम् । श्रीवीरभक्ता हरितवर्णा दिशतु वाञ्छितम् ॥२०॥
युग्मम् । यथाऽस्यामवसर्पिण्यामेवं प्राप्ता महोदयम् । चतुर्विंशतिरर्हन्तस्तथा भाव्याः परास्वपि ॥२१॥ इहैतदव- २०
सर्पिणीभरतवर्षभूयोषितो, विशेषसुषमाकृतो जिनवराश्चतुर्विंशतिः । मयाऽप्रतिमया मुदा प्रतिहतामघा-
श्चिन्मयाः, स्तुता विगतविक्रियाः कृतधियां क्रियासुः श्रियम् ॥२२॥ (पृथ्वी) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजय-
श्रीवाचकेन्द्रांतिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्व- २४
प्रदीपोपमे, सर्गोऽयं प्रथितो निसर्गसुभगो द्वात्रिंश एषोऽभवत् ॥ २३ ॥



इति श्रीलोकप्रकाशे द्वात्रिंशत्तमः सर्गः समाप्तः ॥

## ॥ अथ त्रयस्त्रिंशत्तमः सर्गः प्रारभ्यते ॥

तथाऽस्यामवसर्पिण्यां, प्रथमश्चक्रवर्त्तिषु । अभूद्भरत इत्यादिदेवस्य तनुजोऽग्रिमः ॥ १ ॥ सुमङ्गलाकुक्षिरत्नं,
पञ्चचापशतोच्छ्रितः । स्वर्णरुक् चतुरशीतिपूर्वलक्षसुजीवितः ॥ २ ॥ साधिताशेषषट्खण्डः, स चादर्शगृहेऽ-
न्यदा । निरङ्गुलीयकां पश्यन्नङ्गुलीं पर्यभावयत् ॥ ३ ॥ शरीरासारतां द्राक् च, लेभे केवलमुज्ज्वलम् । प्रदत्त-
साधुवेषश्च, शक्रेणागत्य वन्दितः ॥४॥ युग्मम् । सहस्रैर्दशभी राज्ञां, सेवितः स्वीकृतव्रतैः । विहृत्य लक्षं पूर्वा- ५
णामवाप परमं पदम् ॥ ५ ॥ इति भरतः ॥

अयोध्यायां नगर्यां च, द्वितीयश्चक्रवर्त्त्यभूत् । स्वर्णवर्णः सार्द्धचतुर्धनुःशतसमुच्छ्रितः ॥ ६ ॥ द्वासप्ततिपूर्व-
लक्षजीवितः सगराह्वयः । सुमित्रविजयक्ष्मापयशोमत्योस्तनूद्भवः ॥ ७ ॥ युग्मम् । अजितस्यार्हतश्चासौ,
पितृव्यतनयोऽभवत् । यतः सुमित्रविजयो, जितशत्रुश्च सोदरौ ॥ ८॥ सोऽपि स्वपुत्रमरणप्राप्तवैराग्यवासनः ।
अजितस्यार्हतः पार्श्वे, परिव्रज्य शिवं ययौ ॥ ९ ॥ इति सगरः ॥ १०

अभून्नगर्यां श्रावस्त्यां, समुद्रविजयो नृपः । भद्रा प्रियतमा तस्य, मघवा तनयस्तयोः ॥ १० ॥ द्विचत्वारिंश-
दध्यर्द्धा, धनुषां वपुरुच्छ्रयः । लक्षाणि पञ्च वर्षाणामायुष्कं चास्य कीर्त्तितम् ॥ ११ ॥ संसारानित्यतां ध्यायन्,
जातवैराग्यवासनः । सोऽगाद्गृहीतचारित्रः, स्वर्गलोकं तृतीयकम् ॥ १२ ॥ इति मघवा ॥ १३

कुरुजङ्गलदेशे च, हस्तिनागपुरे पुरे । कुरुवंशे महीशोऽभूदश्वसेनाह्वयो महान् ॥ १३ ॥ सहदेवी च तद्भार्या, शीलसौभाग्यशालिनी । सनत्कुमारस्तत्पुत्रश्चतुर्थश्चक्रवर्त्यभूत् ॥ १४ ॥ अक्ष्यर्द्धान्येकचत्वारिंशद्धनूंषि स उच्छ्रितः । तथा त्रिवर्षलक्षायुर्जगदुत्कृष्टरूपवान् ॥ १५ ॥ तस्मिन्नवसरे कोऽपि, सौधर्मेन्द्रस्य पर्षदि । ईशानस्वर्गवास्तव्यः, सङ्गमाख्यः सुरोऽविशत् ॥ १६ ॥ तत्तेजसा सुराः सर्वे, प्रत्यूषे तारका इव । तार्किका इव वा जैने, बभूवुर्गततेजसः ॥ १७ ॥ गते तस्मिन् सुरैः सर्वैः, पृष्टः सौधर्मनायकः । जगावयं भवे पूर्वे, भावितात्माऽभवन्मुनिः ॥ १८ ॥ आचामाम्लवर्द्धमानं, तत्राकार्षीत्तपो महत् । तेजस्तदनुभावेन, बिभर्त्ययमनुत्तरम् ॥ १९ ॥ स्वामिन्नन्यस्य कस्यापि, रूपमस्त्यधुनेदृशम् ? । इति पृष्टः सुराधीशः, शशंसैवमसंशयः ॥ २० ॥ रूपं सनत्कुमारस्य, वर्त्तते चक्रवर्त्तिनः । देवेभ्योऽप्यधिकं नास्मादृशां वचनगोचरः ॥ २१ ॥ अश्रद्दधानौ ततः कौचिद्विप्रीभूयागतौ सुरौ । रूपं दिदृक्षू चक्री च, तदासीत्स्नानवेश्मनि ॥ २२ ॥ अभ्यक्तस्त्यक्तशृङ्गारो, रूपमालोक्य विस्मितौ । तौ प्रत्युवाच द्रष्टव्यं, रूपं मयि सभास्थिते ॥ २३ ॥ ततः स्नातोऽलङ्कृतश्च, दृष्टः सिंहासने स्थितः । ताभ्यां विषण्णचित्ताभ्यां, तेन पृष्टे च कारणे ॥ २४ ॥ रोगोत्पत्तिं जगदतुस्ततः स्वीकृत्य संयमम् । सहते स्म गदान् सप्त, सप्तवर्षशतावधि ॥२५॥ तथोक्तं योगशास्त्रवृत्तौ—कच्छू १ शोष २ ज्वर ३ श्वासा ४ऽरुचि ५ कुक्ष्य ६ क्षिवेदनाः ७ । सप्ताधिसहे पुण्यात्मा, सप्त वर्षशतानि सः ॥२६॥" उत्तराध्ययनवृत्तेरयमेवाभिप्रायः, ऋषिमण्डले तु—कंडू १ अभत्तसद्धा २ तिव्वा विअणा उ अच्छि ३ कुच्छीसुं ४ । कासं ५ सासं च ६ जरं ७ अहियासइ सत्त वाससए ॥ १ ॥ मरणसमाधिप्रकीर्णके तु—"सोलस रोगायंका सहिया मइचक्किणा चउत्थेण । वाससहस्सा सत्त उ सामन्नधुरं उवगएणं ॥ १ ॥" सप्त वर्षसहस्राण्यष्टादश रोगानधिसह्येति तु उत्तराध्ययनदीपिकायां । शक्रप्रशंसाऽश्रद्धानात्, पुनर्देवैः परीक्षितः। प्राप्तश्चिकित्सां नाकांक्षीत्तृतीयं स्वर्गमुत्तमः ॥ २७ ॥ इति सनत्कुमारः ॥

श्रीशांतिः पञ्चमश्चक्री, षष्ठः कुन्थुजिनेश्वरः । अरोऽर्हन् सप्तमस्तेषां, चरितं प्राग्निरूपितम् ॥ २८ ॥ हास्तिनाख्ये पुरेऽनन्तवीर्योऽभूत्पृथिवीपतिः । रेणुकायाः स्वसा तस्य, प्रियाऽभूजितशत्रुजा ॥ २९ ॥ तस्मिन्नवसरे दुःस्थो, विप्रो व्युच्छिन्नवंशकः । अग्निनामा भ्रमन् प्राप, तापसाश्रममेकदा ॥ ३० ॥ सुतत्वेनाग्रहीदग्निं, जमः कुलपतिश्च तम् । ततः स जमदग्न्याख्यस्तापसोऽभून्महातपाः ॥ ३१ ॥ जैनशैवौ तदा वैश्वानरधन्वन्तरी सुरौ । विवदन्तौ नृलोकं चागतौ धर्मं परीक्षितुम् ॥ ३२ ॥ परीक्षणीयो जैनेषु, प्रथमं दृश्यतेऽत्र यः । परीक्ष्यस्तापसप्रष्ठः, शैवेष्विल्यत्र संगरः ॥ ३३ ॥ तदा भावयतिः पद्मरथाख्यो मिथिलापतिः । गुरुश्रीवासुपूज्यान्ते, गच्छन् व्रतजिघृक्षया ॥ ३४ ॥ प्रातिलोमानुलोमाभ्यामुपायैर्विविधैरसौ । परीक्षितो न चुक्षोभ, पवनैरिव मन्दरः ॥३५॥ युग्मम् । आगच्छतां ततो देवौ, जमदग्निं परीक्षितुम् । चटकौ दम्पती भूत्वा, तस्य श्मश्रुण्यतिष्ठ-

१ सप्तानां तीव्राणां सप्तवर्षशती यावत् सामान्यानां षोडशानां षोडशवर्षसहस्रीं यावत् सहनं, रोगाणां षोडश प्रकारा इति प्रसिद्धेः षोडश इति, तत्रापि सामान्येतरयोः कयोश्चिदधिकयोः विवक्षणात् अष्टादश रोगाः, आयुःप्रश्नस्तु प्राक् श्रीशान्तेर्भवनात् नास्त्येव ।

ताम् ॥ ३६ ॥ अनुमन्यस्व मां कान्ते !, गत्वाऽऽयामि हिमालयम् । इत्यूचिवांसं चटकं, चटकाऽथैवमब्रवीत् ॥३७॥ द्रुतं नैति भवानन्यकान्तासक्तः स्वभावतः । लम्पटानां कुतो मोक्षः, परस्त्रीनागपाशतः ? ॥ ३८ ॥ स स्माहावश्यमेष्यामि, न चेद्गोघातपातकैः । गृह्येऽथवा विनश्यामि, पापैर्विश्वस्तघातिनाम् ॥ ३९ ॥ चटकोचे प्रियालीकैः, पर्याप्तं शपथान्तरैः । तापसस्यास्य पापेन, गृह्येऽहमिति शप्यताम् ॥ ४० ॥ ततः स तापसः क्रुद्धः, खगौ धृत्वा करेण तौ । उवाच मयि किं पापमीदृगाजन्मसुव्रते ? ॥ ४१ ॥ ऊचतुस्तौ खगौ पापं, पापर्षे ! किमतः परम् । अनुत्पादितपुत्रेण, यत्त्वया चर्यते तपः ॥४२॥ ततो भ्रष्टमनाः सोऽभूत्, स्त्रीपाणिग्रहणोत्सुकः । मिथ्यादृशां हि वैराग्यं, कुलटाचित्तचञ्चलम् ॥ ४३ ॥ अखिद्यत सुरो धन्वन्तरिस्तं वीक्ष्य तादृशम् । किमेभिस्तापसैर्मूढैरित्यभूदयमार्हतः ॥ ४४ ॥ भूरिकन्यं ययाचेऽसौ, जितशत्रुमृषिर्नृपम् । त्वामिच्छन्तीं ददामीति, सोऽवादीच्छापभीरुकः ॥ ४५ ॥ क्षामं भिक्षाचरं वीक्ष्य, निखिलाः कृतथूत्कृतीः । कुब्जीचक्रेऽसकौ शापादेकोनं कन्यकाशतम् ॥ ४६ ॥ रेणुक्रीडापरां लघ्वीं, रेणुकानामकन्यकाम् । फलैः प्रलोभ्य मामेषा, वृणोतीत्यवदन्नृपम् ॥ ४७ ॥ नृपेण दत्तामादाय, तां प्रसन्नः परा अपि । बद्धः कन्याः पटूकृत्य, वने नीत्वा पुपोष ताम् ॥ ४८ ॥ तातवत्परिपोष्यापि, सोऽथ कामवशंवदः । जरन्नरीरमद्बालां, श्लथाङ्गोऽप्यश्लथस्पृहः ॥ ४९ ॥ ऋतुकालेऽथ तेनोक्ता, सा बाला त्वत्कृते चरुम् । साधयामि यतस्ते स्यान्नन्दनो ब्राह्मणोत्तमः ॥ ५० ॥ साऽवग् द्वौ साधय चरू, तत्र ब्राह्मः कृते मम । अन्यः क्षात्रोऽनन्तवीर्यप्रियाया मत्स्वसुः कृते ॥ ५१ ॥

साधितौ द्वौ चरू तेन, ब्राह्मक्षत्रमहोनिधी । ततः साऽचिन्तयच्चित्ते, रेणुका दीर्घया दृशा ॥ ५२ ॥ मा भूत् सुतोऽपि मे मद्वदारण्यो हरिणादिवत् । ध्यात्वेति स्वयमादत् सा, क्षात्रतेजःकरं चरुम् ॥ ५३ ॥ द्वितीयं चापरा तेन, जातौ कुलविलक्षणौ । रामः पुत्रो रेणुकायाः, परस्याः कृतवीर्यकः ॥ ५४ ॥ कोऽपि विद्याधरो भ्रष्टनभोगतिरुपासितः । रामेण विद्या तद्दत्ता, पार्शवी साधिता क्रमात् ॥ ५५ ॥ स्वसृप्रेम्णाऽन्यदा चागाद्रेणुका हस्तिनापुरे । भुक्ता चानन्तवीर्येण, श्याली जातसुताऽप्यभूत् ॥ ५६ ॥ ससुतामपि तां निन्ये, जमदग्निर्निजं गृहम् । क्रुद्धश्च पर्शुरामस्तां, सडिम्भां मातरं न्यहन् ॥ ५७ ॥ तद्भगिन्योदितं पत्ये, क्रुद्धोऽथानन्तवीर्यराट् । क्रीडनार्थं गते रामे, द्रागममर्द तदाश्रमम् ॥ ५८ ॥ ततश्च पर्शुरामेणानन्तवीर्यो निपातितः । कृतवीर्यस्ततस्तस्य, पदेऽभूत्पृथिवीपतिः ॥ ५९ ॥ तेन क्रुद्धेन नीतश्च, जमदग्निर्यमालयम् । रिपोस्ताते हते स्वस्य, तातदुःखं हि शाम्यति ॥ ६० ॥ ततश्च पर्शुरामेण, प्रज्वलत्पर्शुतेजसा । कृतवीर्यः क्षयं नीतो, निखिलैः क्षत्रियैः सह ॥ ६१ ॥ कृतवीर्यप्रिया तारा, ततो गुर्वी पलायिता । कृपया तापसैस्त्राता, स्वाश्रमे भूमिवेश्मनि ॥ ६२ ॥ क्रमाच्चतुर्दशस्वप्नसूचितोऽस्याः सुतोऽभवत् । चखाद भूमिमित्युक्तः, सुभूम इति तापसैः ॥ ६३ ॥ हस्तिनापुरसाम्राज्यं, रामः स्वीकृत्य भूतलम् । निष्क्षत्रियं सप्त वारांश्चकार क्रोधदुर्द्धरः ॥ ६४ ॥ अन्यदा क्षत्रियान्वेषी, सुभूमालङ्कृताश्रमे । जगाम रामस्तत्रास्य, जज्वाल परशुः क्रुधा ॥ ६५ ॥ कोऽप्यत्र क्षत्रियोऽस्तीति, पृष्टः कुलपतिर्जगौ । तापसाः क्षत्रियाः सन्तीत्युक्तेऽसौ व्यरमत्क्रुधः ॥ ६६ ॥

हतानां क्षत्रियेन्द्राणां, दंष्ट्रिकाभिरबीभरत् । स्थालमेकं महद्रामः, संग्रामोद्दामदोर्मदः ॥ ६७ ॥ य एताः पायसीभूताः, भोक्ष्यते स त्वदन्तकः । इति नैमित्तिकेनोक्तो, रामस्तन्निर्णिनीषया ॥ ६८ ॥ अवारितं पुरे सत्रागारं निर्माय तत्र च । दंष्ट्रस्थालाङ्कितं सिंहासनमादावतिष्ठिपत् ॥ ६९ ॥ विद्याधरो मेघनादः, सुतां पद्मश्रियं ददौ । सुभूमाय निमित्तज्ञगिरा तं चक्रिणं विदन् ॥ ७० ॥ सुभूमस्तातवृत्तान्तं, ज्ञात्वा गदितमम्बया । क्रुद्धो रामं संजिहीर्षुर्द्राग् ययौ हस्तिनापुरम् ॥ ७१ ॥ गत्वा सिंहासने तस्मिन्निषण्णः सिंहशाववत् । दंष्ट्रास्ताः पायसीभूता, बुभुजे च भुजोर्जितः ॥७२॥ हतेषु मेघनादेन, तदाऽऽरक्षिद्विजातिषु । रामोऽप्यागात्तत्र कालदूताहूत इव द्रुतम् ॥ ७३ ॥ मुक्तः सुभूमे रामेण, परशुः प्रज्वलन्नपि । स्वयमेव शशामाशु, न्यायभाजीव दुर्जनः ॥७४॥ चक्रत्वीभवत्स्थालं, सुभूमप्रेरितं ततः । शिरश्चिच्छेद रामस्य, पुण्यतः किं न संभवेत् ? ॥ ७५ ॥ त्रिःसप्तकृत्वो निर्विप्रं, स चकार महीतलम् । वैरनिर्यातनं कुर्वस्त्रिगुणं मत्सरोल्बणः ॥ ७६ ॥ निर्जिताशेषषट्खण्डः, स चण्डक्रोधदुर्द्धरः । विप्रघातान्निववृते, न मनागपि निर्दयः ॥ ७७ ॥ सोऽन्यदा धातकीखण्डभरतं जेतुमुत्सुकः । निवारितोऽपि मन्त्राद्यैर्भृशं दुःशकुनैरिव ॥ ७८ ॥ रत्नेन चर्मणाऽम्भोधिं, तरीतुमुपचक्रमे । अभूच्च बुद्धिर्देवानां, चर्मरत्नभृतां तदा ॥ ७९ ॥ विश्रान्त्येवेदमन्येऽमी, विश्राम्यामि क्षणं त्वहम् । युगपच्चिन्तयित्वेति, सर्वैस्तन्मुमुचे श्लथम् ॥ ८० ॥ त्रिभिर्विशेषकम् । ततः स चर्मणा तेन, पापेनेव गरीयसा । ममज्ज वार्द्धौ देहेन, दुर्गतावात्मना पुनः ॥ ८१ ॥ तथोक्तं—"तुर्यात्कषायात्पञ्चत्वं, प्राप्य षट्खण्डभूपतिः । सप्तमं नरकं प्रापदष्टमश्चक्रवर्त्त्यसौ ॥८२॥" अष्टाविंशतिकोदण्डोत्तुङ्गदेहोऽयमीरितः । षष्टिवर्षसहस्रायुश्चामीकरतनुद्युतिः ॥८३॥ इति सुभूमः ८ ।

आसीद्वाणारसीनाम, काशीदेशे महापुरी । तत्र पद्मोत्तरो नाम, राजा ज्वाला च तत्प्रिया ॥ ८४ ॥ अत्र—जम्म विणीय १ अउज्झा २ सावत्थी ३ पंच हत्थिणपुरंमि ८ । वाणारसि ९ कंपिल्ले १० रायगिहे च्चेव ११ कंपिल्ले १२ ॥ १ ॥ इत्यावश्यकनिर्युक्त्यभिप्रायेण नवमस्य चक्रिणो वाणारसी जन्मपुरी प्रतीयते, श्रीशान्तिसूरिकृताष्टादशोत्तराध्ययनवृत्तौ त्वस्य कुरुदेशे हस्तिनागपुरमुक्तमस्तीति ज्ञेयम् । विष्णुनामा तयोः पुत्रो, हर्यक्षस्वप्नसूचितः । महापद्मः परश्चक्रिसूचकस्वप्नसूचितः ॥ ८५ ॥ तदोज्जयिन्यां श्रीवर्मा, राजा तस्य पुरोहितः । नमुचिर्नाम मिथ्यादृगभूत्तस्मिन् पुरेऽन्यदा ॥ ८६ ॥ मुनिसुव्रतनाथस्य, विनेयः सुव्रताह्वयः । सूरिर्भूरिपरीवारो, विहरन् समवासरत् ॥ ८७ ॥ गच्छतस्तन्नमस्यार्थं, पूर्जनान् वीक्ष्य भूपतिः । उपाचार्यमुपेयाय, युक्तो नमुचिनाऽमुना ॥८८॥ वदन् वितण्डावादेन, नमुचिर्गुरुभिस्सह । शिष्येण लघुनैकेन, सद्यो वादे पराजितः ॥८९॥ विलक्षीभूतवदनस्ततो द्विष्टः स दुष्टधीः । मुनीन् हन्तुं गतो रात्रौ, देवेन स्तम्भितो दृढम् ॥ ९० ॥ प्रातर्नृपादिभिर्लोकैर्दृष्टः कष्टेन मोचितः । धिक्कृतो ह्रीविलक्षास्यः, स ययौ हस्तिनापुरम् ॥९१॥ मन्त्री जातो महापद्मयुवराजस्य तत्र सः । जग्राह सिंहसामन्तं, दुष्टं जनपदद्रुहम् ॥ ९२ ॥ ततो वरं वृणीष्वेति, महापद्मोऽब्रवीदमुम् । स स्माहास्तु वरः कोशे, याचिष्येऽवसरे विभो ! ॥ ९३ ॥ ततो महापद्ममात्राऽकारि जैनरथो महान् । लक्ष्मीनाम्न्या सपत्न्या च, शैव्या ब्राह्मरथोऽत्र च ॥ ९४ ॥ आदावुत्सवमाश्रित्य, विवादे प्रसृते तयोः । द्वयोः साम्याय

॥ ५३० ॥

भूपस्तौ, रथौ द्वावप्यवारयत् ॥९५॥ महापद्मस्ततोऽध्यासीद्, धिग्मां जातमनर्थकम् । मयि सत्यपि यन्मातुर्हतो रथमनोरथः ॥९६॥ अहो ममापि न मनाग्, पित्रा दाक्षिण्यमीक्षितम् । इति देशान्तरं द्रष्टुं, स मानी निरगात्ततः ॥९७॥ यदि राज्यमहं लप्स्ये, तदा मातुर्मनोरथम् । पूरयिष्यामि निर्माय, क्ष्मामर्हच्चैत्यमण्डिताम् ॥ ९८ ॥ ध्यायन्निति भुवि भ्राम्यन्, स लेभे विविधाः श्रियः । निधानानि नव प्राप, रत्नानि च चतुर्दश ॥ ९९ ॥ साधयित्वा च षट्खण्डराज्यं प्राज्यपराक्रमः । हस्तिनापुरमागत्य, स ननाम पितुः पदौ ॥ १०० ॥ स्त्रीरत्नं चास्य मदनावली नागवतीभवा । जनमेजयराजस्य, सुता चम्पापतेरभूत् ॥ १ ॥ सुव्रतस्वामिशिष्यस्य, सुव्रतस्यान्तिके मुनेः । पद्मोत्तरश्च विष्णुश्च, वैराग्यरसवासितौ ॥२॥ व्रतं जगृहतुः पद्मोत्तरस्तत्र ययौ शिवम् । विष्णुश्चोत्पन्नविविधलब्धिर्विहृतवान् भुवि ॥३॥ युग्मम् । महापद्मोऽभिषिक्तोऽथ, चक्रित्वेऽशेषपार्थिवैः । मातुर्मुदे रथं जैनं, पुरेऽभ्रमयदुत्सवैः ॥४॥ चकार भारतीं भूमिं, जिनचैत्यैरलङ्कृताम् । परःशतैः पुरग्रामदुर्गशैलवनादिषु ॥५॥ तस्थिवत्सु चतुर्मासीं, हस्तिनाख्यपुरेऽन्यदा । सुव्रतर्षिषु दुष्टात्मा, नमुचिर्जैनसाधुषु ॥ ६ ॥ महापद्मादयाचिष्ट, प्रभोर्न्यासीकृतं वरम् । सोऽपि तेनार्थितं राज्यं, ददौ यज्ञोत्सवावधि ॥७॥ युग्मम् । अथैनं पार्थिवं नव्यं, सर्वे सेवितुमैयरुः । पाखण्डिनो विना जैनमुनीन् छिद्रं तदेव च ॥ ८ ॥ पुरस्कृत्याब्रवीत्सोऽपि, साधूनाहूय संसदि । भो यूयं लोकमर्यादामपि वित्थ न किं जडाः ? ॥ ९ ॥ युग्मम् । यन्नन्तुं नागता नव्यनृपं तदथ गच्छत । दूरं विहाय मद्देशं, न चेन्निग्रहमाप्स्यथ ॥१०॥ बोधितोऽप्यवदद्दुष्टः, स चेत्सप्तदिनोपरि । यः कोऽपि भवतामत्र, स्थाता हन्तव्य एव सः ॥ ११ ॥ ततो लब्धिमतैकेन, साधुना विष्णुमाह्वयन् । सूरयो वत्सरशतान्, षष्टिं तीव्रतपोजुषम् ॥ १२ ॥ ततो विष्णुकुमारेण, बोधितोऽपि कदाग्रही । पदत्रयमितं स्थानं, याचितस्तद्ददौ क्रुधा ॥ १३ ॥ त्रिपद्याः परतस्तिष्ठन्, शीर्षच्छेद्यो भवत्विति । तेनोक्ते क्रुधितो विष्णुर्विचक्रे वैक्रियं वपुः ॥१४॥ द्वाभ्यामाक्रम्य पादाभ्यां, प्राक्प्रत्यग्वार्द्धिवेदिके । नमुचेरमुचन्मूर्ध्नि, तृतीयं चरणं ततः ॥ १५ ॥ इत्युपदेशमालाकर्णिकाद्यभिप्रायः, त्रिषष्टीयपद्मचरित्रोत्तराध्ययनवृत्त्याद्यभिप्रायस्त्वेवं—अपातयत्पातकिनं, नमुचिं भूतले ततः । एत्य ज्ञातस्वरूपेण, महापद्मेन चक्रिणा ॥ क्षमितः शमितो देवाङ्गनाभिः शमगीतिभिः ॥ १६ ॥ नतः स्तुतो जनैः सर्वैः, प्रशशाम महाशयः । आलोचितातिचारोऽसौ, केवलं प्राप्य निर्वृतः ॥ १७ ॥ कालान्तरे महापद्मश्चक्रवर्त्यपि चिन्तयन् । संसारासारतां दीक्षां, कक्षीकृत्य ययौ शिवम् ॥ १८ ॥ त्रिंशदब्दसहस्रायुस्तुङ्गश्चापानि विंशतिम् । नवमोऽनवमश्चक्री, महापद्मोऽयमीरितः ॥ १९ ॥ इति महापद्मः ॥

महाहरिरभूद्राजा, काम्पील्यपुरभूपतिः । तस्य मेराऽभिधा भार्या, हरिषेणः सुतस्तयोः ॥ २० ॥ साधिताशेषषट्खण्डो, दशमश्चक्रवर्त्यसौ । कदाचिच्चिन्तयामास, चतुरश्चतुरोचितम् ॥ २१ ॥ मया समृद्धिर्लब्धेयं, प्राग्भवाचरितैः शुभैः । ततोऽमुत्र हितं कुर्वे, भविष्यद्भद्रसिद्धये ॥ २२ ॥ कक्षीकृत्य ततो दीक्षां, तपः कृत्वा च दुष्करम् । अवाप्य केवलज्ञानं, स लेभे शाश्वतं सुखम् ॥ २३ ॥ दशवर्षसहस्रायुः, स्वर्णकान्तिर्महामतिः । कोदण्डान्युच्छ्रितः पञ्चदशासौ कीर्त्तितः श्रुते ॥ २४ ॥ इति हरिषेणः ॥

अश्वसेनाभिधोऽथासीद्राजा राजगृहे पुरे । वप्रा तस्य प्रिया प्रेष्ठा, जयनामा तयोः सुतः ॥ २५ ॥ एकादशश्चक्रवर्त्ती, सोऽन्यदा भावयन् हृदि । भवस्वरूपं संप्राप्तवैराग्यो जगृहे व्रतम् ॥ २६ ॥ स द्वादशधनुस्तुङ्गः, प्राप्य केवलमुज्ज्वलम् । आयुर्वर्षसहस्राणि, त्रीण्यापूर्य ययौ शिवम् ॥ २७ ॥ इति जयः ॥

ब्रह्माह्वयोऽभवद्राजा, काम्पील्यपुरभूपतिः । चुलनी दयिता तस्य, ब्रह्मदत्तस्तयोः सुतः ॥२८॥ अस्य च ब्रह्मराजस्य, चत्वारः सुहृदोऽभवन् । कणेरदत्तः कुरुराट्, काशीशः कटको नृपः ॥२९॥ दीर्घराजः कोशलेशः, पुष्पचूलोऽङ्गभूपतिः । पञ्चापि वर्षवारेण, तेऽवसन्नेकपत्तने ॥३०॥ युग्मम् । द्वादशाब्दं वयः प्राप्ते, ब्रह्मदत्ते पिताऽस्य च । व्यपद्यत शिरःशूलात्, शेषैर्मित्रैस्ततः क्रमात् ॥३१॥ बालस्य मित्रपुत्रस्य, पालनायानुवत्सरम् । एकैकेन स्थेयमिति, प्रतिज्ञातं हितावहैः ॥ ३२ ॥ युग्मम् । अथ तत्र स्थितो दीर्घराजो रक्तामरीरमत् । चुलनीं राज्यसर्वस्वैः, सहोदूढामिव स्त्रियम् ॥ ३३ ॥ मन्त्री च ब्रह्मराजस्य, धनुर्नामा व्यचिन्तयत् । मार्जार इव दुग्धस्य, राज्यस्यास्यैष रक्षकः ॥ ३४ ॥ मित्रपत्नीं रमयता, यशो गमयता निजम् । धिगनेन ब्रह्ममैत्री, शातिता लज्जया सह ॥ ३५ ॥ मैवं स्त्रीराज्यलुब्धोऽयं, ब्रह्मदत्तं वधीदिति । धनुर्वरधनुं पुत्रं, तद्रक्षायै न्ययोजयत् ॥ ३६ ॥ ब्रह्मदत्तोऽपि विज्ञाय, दीर्घराजकुचेष्टितम् । दृष्टान्तैर्विविधैः स्पष्टं, स्वाभिप्रायमदीदृशत् ॥ ३७ ॥ संयोज्य वायसं हंस्या, तौ हत्वा चैवमब्रवीत् । एताविव मया घात्यौ, नीतिविप्लवकारिणौ ॥ ३८ ॥ अहं काकस्त्वं पिकीति, बालो न्यायमदर्शयत् । जारेण चुलनीत्युक्ता, प्राह बालाद्बिभेषि किम् ? ॥ ३९ ॥ एकदा भद्रहस्तिन्या, संयोज्य मृगहस्तिनम् । ऊचाने पूर्ववद्बाले, राज्ञीं दीर्घो जगाविति ॥ ४० ॥ नावयोर्जीवितं कान्ते !, जीवत्यस्मिन् सुते तव । तदस्मै यदि वा प्रेम्णे, देयोऽवश्यं जलाञ्जलिः ॥ ४१ ॥ एतादृग्दुर्वधः पुत्रस्तादृक् प्रेमापि दुस्त्यजम् । इति दोलावलम्बिन्यां, चुलन्यामयमब्रवीत् ॥ ४२ ॥ नाहं न च त्वं सत्यस्मिन्, मत्सत्त्वे बहवोऽङ्गजाः । व्यापाद्योऽयमवश्यं तन्मां जीवन्तं यदीच्छसि ॥ ४३ ॥ ततः प्राणसमः पुत्रः, प्राणेशस्तु ततोऽधिकः । ध्यात्वेत्यात्मजघातं सा, तद्दाक्षिण्यादमन्यत ॥ ४४ ॥ उक्तं च–"नितम्बिन्यः पतिं पुत्रं, पितरं भ्रातरं क्षणात् । आरोपयन्त्यकार्येऽपि, दुर्वृत्ताः प्राणसंशये ॥ ४५ ॥" अथ मन्त्री धनुर्दीर्घराजमूचे कृताञ्जलिः । यामि तीर्थमहं जीर्णः, पुत्रस्त्वां सेविता मम ॥४६॥ धीमाननर्थं मा कार्षीत्, पतितोऽयमितो बहिः । इत्यूचे मन्त्रिणं दीर्घो, दम्भकोमलया गिरा ॥ ४७ ॥ त्वयैव त्वत्प्रभो राज्यं, सनाथं साक्षिणो वयम् । तत्तपस्व तपोऽत्रैव, स्वैरं सुरसरित्तटे ॥ ४८ ॥ ततः स्वर्गापगातीरे, सत्रागारे स तस्थिवान् । पुरान्तःपुरवार्त्तां च, विदन् सर्वां सुतोदिताम् ॥ ४९ ॥ कन्यका पुष्पचूलस्य, ब्रह्मदत्तकृतेऽर्थिता । चुलनीदीर्घराजाभ्यां, जिघांसुभ्यां छलेन तम् ॥ ५० ॥ सुतं हन्तुं जतुगृहं, चुलनीदीर्घकारितम् । ज्ञात्वा सुरङ्गां द्विक्रोशां, धनुश्छन्नामकारयत् ॥ ५१ ॥ तत्सर्वं पुष्पचूलस्य, धनुना ज्ञापितं रहः । ततः सोऽपि सुतास्थाने, दासीमप्रेषयद्वराम् ॥५२॥ जातेऽथ सुतवीवाहे, सुतं प्रैषीत् स्नुषान्वितम् । जातुके वासभवने, चुलनी कुलनीलिका ॥५३॥ बालं सुप्तं सुतं सद्यःपरिणीतं स्नुषान्वितम् । अन्त्यदेहाऽपि चुलनी, जिघांसामास धिक् स्मरम् ॥ ५४ ॥ जाग्रत्येव ब्रह्मदत्ते, मित्रचित्रकथारसैः । जज्वाल चुलनीक्षिप्तो, ज्वलनोऽ-

॥५३१॥

स्मिन् गृहेऽभितः ॥ ५५ ॥ ततोऽधःस्थसुरङ्गाक्ष्मां, मन्त्रिपुत्रेण दर्शिताम् । लूतापुटवदुद्भिद्य, निरगान्मित्रयुक् ततः ॥ ५६ ॥ धनुना धारितावश्वावारुह्यैतावुभावपि । निशि तस्यामयासिष्टां, पञ्चाशद्योजनीं द्रुतम् ॥ ५७ ॥ अतिश्रमाद्विपन्नौ तौ, तुरङ्गौ पञ्चहायनौ । ततः पद्भ्यां प्रस्थितौ तौ, छन्नं दीर्घचमूभयात् ॥ ५८ ॥ प्राच्यपुण्यानुभावेन, ब्रह्मदत्तः पदे पदे । पर्यणैषीद्बहुतरा, भूचरीः खेचरीः कनीः ॥ ५९ ॥ क्रमात्स भूरिसंपत्तिः, पितृमित्रैस्त्रिभिर्नृपैः । ससैन्यैः कृतसाहाय्यः, काम्पील्यपुरमभ्यगात् ॥६०॥ रुद्धेऽभितः पुरे तस्मिन्, दीर्घोऽपि निरगाद्बहिः । तयोः प्रववृते युद्धं, रामरावणयोरिव ॥६१॥ अयुध्यतामथ ब्रह्मदत्तदीर्घौ परस्परम् । शस्त्रच्छलेन रोषाग्निं, क्षिपन्तौ चिरसंचितम् ॥ ६२ ॥ खिन्नस्य ब्रह्मदत्तस्य, दुर्जये बलवत्यरौ । अलश्चक्रे करं चक्ररत्नं पुण्यमिवाङ्गभृत् ॥ ६३ ॥ दत्तायां दीर्घनिद्रायां, तेन दीर्घस्य दृप्यतः । चक्रिन्! जय जयेत्यस्मिन्, पुष्पाणि ववृषुः सुराः ॥ ६४ ॥ साधयित्वाऽथ षट्खण्डां, पृथिवीं प्रौढशासनः । निदानोपार्जितांश्चक्री, भोगान् भुङ्क्ते स्म गृद्धिभाक् ॥ ६५ ॥ मां प्राप्तराज्यमाकर्ण्य, तूर्णं मित्रापतेरिति । दुर्दशासु सहायं यं, चक्री स्माह द्विजं पुरा ॥ ६६ ॥ स चक्रिणमुपेयाय, दीयमाने च वाञ्छिते । ऐच्छत्पत्नीधिया भोज्यं, प्रतिगेहं सदक्षिणम् ॥ ६७ ॥ युग्मम् । आरभ्य स्वगृहाच्चक्री, ददौ तस्मै तदीहितम् । अन्यदा प्राक्संस्तुतोऽन्यस्तं विप्रः कोऽप्युपागमत् ॥ ६८ ॥ सोऽयाचिष्ट मुदा चक्रिभोज्यं कल्याणनामकम् । नेदं ते जीर्यतीत्युक्ते,कृपणोऽसीत्यवक् स तम् ॥ ६९ ॥ सकुटुंबं द्विजं चक्री, स्वं भोजनमभोजयत् । ततः सर्वं स्मरोन्मत्तं, तत्कुटुम्बमभून्निशि ॥ ७० ॥ मातृपुत्रसुतावधूस्नुषाश्वशुरभेदयुक् । तत्कुटुम्बं निशां सर्वामप्र(न्व)वर्त्तत मैथुने ॥ ७१ ॥ ततस्त्रपातुरस्त्यक्त्वा, कुटुम्बं निर्ययौ बहिः । विप्रोऽजानन् निजं दोषं, चक्रिणि द्वेषमुद्वहन् ॥ ७२ ॥ कश्चित्काणीकृताश्वत्थपत्रं कर्करिकाकणैः । ऐक्षत काप्यजापालं, सूक्ष्मवेधकृतश्रमम् ॥ ७३ ॥ चक्रिणं शिक्षयाम्यद्य, मत्कुटुम्बविडम्बिनम् । ध्यात्वेति तं वशीचक्रे, स द्रव्यैर्दक्षिणागतैः ॥ ७४ ॥ धृतच्छत्रो गजारूढो, योऽयमेति चमूवृतः । विनाशयेर्दृशौ तस्य, द्रुतं कर्कशकर्करैः ॥७५॥ स कुड्यान्तरितश्चक्रवर्त्तिपापैरिवेरितः । लघुहस्तस्तथाऽकार्षीत्, पार्श्वस्थेषु सुरेष्वपि ॥ ७६ ॥ जुष्टः सुरसहस्राभ्यामंसस्थाभ्यां नृनिर्जरः । पामरेणान्धलीचक्रे, क्षीणे पुण्ये वृथा बलम् ॥ ७७ ॥ तथोक्तं—"प्रतिकूलतामुपगते हि विधौ, विफलत्वमेति बहुसाधनता । अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ७८ ॥" ततश्च—धृतो नश्यन्नजापालश्चक्रियोधैरुदायुधैः । अदर्शयत्ताड्यमानो, विप्रं तत्र प्रयोजकम् ॥ ७९ ॥ क्रुद्धेन चक्रिणाऽघाति, स विप्रः सान्वयस्तथा । पुरोहितादयोऽन्येऽपि, मूलादुन्मूलिता द्विजाः ॥ ८० ॥ तथाप्यशान्तकोपेन, मन्त्रीत्यूचेऽथ चक्रिणा । ढौकय स्थालमेकैकं, नित्यं विप्राक्षिभिर्भृतम् ॥ ८१ ॥ श्लेष्मातकफलैः पूर्णं, सोऽपि पात्रमढौकयत् । स्पृशन् विप्राक्षिबुद्ध्या तन्मुमुदेऽन्तर्दुराशयः ॥ ८२ ॥ अनुभूयान्धतामेवं, क्रूरः षोडशवत्सरीम् । विपद्य रौद्रध्यानेन, सप्तमं नरकं ययौ ॥ ८३ ॥ सप्तवर्षशतायुष्कः, सप्त चापानि चोच्छ्रितः । चक्रभृत्सप्तमः पापात्, सप्तमीमगमद्ध्रुवम् ॥ ८४ ॥ इति ब्रह्मदत्तः ॥

गोत्रतः काश्यपाः सर्वे, वर्णतः स्वर्णकान्तयः । अमी भुवनविख्याताश्चक्रिणो द्वादशोदिताः ॥ ८५ ॥ पट्ट-

राज्ञ्यो द्वादशानां, चक्रिणां द्वादशाभवन् । स्त्रीरत्नाख्याश्चतुर्थाङ्के, सुभद्राद्या इमाश्च ताः ॥ १ ॥ "पढमा होइ सुभद्दा १ भद्द २ सुणंदा ३ जया य ४ विजया ५ य । कण्हसिरी ६ सूरसिरी ७ पउमसिरि ८ वसुंधरा ९ देवी ॥ १ ॥ लच्छिमति ११ कुरुमती १२ इत्थिरयणाण णामाइं ॥" तृतीयश्च चतुर्थश्च, गतौ स्वर्गं तृतीयकम् । अष्टमश्च द्वादशश्च, सप्तमीं जग्मतुर्भुवम् ॥ ८६ ॥ शेषाश्च चक्रिणो येऽष्टौ, गतास्ते परमं पदम् । प्राव्राजीद्भरतस्तत्र, नृपायुतपरिच्छदः ॥ ८७ ॥ भूपतीनां सहस्रेण, विरक्तेनान्विताः परे । प्राव्रजंश्चक्रिणः सर्वे, विनाऽत्र द्वादशाष्टमौ ॥ ८८ ॥ ऋषभाजितयोर्वारे, भरतः सगरः क्रमात् । जातौ तृतीयतुर्यौ च, धर्मशान्त्योरिहान्तरे ॥ ८९ ॥ त्रयश्च चक्रिणोऽर्हन्तः, शान्त्याद्याः स्वयमेव हि । अरमल्ल्योरन्तराले, सुभूमश्चक्रवर्त्त्यभूत् ॥ ९० ॥ नवमोऽभून्महापद्मो, मुनिसुव्रतवारके । दशमो नमिवारेऽभून्नमिनेम्यन्तरे जयः ॥ ९१ ॥ अभवद्ब्रह्मदत्तश्चान्तरे श्रीनेमिपार्श्वयोः । स्वरूपं चक्रिणामेवमुक्तं वक्ष्येऽथ शार्ङ्गिणाम् ॥ ९२ ॥

त्रिपृष्ठश्च १ द्विपृष्ठश्च २, स्वयंभूः ३ पुरुषोत्तमः ४ । तथा पुरुषसिंहश्च ५, पुरुषः पुण्डरीकतः ६ ॥ ९३ ॥ दत्तो ७ नारायणः ८ कृष्णो ९, वासुदेवा अमी नव । अचलो १ विजयो २ भद्रः ३, सुप्रभश्च ४ सुदर्शनः ५ ॥९४॥ आनन्दो ६ नन्दनः ७ पद्मो ८, राम ९ श्चेति यथाक्रमम् । अमी विष्णुविमात्रेया, बलदेवाः स्मृता नव ॥ ९५ ॥ अश्वग्रीव १ स्तारकश्च २, मेरको ३ मधुकैटभः ४ । निशुम्भ ५ बलि ६ प्रह्लाद ७ रावणा ८ मगधेश्वरः ९ ॥ ९६ ॥ नवानां वासुदेवानां, नवामी प्रतिविष्णवः । वासुदेवकरात्तस्वचक्रेण प्राप्तमृत्यवः ॥ ९७ ॥

अथ पूर्वभवाद्येषां, वच्मि किञ्चित् श्रुतोदधेः । जीवो वीरार्हतो राजगृहे यः षोडशे भवे ॥९८॥ कोट्यब्दायुर्विश्वभूतिर्युवराजात्मजोऽभवत् । वनेऽतिनन्दने सोऽगाद्वसन्ते रन्तुमन्यदा ॥९९॥ युग्मम् । विशाखनन्दिना नुन्नो, वने तत्र रिरंसुना । विश्वनन्दी नरेन्द्रस्तत्पितृव्यः स्वीयसूनुना ॥ २०० ॥ सामन्तविजयव्याजाद्विश्वभूतिं ततो वनात् । निःसा(निरसा)रयन्महासारः,( प्रेरयामास राज्युक्तः) सोऽप्यगात्तत्पुरं ततः ॥१॥ युग्मम् । विधेयं तं च वीक्ष्याशु, तस्मिन् व्रजति तद्वनम् । विशाखनन्दी प्रविष्टस्तत्रोचे स वशा भटैः ॥२॥ दम्भोऽयं मत्पितृव्येन, मां निस्सारयितुं वनात् । सुतं च तत्रासयितुं, कृत इत्युच्चुकोप सः ॥३॥ समीपस्थं कपित्थद्रुं, ततो मुष्ट्या प्रहृत्य सः । तत्फलौघं प्रपात्योर्व्यां, योधांस्तानभ्यधात् क्रुधा ॥ ४ ॥ मौलीन् वः पातयाम्येवं, भक्तिः स्याद्राज्ञि चेन्न मे । यूयं जीवत रे स्वामिसंयुता मदुपेक्षिताः ॥५॥ इत्युक्त्वाऽनर्थमूलत्वं, भोगानां परिभावयन् । संभूतमुनिपादान्ते, संयमे प्रत्यपादि सः (संयमं प्रतिपन्नवान्) ॥६॥ स दुष्करं तपः कुर्वन्नेकदा मथुरापुरे । मासक्षपणपर्यन्ते, गतो गोचरचर्यया ॥७॥ तत्राहत्यैकया धेन्वा, कृशीयान् पातितो भुवि । तत्रोद्वाहार्थमेतेन, दृष्टो विशाखनन्दिना ॥८॥ हसितश्च क्व ते बन्धो!, कपित्थच्यावनं बलम्? । ततः क्रुद्धः स तां धेनुं, शृङ्गे धृत्वाऽम्बरेऽक्षिपत् ॥९॥ निदानं कृतवांश्चैवं, तीव्रेण तपसाऽमुना । भूयिष्ठवीर्यो भूयासमजय्यस्त्रिदशैरपि ॥ १० ॥ निदानं तदनालोच्य, ततो मृत्वा समाधिना । अभूत्स्वर्गे महाशुक्रे, उत्कृष्टस्थितिकः सुरः ॥ ११ ॥ इतश्च पोतनपुरे, प्रजापतिरभून्नृपः । मृगावतीं स्वपुत्रीं स, वीक्ष्य कामवशोऽभवत् ॥ १२ ॥ देशे पुरेऽन्तःपुरे च, रत्नस्य जनिमीयुषः । नृप एव प्रभु-

रिति, लोकसंमतिपूर्वकम् ॥ १३ ॥ तां पत्नीकृत्य बुभुजे, तादृक्कर्मानुभावतः । विश्वभूतिसुरश्च्युत्वा, तस्याः कुक्षाववातरत् ॥१४॥ युग्मम् । त्रिपृष्ठवासुदेवोऽसावशीतिधनुरुच्छ्रितः । तथा चतुरशीत्यब्दलक्षायुरचलानुजः ॥ १५ ॥ इति त्रिपृष्ठः ॥

युद्धे सुरूपवेश्यार्थं, निर्जितोऽविन्ध्यशक्तिना । सुभद्रगुरुपादान्ते, दीक्षां पर्वतकोऽग्रहीत् ॥ १६ ॥ भूयासं तपसाऽनेनाविन्ध्यशक्तिविनाशकः । निदानमिति सोऽकार्षीत्, पुरे कनकवस्तुनि ॥ १७ ॥ ततो मृत्वा प्राणतेऽभूद्, देवश्च्युत्वा ततः पुनः । अभूत्पुरे द्वारवत्यां, ब्रह्मभूपोमयोः सुतः ॥ १८ ॥ स च सप्ततिचापोच्चो, द्विपृष्ठ इति नामतः । द्वासप्तत्यब्दलक्षायुर्विजयाख्यबलानुजः ॥ १९ ॥ इति द्विपृष्ठः ॥

धनदत्तनृपो द्यूते, बलिभूपेन निर्जितः । सुदर्शनगुरोः पार्श्वे, प्रव्रज्यां प्रतिपन्नवान् ॥ २० ॥ स च तीव्रं तपः कुर्वन्, श्रावस्त्यां विहरन् गतः । संस्मृतप्राक्तनद्वेषी, तत्र क्रोधवशंवदः ॥ २१ ॥ बलिभूपवधाय स्यामिति कृत्वा निदानकम् । उत्पन्नो लान्तके कल्पे, ततश्च्युत्वा स्थितिक्षये ॥ २२ ॥ रुद्रो राजा द्वारवत्यां, पृथिवी स्त्री तयोः सुतः । स्वयंभूर्वासुदेवोऽभूत्तृतीयो भूरिविक्रमः ॥ २३ ॥ त्रिभिर्विशेषकम् । स षष्टिवर्षलक्षायुः, षष्टिचापसमुच्छ्रितः । अनुजो भद्रसंज्ञस्य, बलदेवस्य कीर्त्तितः ॥ २४ ॥ इति स्वयंभूः ॥

समुद्रदत्तः प्राव्राजीत्, हृतायां निजयोषिति । श्रेयांसगुरुपादान्ते, प्रव्रज्योग्रं तपोऽतनोत् ॥ २५ ॥ चक्रे वधाय स्त्रीहर्त्तुः, श्रावस्त्यां स निदानकम् । मृत्वोत्पन्नः सहस्रारे, ततश्च्युत्वाऽऽयुषः क्षये ॥ २६ ॥ द्वारवत्यां


॥५३४॥

नृपः सोमः, सीता राज्ञी तयोः सुतः । पुरुषोत्तमनामाऽभूद्वासुदेवस्तुरीयकः ॥ २७ ॥ युग्मम् । स त्रिंशद्वर्षलक्षायुः, पञ्चाशद्धनुरुच्छ्रितः । अनुजः सुप्रभाख्यस्य, बलदेवस्य कीर्त्तितः ॥ २८ ॥ इति पुरुषोत्तमः ॥

सेवालनामा भूपालो, रणे वैरिपराजितः । कृष्णाख्यस्य गुरोः पार्श्वे, वैराग्यादग्रहीद्व्रतम् ॥ २९ ॥ निदानं सोऽरिघाताय, पुरे राजगृहेऽकरोत् । माहेन्द्रे च समुत्पन्नः, स्वर्गे च्युत्वा ततः पुनः ॥ ३० ॥ शिवो राजाऽम्मका राज्ञी, नगरेऽश्वपुराह्वये । ख्यातः पुरुषसिंहोऽभूत्, सनयस्तनयस्तयोः ॥३१॥ युग्मम् । अयं च पञ्चचत्वारिंशत्कोदण्डसमुच्छ्रितः । तथा दशाब्दलक्षायुः, ख्यातः सुदर्शनानुजः ॥ ३२ ॥ इति पुरुषसिंहः ॥

प्रियमित्रोऽपि भार्यायां, हृतायामाददे व्रतम् । श्रीगङ्गगुरुपादान्ते, काकन्द्यां च गतोऽन्यदा ॥ ३३ ॥ निदानमकरोत्तत्र, प्रियाहर्त्तुर्वधाय सः । मृत्वोत्पन्नो ब्रह्मलोके, ततः पूर्णस्थितिश्च्युतः ॥ ३४ ॥ लक्ष्मीवत्याः कुक्षिरत्नं, महाशिवनृपात्मजः । पुरुषपुण्डरीकाख्योऽभवच्चक्रपुरे हरिः ॥३५॥ त्रिभिर्विशेषकम् । पञ्चषष्टिसहस्राब्दजीव्यानन्दबलानुजः । एकोनत्रिंशतं तुङ्गश्चापान्ययमुदीरितः ॥ ३६ ॥ इति पुरुषपुण्डरीकः ॥

राजाङ्गजोऽभूल्ललितमित्रः स क्ष्मापपर्षदि । राज्यायोग्योऽयमित्यूचे, मन्त्रिणा भूपतेः पुरः ॥ ३७ ॥ राज्ञोऽपमाने जातेऽथ, भूपभूराददे व्रतम् । सागरस्य गुरोः पार्श्वे, मिथिलायां गतोऽन्यदा ॥३८॥ वधाय मन्त्रिणस्तस्य, निदानं चकृवानथ । सौधर्मे त्रिदशः सोऽभूत्, संपूर्णस्थितिकस्ततः ॥३९॥ वाराणस्यामग्निसिंहनृपशेषवतीसुतः ।

रामलक्ष्मणौ

वासुदेवोऽभवन्नाम्ना, दत्तो मत्तपराक्रमः ॥ ४० ॥ षट्पञ्चाशत्सहस्राब्दजीवितः सप्तमः स च । षड्विंशतिधनुस्तुङ्गो, नन्दनस्यानुजः स्मृतः ॥ ४१ ॥ इति दत्तः ॥

भरतेऽत्र क्षेमपुरे, नयदत्तवणिक्सुतौ । धनदत्तवसुदत्तौ, सुनन्दाकुक्षिसंभवौ ॥४२॥ तत्र सागरदत्तोऽभूत्, पुत्रो गुणधरोऽस्य च । पुत्री गुणवती पित्रा, धनदत्ताय सा ददे ॥ ४३ ॥ मात्रा च रत्नप्रभया, श्रीकान्ताख्याय सा ददे । वसुदत्तेन तज्ज्ञातं, याज्ञवल्क्यसुहृन्मुखात् ॥ ४४ ॥ वसुदत्तस्ततो भ्रातृस्नेहाद्गत्वाऽवधीन्निशि । श्रीकान्तं सोऽपि खड्गेन, वसुदत्तमुभौ ततः ॥४५॥ विन्ध्याटव्यां मृगौ जातावनूढा गुणवत्यपि । अभून्मृगी कृते तस्यास्तत्र युद्ध्वा मृतावुभौ ॥४६॥ युग्मम् । मिथो वैरपरावेवं, भूयसश्चक्रतुर्भवान् । धनदत्तोऽप्यभूद् भ्रातृवियोगेनोन्मना भृशम् ॥ ४७ ॥ भ्रमन्निशि मुनीन् दृष्ट्वा, क्षुधितोऽयाचताशनम् । श्राद्धीकृतस्तैः प्रज्ञाप्य, धर्मं सौधर्ममासदत् ॥ ४८ ॥ महापुरे ततश्च्युत्वा, धारणीमेरुदेहभूः । अभूत्पद्मरुचिर्नाम, श्रेष्ठी श्रावकपुङ्गवः ॥ ४९ ॥ स चैकस्यासन्नमृत्योः, परमेष्ठिनमस्क्रियाम् । वृषभस्य ददौ सोऽभूच्छत्रच्छायनृपाङ्गजः ॥ ५० ॥ दत्ताराज्ञ्याः कुक्षिजातो, नाम्ना च वृषभध्वजः । स तत्रैव पुरे भ्राम्यन्, वृषमृत्युभुवं ययौ ॥ ५१ ॥ प्राप्तश्च जातिस्मरणं, तत्र चैत्यमचीकरत् । भित्तावालेखयामास, तत्रासन्नमृतिं वृषम् ॥ ५२ ॥ परमेष्ठिनमस्कारदायिनं पुरुषं च तम् । अलीलिखत्समीपस्थसपर्याणतुरङ्गमम् ॥ ५३ ॥ श्रेष्ठी पद्मरुचिस्तच्चापश्यत्तच्चैत्यमागतः । वृषभाय नमस्कारदानं स्वं वीक्ष्य विस्मितः ॥५४॥ नियुक्तैः पुरुषैस्तत्र, पृष्टश्चोचे यथास्थितम् । मया तुरगमारुह्य, गच्छता गोकुले पुरा ॥५५॥ वृषभस्य नमस्कारो, ददे तदिह चित्रितम् । केनापि दृश्यते भित्तौ, विस्मितोऽहं तदीक्षणात् ॥ ५६ ॥ युग्मम् । ततो नियुक्तपुरुषैर्विज्ञप्तो वृषभध्वजः । पूर्वोपकारिणं पद्मरुचिमेत्य नमोऽकरोत् ॥ ५७ ॥ राज्यं मम गृहाणेदं, त्वं मे देवो गुरुः प्रभुः । इत्युक्त्वा तेन सौहार्दमद्वैतमतनोदयम् ॥ ५८ ॥ तौ श्राद्धधर्ममाराध्योत्पन्नौ स्वर्गे द्वितीयके । ततः पद्मरुचिश्च्युत्वा, मेरोरपरतोऽभवत् ॥ ५९ ॥ नन्द्यावर्त्तपुरे वैताढ्याद्रौ नन्दीश्वराङ्गजः । नाम्ना च नयनानन्दः, कनकाभातनूद्भवः ॥६०॥ युग्मम् । स राजाऽऽदाय चारित्रं, तुर्ये स्वर्गेऽभवत्सुरः । ततश्च्युत्वा क्षेमापुर्यां, प्राग्विदेहेष्ववातरत् ॥६१॥ विपुलवाहनभूपपद्मावत्योः सुतो नृपः । श्रीचन्द्रनामा प्रव्रज्य, ब्रह्मलोकेन्द्रतां ययौ ॥ ६२ ॥ ततश्च्युत्वा पद्मनामा, बलदेवोऽष्टमोऽभवत् । रामोऽपराजिताकुक्षिजातो दशरथात्मजः ॥ ६३ ॥ वृषभध्वजजीवस्तु, सुग्रीवोऽभूत्कपीश्वरः । पूर्वं कृतोपकारत्वादत्यन्तं पद्मवत्सलः ॥ ६४ ॥ श्रीकान्तोऽपि भवान् भ्रान्त्वा, मृणालकन्दपत्तने । शम्भुर्हेमवतीजातो, नृपोऽभूद्वज्रकम्बुभूः ॥ ६५ ॥ वसुदत्तस्य जीवो यः, श्रीकान्तमवधीत्पुरा । विजयस्य स पुत्रोऽभूच्छम्भुराजपुरोधसः ॥ ६६ ॥ रत्नचूडाकुक्षिजन्मा, श्रीभूतिर्नामतः स च । क्रमेण प्राप्ततारुण्यः, पितृभ्यां परिणायितः ॥ ६७ ॥ गुणवत्यथ साऽनर्थमूलं भ्रान्त्वा भवान् बहून् । पुरोधस्तनयस्यास्य, श्रीभूतेरभवत्सुता ॥ ६८ ॥ सरस्वतीकुक्षिजाता, नाम्ना वेगवतीति सा । क्रमेण ववृधे पद्मलतिकेव सरोवरे ॥ ६९ ॥ उत्तारुण्याऽन्यदा सा च, कायोत्सर्गस्थितं मुनिम् । सुदर्शनं जनैः पूज्यमानं वीक्ष्येदमभ्यधात् ॥ ७० ॥ अयं मुनिर्मया दृष्टः, क्रीडन्नङ्गनया

सम्म् । हास्यात्तयोदितोऽप्येष, कलङ्कः प्रथितो जने ॥ ७१ ॥ जग्राहाभिग्रहं सोऽपि, शासनन्यत्क्रियाभिया । उत्तीर्णेऽस्मिन् कलङ्केऽहं, पारयिष्यामि नान्यथा ॥ ७२ ॥ वेगवत्यथ सोत्सूनमुखा दैवतरोषतः । ज्ञातसाधुव्यतिकरैर्जनकाद्यैश्च भर्त्सिता ॥ ७३ ॥ अध्यक्षं सर्वलोकानामित्यूचे रचिताञ्जलिः । निर्दोषोऽप्येष निर्ग्रन्थो, धिग्मया मन्दभाग्यया ॥ ७४ ॥ अलीकदोषारोपेण, दूषितः कृतहास्यया । तत् श्रुत्वा मुदिताः सर्वे, जनास्तं मुनिमस्तुवन् ॥ ७५ ॥ त्रिभिर्विशेषकं ॥ दिव्यानुभावादुल्लाघा, साऽभवद्वेगवत्यपि । निशम्य जैनधर्मं च, श्राविकाऽभूत्तदादितः ॥ ७६ ॥ अथ वेगवतीरूपमोहितः शम्भुभूपतिः । ययाचे तत्पिता मिथ्यादृशे तस्मै ददौ न तु ॥७७॥ ततश्च शम्भुः श्रीभूतिं, हत्वा तां बुभुजे बलात् । भवान्तरेऽहं भूयासं, त्वद्वधायेति साऽशपत् ॥ ७८ ॥ मुक्ता सा शम्भुना दीक्षां, जग्राह चरणान्तिके । आर्याया हरिकान्तायाः, ब्रह्मलोकमियाय च ॥ ७९ ॥ मिथिलायां ततश्च्युत्वा, सीता नाम महासती । जाता वेगवतीजीवो, सा भामण्डलयुग्मजा ॥८०॥ रावणस्य विनाशाय, शम्भुजीवस्य साऽभवत् । मुनेर्मृषाकलङ्कस्य, दानात्तं प्राप सा स्वयम् ॥ ८१ ॥ शम्भुजीवोऽपि संसारे, भ्रामं भ्रामं द्विजोऽभवत् । पार्श्वे विजयसेनर्षेः, प्रभासाख्योऽग्रहीद्व्रतम् ॥ ८२ ॥ कनकप्रभनामानमन्यदा खेचरेश्वरम् । यान्तं सम्मेतयात्रार्थं, सोऽपश्यत्परमर्द्धिकम् ॥ ८३ ॥ ईदृक् समृद्धिर्भूयासमनेन तपसेति सः । कृत्वा निदानमुत्पन्नः, स्वर्गलोके तृतीयके ॥ ८४ ॥ ततश्च्युत्वा हरिस्वप्नसूचितः समभूत्सुतः । कैकसीकुक्षिजो रत्नश्रवसो राक्षसेशितुः ॥ ८५ ॥ भीमेन राक्षसेन्द्रेण, मेघवाहनभूभुजे । पूर्वं प्रदत्तो

यो हारो, नवमाणिक्यनिर्मितः ॥ ८६ ॥ नागानां च सहस्रेण, रक्षितो निधिराजवत् । अनीशैर्वोढुमखिलैः, पूर्वजैः पूजितः क्रमात् ॥ ८७ ॥ तं च हारं स बालोऽपि, न्यधात्कण्ठे कराहृतम् । मुखैस्तद्रत्नसंक्रान्तैः, सोऽभूद्दशमुखाह्वयः ॥ ८८ ॥ त्रैलोक्यकण्टकं चैनं, वाली निर्जित्य संगरे । वैराग्येण प्रवव्राजाकार्षीच विविधं तपः ॥ ८९ ॥ तं पुष्पकविमानाधिरूढो दशमुखो व्रजन् । अष्टापदाचलेऽपश्यत्प्रतिमास्थं स्खलद्गतिः ॥ ९० ॥ दृष्ट्वा च वालिनं क्रुद्धोऽवादीदेवं दशाननः । निर्जित्य मां भयादेव, दम्भेन व्रतमग्रहीः ॥ ९१ ॥ मां बाहुमूले निक्षिप्य, यथाऽभ्राम्यस्त्वमम्बुधीन् । तथा त्वां साद्रिमुत्क्षिप्य, लवणाब्धौ क्षिपाम्यहम् ॥ ९२ ॥ इत्युदीर्य विदार्य क्ष्मामष्टापदगिरेस्तले । प्रविश्य युगपद्विद्यासहस्रं मनसि स्मरन् ॥ ९३ ॥ धराधरं तमुद्दध्रे, चलयन्नचलातलम् । झलज्झलायितांभोधि, पतद्गिरिशिरःशतम् ॥९४॥ युग्मम् । अद्याप्ययं मयि क्रोधादनर्थं कुरुते हहा । मा भूद्भरतचैत्यानां, भ्रंशोऽन्तरिति चिन्तयन् ॥ ९५ ॥ अवधिज्ञानवान्नानालब्धिर्वाली महामुनिः । गतस्पृहः शरीरेऽपि, चैत्यत्राणाय केवलम् ॥ ९६ ॥ अपीडयत्पदाङ्गुष्ठाग्रेणाष्टापदभूमिकाम् । तेनाक्रान्तश्च भारार्त्तकन्धरो दशकन्धरः ॥९७॥ भयार्त्तः संकुचद्गात्रो, रावयन् सकलां महीम् । आरावीद्भृशमाक्रन्दैस्ततोऽभूद्रावणाह्वयः ॥९८॥ चतुर्भिः संनिदानकम् । अभूतां सोदरावस्य, भानुकर्णबिभीषणौ । स्वसा चन्द्रणखा पट्टराज्ञी मन्दोदरीति च ॥९९॥ भानुकर्णस्य कुम्भकर्ण इति चन्द्रणखायाः सूर्पणखेति च नामान्तरं ॥ धनदत्तवसुदत्तसुहृद् यो ब्राह्मणः पुरा । आसीन्नाम्ना याज्ञवल्क्यः, क्रमात्सोऽभूद्बिभीषणः ॥ ३०० ॥ निहतः शम्भुना राज्ञा, श्रीभूतिर्यः पुरोहितः ।

शुभध्यानात्स चोत्पेदे, स्वर्गे च्युत्वा ततोऽभवत् ॥ १ ॥ सुप्रतिष्ठपुरे विद्याधरो नाम्ना पुनर्वसुः । द्वासप्ततिकलाशाली, चतुरः सुभगः सुधीः ॥ २ ॥ युग्मं ॥ स चैकदा त्रिभुवनानन्दस्य चक्रवर्त्तिनः । सुतां कामवशो जह्रे, नामतोऽनङ्गसुन्दरीम् ॥ ३ ॥ पुण्डरीकाख्यविजयाद्, गच्छन्निजपुरीं प्रति । चक्रभृत्प्रहितैर्विद्याधरैः स रुरुधे युधे ॥ ४ ॥ विद्यास्त्रैर्विविधैर्नागतार्क्ष्याम्भोदानिलादिभिः । एतस्य युद्ध्यमानस्य, वैराग्यात्स्वविमानतः ॥ ५ ॥ क्वचिद्वननिकुञ्जे सा, पपातानङ्गसुन्दरी । विरराम ततो युद्धाद्विरक्तात्मा पुनर्वसुः ॥६॥ युग्मम् । समुद्रगुरुपादान्ते, ततः स्वीकृत्य संयमम् । काश्यां गतोऽन्यदाऽकार्षीन्निदानमिति चेतसा ॥ ७ ॥ अभविष्यं भवेऽस्मिंश्चेच्चक्रिणोऽर्द्धबलोऽप्यहम् । तन्मत्तश्चक्रिसैन्यार्त्याऽयास्यन्नानङ्गसुन्दरी ॥ ८ ॥ भवान्तरेऽपि भूयासं, तपसाऽनेन तादृशः । तथा प्राणप्रिया भूयात्, सैषा मेऽनङ्गसुन्दरी ॥९॥ त्रिभिर्विशेषकम् । पुनर्वसुस्ततो जातः, सुरः स्वर्गे तृतीयके । चारित्रोपार्जितं तत्र, बुभुजे शं यथास्थिति ॥ १० ॥ अतितीव्रं तपोऽकार्षीद्वनस्थाऽनङ्गसुन्दरी । विहितानशना चान्ते, जग्रसेऽजगरेण सा ॥ ११ ॥ ततः समाधिना मृत्वा, देवलोके तृतीयके । सुरत्वेन समुत्पेदे, बुभुजे चाद्भुतं सुखम् ॥ १२ ॥ इतश्च—नैमित्तिकोक्त्या स्ववधं, ज्ञात्वा दशरथात्मजात् । प्रैषीद्दशरथं हन्तुं, दशग्रीवो बिभीषणम् ॥ १३ ॥ नारदर्षिर्दशरथभूभुजे द्राक् सधर्मणे । अजिज्ञपद्दशग्रीवसंसद्याकर्ण्य तां कथाम् ॥ १४ ॥ श्रुत्वा दशरथोऽप्येवमयोध्याया विनिर्ययौ । समर्प्य मन्त्रिणे राज्यं, वेशान्तरतिरोहितः ॥ १५ ॥ मूर्त्तिं दशरथस्याथ, कृत्वा लेपमयीं सुधीः । वेश्मन्यस्थापयन्मन्त्री, राज्ञः प्रख्यापयन् रुजम् ॥ १६ ॥ बिभीषणोऽपि

तत्रैत्य, संरंभात्तमसि स्थिताम् । तन्मूर्त्तिं लेप्यजां हत्वा, कृतकृत्यो न्यवर्त्तत ॥ १७ ॥ अथो दशरथो भ्राम्यन्नयासीदुत्तरापथे । स्वयंवरोत्सवोद्रङ्गे, द्रङ्गे कौतुकमङ्गले ॥ १८ ॥ पतिंवरां पर्यणैषीद्राज्ञः शुभमतेः सुताम् । अद्भुतां तत्र कैकेयीं, द्रोणमेघसहोदरीम् ॥१९॥ युग्मम् । अस्मासु सत्सूद्वहति, कन्यां कार्पटिकः कथम् ? । इतीर्ष्यया प्रवधृते, योद्धुं शेषनृपव्रजः ॥ २० ॥ कैकेय्या सारथित्वेन, कृतसाहायको नृपः । प्रतिपक्षान् पराजिग्ये, कैकेय्यै च वरं ददौ ॥ २१ ॥ कैकेयीं परिणीयाथ, बलैनैकैर्महाबलः । जग्राह नगरं राजगृहं निर्जित्य तत्प्रभुम् ॥ २२ ॥ लङ्केश्वरभयात्तत्र, तस्थुषोऽस्य महीपतेः । चतुर्दिग्जैत्रदोर्वीर्याश्चत्वारोऽथाभवन् सुताः ॥ २३ ॥ तत्रापराजिता देवी, हर्यक्षेभेन्दुभास्करैः । तनयं सूचितं स्वप्नैर्बलं पद्ममजीजनत् ॥ २४ ॥ स्वर्गात्सनत्कुमाराख्याच्च्युत्वा जीवः पुनर्वसोः । समुत्पेदे सुमित्रायाः, कुक्षावक्षामभाग्यभूः ॥ २५ ॥ सिंहेभसूर्यचन्द्राग्निश्रीवार्द्धिस्वप्नसूचितम् । नारायणाभिधं विष्णुं, सुमित्रा सुषुवे सुतम् ॥ २६ ॥ सुतं चासूत कैकेयी, भरतं भरतोपमम् । प्रासूत सुप्रभा पुत्रं, शत्रुघ्नं शत्रुखण्डनम् ॥ २७ ॥ जीवोऽथानङ्गसुन्दर्याश्च्युत्वा कल्पात्तृतीयकात् । पत्न्यां प्रियङ्करानाम्न्यां, द्रोणमेघस्य भूपतेः ॥ २८ ॥ सुताऽभवद्विशल्याख्या, मातुर्व्याधिं चिरंतनम् । या जहारागता गर्भे, जाता सा निरुपद्रवा ॥ २९ ॥ युग्मम् । प्राक्तनस्तपसोऽमुष्याः, स्नानाम्भोभिर्जनेऽभवत् । व्रणसंरोहणं शल्यापहारो रोगसंक्षयः ॥ ३० ॥ राज्याभिषेकायाहूतं, रामं दशरथोऽप्यथ । विससर्ज वनायाऽऽर्त्तः, कैकेयीवरयाच्ञया ॥ ३१ ॥ सह लक्ष्मणसीताभ्यां, पद्मस्य वनमीयुषः । जहार रावणः सीतां, छलात्सूर्पणखो-

दिताम् ॥३२॥ ज्ञातसीताव्यतिकरौ, पद्मनारायणावथ । विद्याधराधिपैर्नैकैः सुग्रीवादिभिराश्रितौ ॥३३॥ गत्वा नभोऽध्वना लङ्कां, मानिना दशमौलिना । योद्धुं प्रववृताते तौ, शत्रुप्राणापहारिणौ ॥३४॥ युग्मम् । अथात्यन्तं हितोऽवादीद्दशवक्त्रं बिभीषणः । मन्त्र्यादिभिर्हितैर्नीतिशास्त्रविज्ञैः समन्वितः ॥ ३५ ॥ कार्षीदनीतिं मा भ्रातर्द्राक् प्रत्यर्पय जानकीम् । आतिथेयीयमेवास्तु, रामस्याभ्यागतस्य नः ॥३६॥ युग्मम् । यम एवास्य मच्छत्रोरातिथेयीं करिष्यति । एतद्गृह्यो वदन्नेवं, त्वमप्येनमनुव्रज ॥ ३७ ॥ इति निर्भर्त्सितो बाढं, भ्रात्रा दुर्नयकारिणा । रामं बिभीषणो न्याय्यं, शिश्राय प्राग्जनुःसुहृत् ॥ ३८ ॥ जायमानेऽथ संग्रामे, दशमौलिर्बिभीषणम् । हन्तुं युद्ध्यन्तमक्षैप्सीच्छक्तिं सद्योऽरिघातिनीम् ॥ ३९ ॥ सौमित्रिमवदद्रामस्तदाऽयं हन्यते हहा । बिभीषणः संश्रितोऽस्मान्, धिग् नः संश्रितघातिनः ॥ ४० ॥ लक्ष्मणः पुरतो गत्वा, पृष्ठे कृत्वा बिभीषणम् । आचिक्षेप दशग्रीवं, क्रुद्धः सोऽप्येवमाह तम् ॥ ४१ ॥ नोत्क्षिप्ता शक्तिरेषा त्वत्कृते किं म्रियसे मुधा ? । अन्यस्य मृत्युना यद्वा, मार्य एव त्वमप्यसि ॥ ४२ ॥ तया च भिन्नहृदयः, सौमित्रिर्भूतलेऽपतत् । मूर्च्छितो मृतवत्पद्मसैन्ये शोको महानभूत् ॥ ४३ ॥ पद्मं बिभीषणोऽथोचे, किमधैर्यमिदं प्रभो ! । शक्त्याऽनया हतो रात्रिमेकां जीवति यत्पुमान् ॥ ४४ ॥ प्रतीकाराय तेनास्याः, सर्वथा प्रयतामहे । पद्माद्योऽपि चक्रुस्तांस्तेऽभवन् किंतु निष्फलाः ॥ ४५ ॥ पद्मे निराशे खिन्नेऽथ, प्रतिचन्द्राभिधो निशि । एत्य विद्याधरोऽवादीत्सौमित्रेर्जीवनौषधम् ॥ ४६ ॥ विशल्यास्नाननीरेणाभूवं शल्योज्झितः पुरा । तत्कार्यसिद्धिर्युष्माकं, तेनावश्यं भविष्यति ॥ ४७ ॥ अस्ति मातुलपुत्री सा, भरतस्य महीपतेः । ततो युष्मदधीनैव, द्रोणमेघनृपात्मजा ॥ ४८ ॥ ततो भामण्डलहनूमदाद्याः खेचरेश्वराः । लब्धोपाया विमानेन, द्राग्जग्मुर्निशि कोशलाम् ॥ ४९ ॥ भरतं च पुरस्कृत्य, पुरे कौतुकमङ्गले । गत्वा द्रोणमयाचन्त, विशल्यां कन्यकां ततः ॥ ५० ॥ सह कन्यासहस्रेण, ददौ सौमित्रये तदा । विशल्यां द्रोणमेघो यद्रत्नं रत्नेन योज्यते ॥ ५१ ॥ समादाय विशल्यां ते, निशाशेषेऽथ खेचराः । पद्मं पश्यन्तमध्वानं, दीनाननममूमुदन् ॥ ५२ ॥ विशल्यापाणिसंस्पर्शाल्लक्ष्मणस्याङ्गतो द्रुतम् । निरगात्सा महाशक्तिर्मन्त्रान्नागीव वेश्मतः ॥ ५३ ॥ हनूमता सा निर्यान्ती, धृता हस्तेऽब्रवीदिति । अमोघविजयाख्याऽहं, महाशक्तिर्महामते ! ॥ ५४ ॥ धरणेन्द्रेण दत्ताऽस्मै, रावणायोग्रभक्तये । प्रज्ञप्त्या भगिनी देवस्यापि लग्ना सुदुःसहाः ॥ ५५ ॥ विशल्यया भवे पूर्वे, कृतानां तपसां महत् । तेजः सोढुमनीशाऽस्मि, द्रुतं गच्छामि मुञ्च माम् ॥ ५६ ॥ पटूभूतोऽथ सौमित्रिः, प्रातः पद्मानुशासनात् । सह कन्यासहस्रेणोद्वहति स्म विशल्यकाम् ॥ ५७ ॥ पुनः प्रवृत्ते संग्रामे, सौमित्रिदशकण्ठयोः । मुमोच रावणश्चक्रं, लक्ष्मणस्य जिघांसया ॥ ५८ ॥ तत्तु प्रदक्षिणां कृत्वा, सौमित्रेर्दक्षिणं करम् । अलङ्चक्रे वशीभूतं, चिरपालितपक्षिवत् ॥५९॥ सचक्रं चूर्णयिष्यामीत्युन्मायन्तं दशाननम् । चक्रे तेनैव चक्रेण, विष्णुः पाटितवक्षसम् ॥ ६० ॥ ततश्च ज्येष्ठबहुलैकादश्यामपराह्णके । यामे तृतीये नरकं, चतुर्थं रावणो ययौ ॥ ६१ ॥ लङ्काराज्येऽभिषिच्याथ, पद्मराजो बिभीषणम् । सीतामादाय सौमित्रिसेवितः कोशलां ययौ ॥ ६२ ॥ तत्र त्रिखण्डभूपालैरभिषिक्तः

सुरैरपि । लक्ष्मणो वासुदेवत्वे, बलत्वे पद्मभूपतिः ॥ ६३ ॥ द्वादशाब्दसहस्त्रायुस्तुङ्गश्चापानि षोडश । अष्टमो वासुदेवोऽयमुक्तः पद्मानुजः श्रुते ॥ ६४ ॥ इति लक्ष्मणः ॥

गङ्गदत्तो वणिग्मातुरपमानाद्विरागवान् । द्रुमसेनर्षिपादान्ते, प्रव्रज्यां प्रतिपन्नवान् ॥ ६५ ॥ निदानं चक्रुवानेवं, सोऽन्यदा हस्तिनापुरे । भूयासं तपसाऽनेन, जनानां वल्लभो भृशम् ॥ ६६ ॥ ततः स्वर्गे महाशुक्रे, स संजातः समाधिना । वृन्दारको महासौख्यो, महाकान्तिर्महास्थितिः ॥ ६७ ॥ इतश्च मथुरापुर्यां, हरिवंशे नृपोऽभवत् । बृहद्बलाह्वयस्तस्य, तनयो यदुसंज्ञकः ॥ ६८ ॥ तत्सुतो भूपतिः शूरस्तस्याभूतामुभौ सुतौ । नृपौ शौरिसुवीराख्यौ, जाग्रन्नीतिपराक्रमौ ॥ ६९ ॥ शूरः शौरिं न्यस्य राज्ये, व्रते प्रववृते स्वयम् । ततः शौरिः कनिष्ठाय, मथुराराज्यमार्पयत् ॥ ७० ॥ स्वयं कुशार्त्तदेशेषु, चक्रे शौरिः पुरं नवम् । जज्ञिरेऽन्धकवृष्ण्याद्यास्तनयाः शौरिभूपतेः ॥ ७१ ॥ भोजवृष्ण्यादयोऽभूवन्, सुवीरनृपतेः सुताः । न्यवीविशन्नवीनं च, स सौवीराख्यपत्तनम् ॥ ७२ ॥ भोजवृष्णिमहीनेतुर्मथुरानगरीपतेः । उग्रसेनोऽभवत्पुत्रो, योऽसौ राजीमतीपिता ॥ ७३ ॥ नृपस्यान्धकवृष्णेश्च, सुभद्राकुक्षिसंभवाः । दशाभूवंस्तनुभुवो, दशार्हा इति ये श्रुताः ॥ ७४ ॥ समुद्रविजयो १ ऽक्षोभ्य २, स्तिमितः ३ सागरस्तथा ४ । हिमवा ५ नचलाभिख्यो ६, धरणः ७ पूरणोऽपि च ८ ॥ ७५ ॥ अभिचन्द्रो ९ वसुदेव १० स्तेषु प्राच्यनिदानतः । वसुदेवोऽतिसौभाग्यात्, स्त्रीणामासीदतिप्रियः ॥ ७६ ॥ गङ्गदत्तस्य जीवोऽयमष्टमाद्देवलोकतः । स्थितिक्षये ततश्च्युत्वा, मथुरायां महापुरि



॥ ७७ ॥ वसुदेवस्य भूपस्य, देवकीकुक्षिजोऽङ्गजः । कृष्णाख्यो वासुदेवोऽभून्नवमोऽनवमद्युतिः ॥ ७८ ॥ रामाख्यो बलदेवोऽभूद्रोहिणीकुक्षिसंभवः । अस्य भ्राता विमात्रेयः, परमप्रीतिभाजनम् ॥ ७९ ॥ अयं श्रीनेमिनाथस्य, पितृव्यतनयः स्मृतः । यतः समुद्रविजयवसुदेवौ सहोदरौ ॥ ८० ॥ अयं वर्षसहस्त्रायुर्दशचापोच्छ्रितोऽभवत् । बिभ्रत् क्षायिकसम्यक्त्वं, श्राद्धो नेमिजिनेशितुः ॥ ८१ ॥ इति कृष्णः ॥

पञ्चाशीतिर्वत्सराणां, लक्षाण्याद्यस्य जीवितम् । द्वितीयस्यायुरब्दानां, लक्षाणि पञ्चसप्ततिः ॥ ८२ ॥ पञ्चषष्टिस्तृतीयस्य, वर्षलक्षाणि जीवितम् । तुर्यस्य पञ्चपञ्चाशद्वर्षलक्षास्तदीरितम् ॥ ८३ ॥ लक्षाण्येवं सप्तदश, पञ्चमस्यायुरद्भुतम् । षष्ठस्याब्दसहस्त्राणि, पञ्चाशीतिर्भवेदिदम् ॥ ८४ ॥ पञ्चषष्टिः सहस्त्राणि, वर्षाणां सप्तमस्य तत् । वत्सराणां पञ्चदश सहस्त्राण्यष्टमस्य च ॥ ८५ ॥ शतानि द्वादशाब्दानां, नवमस्यायुरीरितम् । नवानां बलदेवानां, क्रमः प्रोक्तोऽयमायुषाम् ॥ ८६ ॥ बलदेवास्त्रयश्च्युत्वाऽनुत्तराख्यविमानतः । जातास्त्रयो महाशुक्राद्ब्रह्मलोकात्त्रयः क्रमात् ॥ ८७ ॥ विश्वनन्दिः १ सुबुद्धिश्च २, तथा सागरदत्तकः ३ । अशोको ४ ललित ५-श्चैव, वराह ६ धनसेनकौ ७ ॥८८॥ तथाऽपराजितो ८ राजललित ९ श्चेति तीर्थपाः । नामानि बलदेवानां, स्वर्गात्प्राच्यभवे जगुः ॥ ८९ ॥ युग्मम् । बलदेवा ययुर्मुक्तिपदमष्टौ यथाक्रमम् । दशाब्धिजीवितोऽन्त्यश्च, ब्रह्मलोके सुरोऽभवत् ॥ ९० ॥ उत्सर्पिण्यां भविष्यन्त्यां, ततश्च्युत्वाऽत्र भारते । भाविनः कृष्णजीवस्यार्हतस्तीर्थे स सेत्स्यति ॥ ९१ ॥ सप्तम्यां प्रथमो विष्णुः, षष्ठ्यां पञ्च गताः क्रमात् । पञ्चम्यां च चतुर्थ्यां च, तृतीयायां क्षितौ

परे ॥ ९२ ॥ विष्णवो बलदेवाश्च, सर्वे गौतमगोत्रजाः। पद्मनारायणौ तु द्वौ, ज्ञेयौ काश्यपगोत्रजौ ॥ ९३ ॥ पश्चाभूवंस्त्रिपृष्ठाद्या, वारेषु हरयः क्रमात् । श्रेयांसस्वामिमुख्यानां, पञ्चानामर्हतामिह ॥ ९४ ॥ अन्तराले च षष्ठोऽभूदरनाथसुभूमयोः। सप्तमोऽप्यन्तरालेऽभूत्, सुभूममल्लिनाथयोः ॥ ९५ ॥ मुनिसुव्रतनम्योश्चान्तराले रामलक्ष्मणौ । श्रीनेमिजिनवारे च, कृष्णोऽभून्नवमो हरिः ॥ ९६ ॥ तथोक्तं-दो तित्थेस सचक्कि १, २ अट्ठ य जिणा १० तो पञ्च केसीजुआ ५, १५, दो चक्काहिव ३, ४ तिन्नि चक्कियजिणा १६/५, १७/६, १८/७ तो केसि ६ चक्की ८ हरी ७। तित्थेसो इगु तो १९ सचक्कि य ९ जिणो २० केसी ८ सचक्की १० जिणो २१, चक्की ११ केसव ९ संजुओ जिणवरो २२ चक्की य १२ तो दो जिणा २३, २४ ॥ १ ॥ चक्रिवासुदेवयोश्च क्रममेवमाहुः—“चक्किदुगं हरिपणगं पणगं चक्कीण केसवो चक्की । केसव चक्की केसव दुचक्कि केसी य चक्की य॥ ९७॥” त्रयोऽर्हन्तश्चक्रिणो यच्चान्त्योऽर्हत्पदद्वयम् । द्यौ द्वाभ्यां शरीराभ्यां, तीर्थकृद्वासुदेवयोः ॥ ९८ ॥ तदस्यामवसर्पिण्यां, षष्टिर्देहाः प्रकीर्त्तिताः । त्रिषष्टेः शलाकापुंसामेकोनषष्टिरङ्गिनः ॥ ९९ ॥

भीमावलि १ जितशत्रुः २, रुद्रो ३ विश्वानलोऽपि ४ च। सुप्रतिष्ठः ५ पञ्चमः स्याद्, भवेत् षष्ठोऽचलाह्वयः ६ ॥ ४०० ॥ पुण्डरीको ७ जितधरो ८, जितनाभ ९ स्तथाऽपरः । पेढालः १० सत्यकिश्चेति ११, रुद्रा एकादशोदिताः ॥ १ ॥ गतौ रुद्रावादितो द्वौ, सप्तमीं नरकावनीम् । ततः क्रमात्पञ्च षष्ठीमष्टमः पञ्चमीं भुवम् ॥ २ ॥ तुर्यां च नवमदशमौ, तृतीयां नरकक्षितिम् । एकादशो जगामेति, नवमे पूर्व ईरितम् ॥ ३ ॥ आद्यो वृषभवारेऽभूद्, द्वितीयोऽजितवारके । अष्टानामर्हतां तीर्थेष्वष्टौ च पुष्पदन्ततः ॥ ४ ॥ एकादशः सत्यकिश्च, तीर्थे वीरजिनेशितुः । तीर्थव्यक्तिः प्रतिहरिबलानां वासुदेववत् ॥ ५ ॥ त्रिषष्टिरेते कथिताः शलाकापुमांस ऐश्वर्यगुणाभिरामाः । क्षेत्रे किलास्मिन् भरतेऽत्र कालेऽवसर्पिणीनामनि नाममात्रात् ॥ ६ ॥ ( उपजातिः ) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, संपूर्णः प्रथितो निसर्गसुभगः सर्गस्त्रयस्त्रिंशता ॥ ४०७ ॥

॥ इति महोपाध्यायश्रीविनयविजयगणिविरचिते श्रीलोकप्रकाशे-
काललोकप्रकाशे त्रयस्त्रिंशत्तमः सर्गः समाप्तः ॥

इति श्रेष्ठि-देवचन्द-लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः ७८.

इति श्रीमहोपाध्यायकीर्तिविजयशिष्य–महोपाध्यायश्रीमद्विनयविजयगणिविरचिते
लोकप्रकाशे–काललोकप्रकाशे त्रयस्त्रिंशत्तमः सर्गः समाप्तः ॥

इति श्रेष्ठि–देवचन्द–लालभाई–जैनपुस्तकोद्धारे–ग्रन्थाङ्कः ७८.


## शेठ देवचन्द लालभाई–जैन पुस्तकोध्धार फण्ड.




जह्वेरी बजार–मुंबई. संवत १९७६. ब्रांच गोपीपुरा–सुरत.

१००००–८–२० जैन ए. प्रि. प्रेस–सुरत

# शेठ देवचंद लालभाई जैन पुस्तकोध्धार फंड

तथा

# श्री आगमोदय समिति.




जव्हेरी बजार–मुंबई.

गोपीपुरा–सुरत.

१००००–१–७–१९२९.

बायंडरः–श्रीकृष्ण रुलींग प्रेस.

मुस्तफा मारकेट मुंबई नं. ३.

श्रेष्ठि देवचन्दलालभाई जैनपुस्तकोद्धारे ग्रन्थाङ्कः ७४.

श्रीमहोपाध्यायकीर्तिविजयशिष्य–महोपाध्याय–श्रीविनयविजयगणयुपज्ञः

# श्रीलोकप्रकाशः ।

## ( द्वितीयविभागे–सप्तविंशतिसर्गान्तः क्षेत्रलोकप्रकाशः )

मुद्रणकारिका–श्रेष्ठि–देवचन्द–लालभाई–जैनपुस्तकोद्धारसंस्था ।

प्रसिद्धिकारकः–जीवनचन्द–साकरचन्दः जव्हेरी, अस्याः कार्यवाहकः ।

इदं पुस्तकं मोहमय्यां जीवनचन्द-साकरचन्द जव्हेरी इत्यनेन

निर्णयसागरयन्त्रणालये कोलभाटवीथ्यां २६–२८ तमे रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसम्वत् २४५४. विक्रमसंवत् १९८४. सने १९२८.

प्रति १००० ] पण्यम् रु. २–८–० [ Rs. 2-8-0